# रूपमालाविमर्शः

(श्रीमत्परमहंस-परिव्राजकाचार्य-विमलसरस्वतीविरचितायाः-
रूपमालायाः विवेचनात्मकमध्ययनम्)

सम्पादकश्च

**डॉ० सुरेश चन्द्र शर्मा**

**नाग प्रकाशक**

# रूपमालाविमर्शः

( श्रीमत्परमहंस-परिव्राजकाचार्य-विमलसरस्वतीविरचितायाः -
रूपमालायाः विवेचनात्मकमध्ययनम् )

# रूपमालाविमर्शः

( श्रीमत्परमहंस-परिव्राजकाचार्य-विमलसरस्वतीविरचितायाः -
रूपमालायाः विवेचनात्मकमध्ययनम् )

लेखकः
सम्पादकश्च

**डॉ० सुरेश चन्द्र शर्मा**

व्याकरणाचार्यः, एम० ए०, विद्यावारिधिः (पी एच० डी०)

**नाग प्रकाशक**

११- ए (यू.ए.) जवाहर नगर, दिल्ली - ११०००७

( भारत )

The Publication has been brought out with the financial assistance from Rashtriya Sanskrit Sansthan, New Delhi.

**नाग प्रकाशक**

(१) ११ए-यू. ए, जवाहर नगर, दिल्ली - ११०००७

(२) संस्कृत भवन, १२, १५ फ्लेट, संस्कृत नगर, प्लाट न० ३, सेक्टर १४, रोहिणी, नयी दिल्ली ११००८५

(३) जलालपुरमाफी (चुनार-मिर्जापुर) उ० प्र०



ISBN 81 - 7081 - 294 - 1

प्रथम संस्करण

१९९४

मूल्य : Rs. ६८-००

श्री सुरेन्द्र प्रताप द्वारा नाग प्रकाशक, ११ ए., यू. ए., जवाहर नगर, दिल्ली द्वारा प्रकाशित तथा जी. प्रिंट प्रासेस, ३०८/२, शहजादा बाग, दया बस्ती, दिल्ली ११००३५ में मुद्रित।

Laser type Setting :

Mohan Computer Point

8-A (U.A./3), Jawahar Nagar, Delhi - 110007. Ph : 2918876

# प्राक्कथनम्

इदन्नाविदितं कस्यापि यत् सम्प्रति नव्यव्याकरणस्याध्ययनाध्यापनविधौ पाठ्यमानेषु विविधग्रन्थेषु "सिद्धान्तकौमुदी" इत्याख्य-प्रक्रियाग्रन्थ एव लब्धप्रचरः स्वीयैः कैश्चित् वैशिष्ट्यैः मूर्धन्यतामधिरोहति ! परन्तु नायं प्रक्रियाक्रमस्य मौलिको ग्रन्थः, अपितु प्रक्रियाक्रमस्याविर्भावकः ग्रन्थः धर्मकीर्तिकृतः रूपावतारः। अस्य प्रक्रियाक्रमस्य बीजनिर्वापणे विकासे च रूपावतारानन्तरं विमलसरस्वतीविरचितायाः रूपमालायाः महत्वपूर्णं स्थानम्। तथ्यमिदं मया अध्ययनकाले व्याकरणशास्त्रस्यैतिहासिकतत्वानामनुशीलनं कुर्वता परिज्ञातम्। अनन्तरं शब्दशास्त्रविषयकाणां विविधग्रन्थानां निबन्धानां चावलोकनेनेदमपि विज्ञातं यत् सिद्धान्तकौमुदीप्रभृतीन् अन्यान् प्रक्रियाग्रन्थानाश्रित्य नैकैः विद्वद्भिः विविधाः गवेषणात्मकाः प्रबन्धा विरचिताः। किन्तु व्याकरणशास्त्रे प्रक्रियापरम्परायाः प्रमुखग्रन्थेषु "रूपमाला" इत्येक एव मौलिकग्रन्थोऽवशिष्यते, यद्विषयेऽद्यावधि केनापि समालोचनात्मकं कार्यं न कृतम्। एतत्सर्वं विचार्यावशिष्टमिदं कार्यं प्रपूरयितुं रूपमालाया एव सम्यग् विवेचनमावश्यकमित्यन्वभूवम्। अतः गङ्गानाथ झा-केन्द्रीय-संस्कृतविद्यापीठे विद्यावारिधिः (पी-एच० डी०) इत्युपाधये शोधच्छात्ररूपेण प्रविष्टेन मया शोधकार्यार्थमयमेव प्रक्रियाग्रन्थोऽवचितः। रूपमाला बहुकालं यावदप्रकाशितैवासीत्। सर्वप्रथमं १९७० ई० वर्षे वाराणसीतः पं० मुरलीधरमिश्रमहाभागैः सम्पादिता प्रकाशिता च। विमलसरस्वतीभिः पाणिनीयशास्त्रोल्लङ्घनपराणां लोके प्रयुज्यमानानां शब्दानां मुग्धबोधकातन्त्रादिव्याकरणनियमानङ्गीकृत्य इत्येके इति केचिदित्येवं रीत्या यत्साधुत्वं प्रतिपादितम्, तच्च तेषां व्याकरणशास्त्रे तुलनात्मकशैलीमुन्मीलयति।

प्रस्तावितस्यास्य शोधप्रबन्धस्य सम्पादने ततः प्राग्वर्तिनि अध्ययनकाले यैः महानुभावैः साहाय्येनाहमुपकृतः तान् प्रति आत्मन अधमर्णतां प्रकटयन् सर्वप्रथमं प्रयागस्थ-गङ्गानाथ- झाकेन्द्रीयसंस्कृतविद्यापीठस्य प्राचार्यपदमलङ्कुर्वाणानां प्राच्यपश्चात्यविद्यानिष्णातानां श्रीमतां डॉ० गयाचरणत्रिपाठिमहाभागानां कृते हार्दिकान् आभारान् प्रकाशये। यैः विद्यापीठे शोधकार्यार्थं प्रवेशदानेन अन्येन च बहुविधेन सहयोगेन अहमनुगृहीतः।

मदीयस्यास्य शोधकार्यस्य निर्देशकत्वं निर्वहतां व्याकरण-साहित्यज्योतिषाद्यनेकशास्त्रमर्मविदुषां गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यपीठे प्रवक्तृपदमलङ्कुर्वाणानां श्रीमतां डा० शिवकुमारचतुर्वेदीमहाभागानां कृते हार्दिकीं कृतज्ञतां प्रकटये। येषामत्यन्तं स्नेहेनाभिनवया प्रेरणया, सूक्ष्मतमनिर्देशनेन च मदीयोऽयं निबन्धः पारं प्रापितः।

एवमेवास्माकं गुरुवर्याणां व्याकरण-साहित्य-वेदान्ताद्यनेकशास्त्र-पारङ्गतानां मैनपुरीस्थ-एकरसानन्द-संस्कृत-महाविद्यालये व्याकरणविभागाध्यक्ष-पदमधितिष्ठतां श्रीमतां केशवदेवतिवारीमहोदयानां हार्दिकेमधमर्णतामावहामि। तेषां चरणयोश्चात्यन्तविनतभावेन सादरं सबहुमानं बहुशः प्रणमामि, अध्ययनकालादेव येषां मयि महती कृपा आसीत्। तैः

शास्त्रीयाणां ग्रन्थानां स्नेहेन अध्यापनेन अन्येन च साहाय्येनाहमुपकृतः। अथ चास्मिन् शोध कार्ये मर्मस्थलानां निर्वचनेन, निबन्धसंशोधनेन च विशेषेण मामकीन उपकारः कृतः।

ततः एकरंसानन्द-संस्कृतमहाविद्यालये प्राचार्यपदमलङ्कुर्वतः, शास्त्रीयग्रन्थानां स्नेहेनाध्यापनेन सत्प्रेरणया च माम् प्रोत्साहयतः गुरुचरणान् श्री रवीन्द्रनाथपन्तममहाभागान् प्रति आत्मनः हार्दिकीं कृतज्ञतां विज्ञापये। यैः समये समये स्वकीयेन सत्परामर्शेन मदीयेऽस्मिन् शोधकार्ये महत्साहाय्यं कृतम्।

मैंनपुरीस्थ-एकरसानन्दसंस्कृतपुस्तकालयस्य गङ्गानाथझासंस्कृत विद्यापीठपुस्तकालयस्य च ग्रन्थपालैः, वाराणसीस्थ चौखम्वासुरभारतीप्रकाशनस्याध्यक्षैः समये समये विविधविषयकान् ग्रन्थान् प्रदाय यदस्माकं साहाय्यं कृतं तदर्थं तेषु धन्यवादान् वितरामि।

नवदिल्लीस्थ - राष्ट्रियसंस्कृतसंस्थानेन प्रबन्धस्यास्य मुद्रणायांशिकमार्थिकं साहाय्यं प्रदत्तमिति तत्रत्येभ्योऽधिकारिभ्यः साधुवादान् वितरामि। सुरभारतीग्रन्थप्रकाशनविशेषज्ञो दिल्लीस्थ - नागप्रकाशनस्याध्यक्षमहाभागोऽपि धन्यवादार्हः, येन समुचितं मुद्रणं विधायैतस्य ग्रन्थस्य प्रकाशनं विहितम्। अत्र कियत्साफल्यमधिगतं मयेत्यत्र तु विद्वांसः प्रेक्षका एव प्रमाणम्। प्रमादेनात्र काश्चन त्रुटयः स्युस्ताः संशोध्य गृहीतव्या विद्वद्भिस्तदर्थं संसूचनीयोऽप्ययं जन इति शम्।

मकरसङ्क्रान्तिः २०५० वि०

**विदुषामाश्रव :**

**सुरेशचन्द्रशर्म**

# प्रस्तावना

व्याकरणाध्ययनपरम्म्परायां द्विविधा शैली दृष्टिपथमायाति-पाणिनीयाष्टकक्रमेण प्रक्रियाक्रमेण च। तत्र प्रक्रियाक्रमसाध्ययनाध्यापनपरम्परायां सर्वेषां पाणिनीयसूत्राणां व्याख्यानभूता भट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुद्यैव चरमा, अत्यन्तं परिपूर्णेत्यत्र नास्ति कश्चिदपि संशीतिलेशः। क्रमस्यास्य प्रादुर्भावो विकासश्च कथं जात ? इत्यवधीयमाने रूपावताराद्यनेकग्रन्थानां नामानि अस्माकं पुरतः समायान्ति। तेष्वेव श्रीमत्परमहंसपरिव्राजकाचार्यविमलसरस्वती प्रणीता रूपमालाभिधा रचना अस्ति। यास्यामष्टाध्यायीक्रममपहाय प्रक्रियाक्रमस्याश्रयणं वृतम्। क्रमे चास्मिन् कस्याप्येकस्य प्रयोगस्य साधनाय साधारण्येन यावन्ति सूत्राणि अपेक्ष्यन्ते, तावन्ति समाहृत्यैकत्रैव समगृह्यन्त। प्राधान्येनास्यां प्रणाल्यां शब्दा एवाश्रिताः। शब्द-क्रमस्तत् साधनक्रमश्चास्या उद्भावकः। यतो ह्येकस्य मध्वत्र "त्यस्य प्रयोगस्य साधनसम्पत्तये" इको यणचि, स्थानेऽन्तरतमः, स्थानिवदादेशोऽनल्विधौ, अनचि च इत्याद्यनेकाध्यायस्थ-सूत्राणामेकस्मिन् सन्दर्भे सङ्ग्रहः। निदर्शनमेतत् सर्वेषां तत्तत्प्रयोगसाधनाय सूत्रसमाहाराणाम्।

तत्रास्याः प्रक्रियायाः क्रमस्योद्भवो धर्मकीर्तिविरचितरूपावतारग्रन्थाज्जात इति प्रतीयते। न हि ततः पूर्वं प्रक्रियाक्रममाश्रित्य निर्मितः पाणिनीयपरम्परायां कश्चिद् ग्रन्थोऽद्य समुपलभ्यते। ग्रन्थोऽयं जयादित्यवामनाभ्यां कृतां काशिकावृत्तिमनुसरति। प्रमाणैरनेकैरस्य ग्रन्थस्य निर्माणकालः द्वादशशतकः दशशतको वेति रूपावतारस्य प्रस्तावनायां विनिश्चितः। रामचन्द्रकृत-प्रक्रियाकौमुद्याःकालः पञ्चदशशतक इति भाण्डारकररामकृष्णादिभिरनेकैः प्रमाणैर्निर्धारितः।

अस्मिन्नेव क्रमे विमलसरस्वतीकृतरूपमालायाः कालः चतुर्दशशतक इति पं० युधिष्ठरमीमांसकेन निर्धारितः। अस्या रूपमालायाः व्याख्यानं विष्णुभट्टकृतमिति प्रक्रियाकौमुद्याः प्रकाशटीकायामुल्लखिंतम्। पुण्यपत्तनस्थ-भाण्डार-कर-ओरियन्टलरिसर्चइन्स्टीट्यूट-संज्ञकसंस्थानत उपलब्धायाः पाण्डुलिपेरन्ते लेखनकालः १५०७ तमसंवत्सरो लिखितो वर्तते। तेन ततः पूर्वमेवास्याः निर्माणकाल इत्यत्र नास्ति काचिद् विचिकित्सा। अतो विक्रमसंवत्सरस्य चतुर्दशतकः निर्माणकालः निश्चितप्राय एव।

अत्रेदमवधेयं यत्प्रक्रियाक्रमस्य सिद्धान्तकौमुद्यां पर्यवसितत्वेऽपि रूपावतारादुद्गतेयं प्रक्रियापरम्परा विमलसरस्वतीभिः रूपमालाख्यग्रन्थेन समुपबृंहिता। अत एवास्य ग्रन्थस्य प्रक्रियापरम्परायाः बीजनिर्वपणे महत्वपूर्णं स्थानम्। एयतत्सर्वं पर्यालोच्य प्रस्तावितेऽस्मिन् प्रबन्धे विविधग्रन्थानामालोडनेनोत्तरवर्तिष्वपि प्रक्रियाग्रन्थेषु रूपमालां क्रोडीकृत्य प्रवर्तमानानि कानिचित् रहस्यानि सुस्पष्टयितुं मया प्रयासो विहितः। मयाऽसृतो विषयविभाग इत्थंरूपेण वर्तते।

**तत्र प्रथमेऽध्याये** - व्याकरणशास्त्रस्य मुख्य विषयस्य प्रतिपादनप्रसङ्गे किं नाम व्याकरणम् ? कति व्याकरणानि लोके प्रचलितानि ? तेषु पाणिनीयव्याकरणस्य किं वैशिष्ट्यम् ? इत्यादिविषयाः सम्यक् समीक्षिताः। अथ च -

**"इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥"**

इति वाक्यपदीयकाराभिमतमाश्रित्यास्य शास्त्रस्य दर्शनत्वं विवेचितम्।

**द्वितीयाध्याये** - प्रक्रियाग्रन्थानामाविर्भावो विकासश्च विस्तरेण निरूपितः। कस्यापि ग्रन्थस्य सम्यग् विवेचनाय तस्य पार्श्ववर्तिन्यः स्थितयोऽवश्यमवलोकनीयाः भवन्ति, यदवलोकनेन ग्रन्थरचनायाः प्राक् पठनपाठनयोः कीदृशी स्थितिरासीत्, कीदृशी च ग्रन्थरचना-काले पूर्ववर्तिनीनां स्थितीनां कियान् प्रभावस्तस्मिन् ग्रन्थे दृश्यते। पूर्वापेक्षया समालोच्यमानग्रन्थस्य किं वैशिष्ट्यम्, किञ्च साफल्यमित्येतत्सर्वं विचार्यैतस्मिन्निबन्धे मया सर्वप्रथमं रूपमालायाः ऐतिहासिकी पृष्ठभूमिः निरूपिता।

तत्र पाणिनीयाष्टाध्यायीत आरभ्य रूपमालापर्यन्तं व्याकरणस्यारम्भं क्रमिक-विकासं च दर्शयता मया सर्वेषां ग्रन्थानामैतिहासिकपरिचय-विषये प्रयासो विहितः। किं च अष्टाध्यायी, महाभाष्यम्, काशिका, चान्द्रव्याकरणम्, कातन्त्रम् रूपावतारः, हेमशब्दानुशासनम्, प्रक्रियारत्नम्, मुग्धबोधव्याकरणमि "त्यादीनामप्यैतिहासिकविवरणमुपन्यस्तम्। एते सर्वे त एव ग्रन्थाः सन्ति येषां प्रभावः रूपमालायां परिलक्ष्यते। ततः रूपमालाया ऐतिहासिक विवेचनावसरे निर्माणकालः, उद्देश्यम्, प्रणेतुश्च परिचयो वर्णितः। अथ च रूपमालाया उत्तरवर्तिप्रक्रियाग्रन्थेषु प्रक्रियाकौमुदी-सिद्धान्तकौमुदी-प्रक्रियासर्वस्व-लघुसिद्धान्तकौमुदी-मध्यसिद्धान्तकौमुद्यादीनामपि संक्षिप्तमैतिह्यं वर्णितम्। तत्राष्टाध्यायीक्रममपहाय प्रक्रियाक्रमस्यारम्भे को हेतुः का चावश्यकतेत्यस्यापि विवेचनं कृतम्। ग्रन्थकाराणां कालनिर्णयप्रसङ्गे प्राच्यपाश्चात्य-विदुषां मतानि साधकबाधकयुक्तिपुरःसरं परामृष्टानि।

**ततः तृतीयाध्याये**- एतत्प्रबन्धोपजीव्यस्य रूपमालेतिग्रन्थस्य विषयपरिचयो दर्शितः। तथाहि-रूपमालायाः प्रथमंप्रकरणं संज्ञामाला। तत्र कियत्यः संज्ञाः संगृहीताः ग्रन्थ-कृता, केन च क्रमेण ताः संज्ञाः व्याख्याताः, प्रत्याहारादिकाः, सवर्णसंज्ञोपयोगिनः स्थानप्रत्यत्नाः कथं वर्णिता ? इतिसर्वं विवेचितम्।

एवमेव सन्धिमाला-अजन्तमाला-हलन्तमाला-सर्वनाममाला-नियतलिङ्गमाला-छान्दसमाला-अव्ययमाला-स्त्रीप्रत्ययमाला-कारकमाला-तिङन्तमाला-सनादिभाग- कृदन्त-माला-तद्धितमाला-समासमालादीनां प्रतिपाद्यं वर्णितम्।

**अथ चतुर्थेऽध्याये**- प्रक्रियाग्रन्थान्तरैः सह रूपमालायाः तुलनात्मकमध्ययनं विहितम्। तत्र सर्वप्रथमं रूपमालायाः शैलीगतं वैलक्षण्यं दर्शितम्। रूपमालातः पूर्ववर्तिनां प्रक्रियाग्रन्थानां पुरतो बहवःप्रश्ना आसन्। कथं केन विधिना च व्याकरणशास्त्रे प्रकरणरचना कर्तव्या, कथं चाल्पेन श्रमेण विशालशब्दराशेः छात्राणां ज्ञानं भवेत्, कानि सूत्राणि ग्राह्याणि, कानि च परित्यजनीयानि, केन क्रमेण सूत्राणि सङ्घटनीयानि ? इमां विप्रतिपत्तिं विभाव्य

रूपमालाकृता बालानामुपकाराय या हि विषयप्रतिपादनपद्धतिः;सूत्राणां संघटनशैली चाङ्गीकृता, सा नूनं प्रशंसावहेति । ग्रन्थसङ्क्षेपविधौ तेन महान् यत्न आस्थितः ।

प्रक्रियाग्रन्थेभ्यः प्रागष्टाध्याय्याः सूत्रसंघटने कश्चन एवंविधः क्रमो नासीत् । येनाजन्तहलन्तशब्दानां प्रथमादिषु सर्वासु विभक्तिषु, एवं च धातूनां प्रथमादिपुरुषेषु वचनक्रमेण सर्वाण्येव रुपाण्येकत्रैव ज्ञायेरन् । अस्मिन् प्रक्रियाक्रमे एतस्याः समस्यायाः समाधानं कृतं वर्तते । रूपमालायामपि बहुत्र स एव सूत्रसंघटनस्य क्रमोऽवलोक्यते, यथा-अष्टाध्याय्यामस्ति । अत्र ग्रन्थकारः सूत्रार्थं संक्षेपरूपेण प्रस्तौति । पूर्ववर्तिग्रन्थापेक्षया ग्रन्थेऽस्मिन् सूत्रार्थः प्रायेण काशिकाभिमत एव स्वीकृतः । सूत्राणां तात्पर्यं पूर्वप्रकरणवशादनुवृत्या वा प्रस्तुतम् । एवमेव ग्रन्थसङ्क्षेपहेतुना येषां सूत्राणामर्थः प्रकरणवशाज्ज्ञायते तेषां बहूनां सूत्राणां वृत्तिग्रन्थकारेण न लिखिता । यथा हि रूपावतारादिषु बहुत्र सूत्रावतरणात्पूर्वं प्रश्नं शङ्कां वोद्भाव्यानन्तरं सूत्रं प्रकरणं वोपक्रम्यते, न तथा रूपमालायाम् । ग्रन्थगौरवभयादियं रीतिर्विमलसरस्वतीभिः रूपमालायां नातीवादृता । अपि च प्रयोगाणां साधुत्वे सौकर्याय क्वचित्क्वचित् एकमेव सूत्रं वारद्वयं पठितं व्याख्यातं च । ग्रन्थेऽस्मिन् सूत्राणां व्याख्यानप्रसङ्ग एव गणपाठलेखनस्य रीतिरवलोक्यते । तथा च स्वपूर्ववर्तिनां कतिपयवैयाकरणानामुल्लेखोऽपि ग्रन्थकृता कृत इत्यपि मया प्रतिपादितम् ।

ततः प्रक्रियाग्रन्थान्तरैः सहास्याः रूपमालायाः तुलनात्मकाध्ययनाय क्रमिको विभागः कृतो वर्तते । तद्यथा-

(क) रूपमालायाःप्रतिपाद्यविषयस्य प्रकरणक्रमानुसारि सङ्क्षेपेण विवेचनम्

(ख) वार्तिकानां विवेचनम्

(ग) श्लोकवार्तिकानां कारिकाणां च समीक्षणम्

(घ) परिभाषाणां समालोचनम्

तत्रादौ रूपमालास्थानां तत्तत्प्रकरणानां प्रक्रियाग्रन्थान्तरस्थैः तत्तत्प्रकरणैः सह समीक्षा प्रस्तुता । तथा हि-रूपमालायां संज्ञाप्रकरणे काः काः संज्ञाः केन च क्रमेण वर्णिताः ? अन्येषु रुपावतार-प्रक्रियाकौमुदी-प्रक्रियासर्वस्व-सिद्धान्तकौमुदीप्रभृतिषु प्रक्रियाग्रन्थेषु संज्ञाप्रकरणे कियत्यः संज्ञाः केन च क्रमेण् व्याख्याताः, तत्र किं साम्यं किं च वैषम्यम् ? एवं च सन्धिप्रकरणविषयेऽपि प्रक्रियाग्रन्थेषु कियत्साम्यं कियच्च वैषम्यम् । सन्धिमालाख्यं प्रकरणं रूपमालाकृता कियद्भिरुपप्रकरणैः विभाजितम्, कियद्भिश्चान्यैः प्रक्रियाग्रन्थकारैः । तत्तत्प्रक्रियाग्रन्थकाराणां सन्धिविभाजने को हेतुरित्यादिविविधविषया अत्र विवेचिताः ।

इत्थमन्येषामपि प्रकरणानां प्रतिपाद्यविषयस्य प्रक्रियाग्रन्थान्तरस्थैः प्रकरणैः सह विवेचनं प्रस्तुतम् ।

अस्याध्यायस्य द्वितीये भागे वार्तिकानां विवेचनम् । तत्र पूर्वं वार्तिकलक्षणं प्रदर्शयता मया रूपमालातः पूर्ववर्तिनां महाभाष्यकाशिकादिग्रन्थवार्तिकानां किं स्वरूपमिति विषयमधिकृत्य डॉ० कीलहार्न-गोल्डस्टूकर-डॉ० रामसुरेश-त्रिपाठिमहोदयानां विदुषां मतानामूहापोहः संक्षेपेण कृतः । एतदग्रे रूपमालायां वार्तिकानां किं स्वरुपमुपलभ्यते, अन्येषु

प्रक्रियाग्रन्थेषु च किम्, तत्र कियत्साम्यं वैषम्यं वेत्यपि समीक्षितम्। रूपमालायां प्रायेण काशिकामनुसृत्यैव वार्तिकानां स्वरुपं निर्दिष्टम्। ग्रन्थेऽस्मिन् कतिपयवार्तिकानि एवंविधानि वर्तन्ते येषामुल्लेखः सिद्धान्तकौमुद्यादिषु गणसूत्रत्वेन वर्तते इत्येतत्सर्वमत्रैव चर्चितम्।

अस्याध्यायस्य तृतीये भागे-श्लोकवार्तिकानां कारिकाणां च समीक्षणम्। तत्र रूपमालायामुद्धृतानां कारिकाणां श्लोकवार्तिकानां च किं मूलस्थानम्, काः कारिकाः काशिकोत्तरवर्तिव्याकरणग्रन्थेभ्यो गृहीताः, किं रूपमाला काशिकामात्रोपलभ्यमानाः कारिकाः प्रमाणीकरोति न वेत्यादयो विषयाः विवेचिताः। एतद्विषयपरिशीलनेनेदं स्पष्टं भवति यत् रूपमालाकृता नैकाः नूतनाः कारिकाः निर्मिताः। बहुषु स्थलेषु तेन सूत्रादिकमनुक्त्वैव कारिकासु प्रयोगाणां सिद्धिः दर्शिता" इत्यादि विषया अत्र वर्णिताः।

अध्यायस्याग्रिमे भागे परिभाषाणां समालोचनप्रसङ्गे किं नाम परिभाषात्वम्, किं च तासामुद्गमस्थानम् इत्यादि विविच्य विविधवैयाकरणानां परिभाषापाठेषु कति परिभाषा विद्यन्त इति दर्शितम्। अनन्तरं रूपमालोक्तपरिभाषाणां स्वरूपविषये विचारः प्रस्तुतः। रूपमालायां प्रायेण काशिकोक्तपरिभाषाणां स्वरूपमेव गृहीतम्, परं क्वचित् किंचित्परिवर्त्यांशयो गृहीतः। अतः रूपमालास्थपरिभाषाणां प्रक्रियाग्रन्थान्तरैः सह समीक्षणं विहितम्। प्रसङ्गवशादन्यमपि विषयजातमत्रैव चर्चितम्।

**ततः पञ्चमाध्याये**-शब्दानुशासनरीत्या रूपमालाया उपादेयता प्रतिपादिता। ग्रन्थोऽयं व्याकरणशास्त्रे प्रविविक्षूणां कृतेऽन्त्यन्तोपयोगी वर्तते। अत एव उत्तरवर्तिग्रन्थेष्वप्यस्य प्रभावः स्पष्टमुपलक्ष्यते। यथा 'हलन्त्यमि'ति सूत्रे काशिकाभाष्यादिग्रन्थेषु कण्ठरवेण हलित्येकदेशस्यैवावृत्तिः स्वीकृता, परन्त्वस्मिन्नेव सम्पूर्णसूत्रस्यावृत्तिरङ्गीकृता। सिद्धान्तस्यास्य परिपुष्टिः सिद्धान्तकौमुदी-मनोरमा-लघुशब्देन्दुशेखरादिषु महता प्रयत्नेन विहितेतरमतखण्डनपूर्वकम्। श्रीमद्वरदराजाचार्यनिर्मितमध्यकौमुदीलघुकौमुद्योः षड्लिङ्गाव्ययप्रकरणानन्तरं तिङन्तप्रकरणयोजनायामस्य ग्रन्थस्य प्रभावोऽंशेनानुमातुं शक्यत इत्यादिविविधविषयाः वर्णिताः।

**अथ षष्ठाध्याये**-लक्ष्यभेदपुरःसरं रूपमालाया आकलनं विहितम्। अध्यायस्य पूर्वार्द्धे एवंविधा केचन विशिष्टप्रयोगाः समालोचिताः। येषां साधुत्वावसरे रूपमालाकृता "इत्येके, इतिकेचित्, इतिचिन्त्यमि" त्यादिरूपेण मतान्तरं दर्शितम् अथवा येषां साधुत्वान्वाख्यानविषये विभिन्नेषु प्रक्रियाग्रन्थेषु वैषम्यं दृश्यते। तत्र च कतमः पक्षो ज्यायान् इत्यपि यथामति अध्यायेऽस्मिन् व्यवस्थापयितुं प्रयतितम्। ते च एते प्रयोगाः-सैष दाशरथीरामः, हाहा, विश्वसृट्, त्वत्यदौ, हे भूः, वाचा, ब्रह्माणी, युवती, स्तवीति-स्तौति, पिपूर्तः, दध्यस्यति, कुमारायते, तस्थिवान्, शकितः, स्फीतः, उदरम्भरिः, साहायकम्, अहोरात्रमिति च।

षष्ठाध्यायस्योत्तरार्द्धभागे- ईदृशानि सूत्राण्यधिकृत्य विमर्शः कृतः। येषां व्याख्यानविषये विभिन्नेषु प्रक्रियाग्रन्थेषु वैषम्यं वैमत्यं वा दृश्यते। कानिचित्सूत्राणि रूपमालायामन्यथा व्याख्यातानि अन्यथा चान्येषु प्रक्रियाग्रन्थेषु। एवंविधानां सूत्राणां तत्तत्प्रक्रियाग्रन्थानां व्याख्यानान्युपस्थाप्य यथासम्भवं तेषां समन्वये भाष्यकाशिकदिग्रन्थान्तरसंवादविसंवादाभ्यां युक्तायुक्तत्वव्यवस्थापने च यथामति प्रयतितमस्माभिः। अत्रैव चैवंविधानि कानिचित् वार्तिकान्यपि समालोचितानि। यानि सूत्राणि वार्तिकानि चाध्यायेऽस्मिन् समीक्षितानि तानि अधो

निर्दिश्यन्ते - हलन्त्यम् (सू० १/३/३), उपदेशेऽजनुनासिक इत् (सू० १/३/२), नाज्झलौ (सू० १/१/१०) , पूर्वत्राऽसिद्धम् (सू ८/२/१), ङमो ह्रस्वादचि ङमुण् नित्यम् (सू० ८/३/३२), अचो रहाभ्यां द्वे (८/४/४६) , प्रत्येय नित्यमिष्यते (वा०) झरो झरि सवर्णे (सू० ८/४/६५), अतो रोरप्लुतादप्लुते (सू० ६/१/११३), अमि पूर्वः (सू० ६/६/१०७), गोतो णित् (सू० ७/१/९०), एकाचो बशो भष् झषन्तस्य स्ध्वोः (सू० ८/२/३७), अल्लोपोऽनः (सू० ६/४/१३७), विभाषा ङिश्योः (सू० ६/४/१३५), नमुने (सू० ८/२/३), ष्णान्ता षट् (सू० १/१/२४), अष्टन आ विभक्तौ (७/४/८४), औत् (सू० ७/३/११८), नृ च (सू० ६/४/६), पञ्चम्यास्तसिल् (सू० ५/३/७), अङ्गगात्रकण्ठपुच्छेभ्यश्चेति (वा०) सख्यशिश्वीति भाषायाम् (सू० ४/१/६२) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा (सू० २/३/४६), कर्मणा यमभिप्रैति स सम्प्रदानम् (सू० १/४/३२), पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् (सू० २/३/३२), आधारोऽधिकरणम् (सू० १/४/४५), भूवादयो धातवः (सू० १/३/१), झोऽन्तः (सू० ७/१/३), अस्तिसिचोऽपृक्ते (७/३/९६), दधस्तथोश्च (सू० ८/२/३८), लोपोयि (सू० ६/४/११८), एर्लिङि० (सू० ६/४/६७), श्लिष आलिङ्गने (सू० ३/१/४६), सन्यङोः (सू० ६/१/९), केलिमरः कृत्युपसंख्यानम् (वा०) तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (सू० ३/३/१०), ब्रह्मभ्रूणवृत्रेषु क्विप् (सू० ३/२/८७), सुकर्मपापमन्त्रपुण्येषु कृञः (सू० ३/२/९८), विदिभिदिच्छिदेः कुरच् (सू० ३/२/१६२), स्वपितृषोर्नजिङ् (सू० ३/२/१७२), मध्यान्मः (सू० ४/३/८), सर्वत्राण् तलोपश्च (सू० ४/३/२२), परिषदो ण्यः (सू० ४/४/१०१), सख्युर्यः (सू० ५/१/१२६), अवारपारात्यन्तानुकामं गामी (सू० ५/२/११), ऊषसुषिमुष्कमधो रः (सू० ५/२/१०७), तस्मान्नुडचि (सू० ६/३/७४), त्यदादीनि सर्वैर्नित्यम् (सू० १/२/७२), उगितश्च (सू० ६/३/४५)।

**सप्तमाध्याये**-प्रक्रियाग्रन्थपरम्परायां रूपमालायाः प्रणेतुः स्थानम्, व्याकरणशास्त्रे तस्यावदानञ्च वर्णितम्।

**अष्टमाध्याये** (परिशिष्टे) पूर्वं केचन ईदृशाः विषयाः विभिन्नप्रक्रियाग्रन्थानुसारेण समीक्षिताः, येषां विभिन्नेषु प्रक्रियाग्रन्थेषु अन्यथाप्रतिपादनं दृश्यते। येपु चास्ति प्रक्रियाग्रन्थकाराणां वैमत्यं मतैक्यं वा, अन्यो वा विशेषः। ते च इमे विषया —

र प्रत्याहारः, रूपमालाकारादिभिः सर्वैरपि प्रक्रियाग्रन्थकारैः प्रायेण "लण्" सूत्रेऽकारस्यानुनासिकत्वं प्रतिज्ञाय रप्रत्याहार अभ्युपगतः परं लघुशब्देन्दुशेखरकारोऽत्र विषये प्रत्यवतिष्ठते। एवमेव मणीवादौ सन्धिरिष्यते, "अदसो मादि"-त्यस्यार्थविचारः, कस्स्थायी, शुक्लानाम्, ब्रह्महत्या, एनपा द्वितीया, यङ्लुगन्तस्य छान्दसत्वमितिविपयाः सम्यक् समीक्षिताः।

अनन्तरं रूपमालायाः सूत्रस्वरूपमधिकृत्य विचारः कृतः। अष्टाध्याय्यां कियती सूत्रसंख्या इति विषयः विद्वद्भिः बहुचर्चितः। परं नाद्यावधि कोऽपि दृढनिश्चयो जातः। डॉ० कीलहार्नमहोदयेन महाभाष्यकाशिकास्थसूत्रपाठान्तर-संकलनं प्रथमं कृतम्। तस्मादस्मिन् प्रकरणे विविधविदुषां मतं सम्यगालोड्य रूपमालायाः सूत्रस्वरूपविषये महाभाष्यकाशिकासिद्धान्तकौमुद्यादिसूत्रपाठसाक्ष्येण कुत्र कुत्र भेदो वर्तत ? इति सूत्राणां पाठान्तरसङ्ग्रहे विवेचितम्।

अस्मिन्नेवाध्याये (परिशिष्टे) सुबन्तप्रकरणे रूपमालायां के-के शब्दाः व्याख्याता इति अजन्तमालादिप्रकरणानुसारेण वर्णितम्। इत्थं हि रूपमालाया ऐतिहासिकी पृष्ठभूमिः, प्रक्रियाग्रन्थान्तरैः सह तस्यास्तुलनात्मकमध्ययनम्, लक्ष्यभेदपुरःसरं रूपमालाया आकलनम्, शब्दानुशासनरीत्या रूपमालाया उपादेयता, सूत्राणां पाठभेदसङ्कलनमित्यादिविविधविषयाणां विवेचनं कुर्वता मया निबन्धस्य साङ्गोपाङ्गतसिद्धये प्रयासो विहितः।

# सङ्केताक्षराणि

| | | |
|---|---|---|
| **का० वि० प०** | - | काशिकाविवरण पञ्जिका |
| **का० वृ०** | - | काशिकावृत्ति |
| **त० बो०** | - | तत्व बोधिनी |
| **प० ल० म०** | - | परमलघुमञ्जूषा |
| **पा० व्या० अ०** | - | पाणिनीय व्याकरण का अनुशीलन |
| **पा० सू०** | - | पाणिनीय सूत्रम् |
| **प्र० कौ०** | - | प्रक्रियाकौमुदी |
| **प्र० सर्व०** | - | प्रक्रियासर्वस्वम् |
| **प्रौ० म०** | - | प्रौढमनोरमा |
| **पू०** | - | पूर्वार्द्धः |
| **उ०** | - | उत्तरार्द्धः |
| **बा० म०** | - | बालमनोरमा |
| **भा० वृ०** | - | भाषावृत्तिः |
| **व्या० म० भा०** | - | व्याकरणमहाभाष्यम् |
| **मु० बो०** | - | मुग्धबोधव्याकरणम् |
| **रू० मा०** | - | रूपमाला |
| **ल० श० शे०** | - | लघुशब्देन्दुशेखरः |
| **व्या० शा० इ०** | - | व्याकरणशास्त्र का इतिहास |
| **श० कौ०** | - | शब्दकौस्तुभः |
| **सि० कौ०** | - | सिद्धान्तकौमुदी |
| **व्या० मि०** | - | व्याकरणमिताक्षरा |

# विषय - सूची

## (चतुर्थोऽध्यायः)



## (पञ्चमोध्यायः)



## (षष्ठोऽध्यायः)

## (सप्तमोऽध्यायः)



## (अष्टमोऽध्यायः)

### प्रथमोऽध्यायः

## व्याकरणशास्त्रस्य मुख्यविषयस्य प्रतिपादनविचारः

इह विचित्रे वस्तुतः निःसारे जगति विधातुः सृष्टौ चतुरशीतिलक्षयोनिषूत्पन्नाः पशुपक्षिसरीसृपादयः कीटपतङ्गादिपर्यन्ताः जीवाः स्वकीयं कर्म भुञ्जते। एषु सर्वेषु मानवः श्रेष्ठः। यतः अन्ययोनिषु जीवः स्वप्रारब्धमेव भुङ्क्ते, न तु मोक्षाय धर्माय वा किंचित्कर्तुं समर्थः। मानवदेहस्तु सर्वार्थ सम्भवः। यतो हि मानवस्य कृते कर्तव्याकर्तव्ययोरुचितानुचितयोः धर्माधर्मयोर्यज्ज्ञानं भवति तन्नान्ययोनिषु। मानवशरीर एवधर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः सिध्यन्ति। अत एव सृष्टिविधाता भगवान् विविधप्राणिनः सृष्ट्वाऽन्ते मानवं विधाय सन्तोषमाप[1]।

अस्मिन्नेव जन्मनि आध्यात्मिकाधिभौतिकाधिदैविकतापत्रयनिवृत्तये जीवो यतते। तथाहि आध्यात्मिकानां रोगादीनामौषधादिना, आधिभौतिकाधिदैविकानां शीतोष्णवातवर्षादीनां रक्षादिना यद्यपि निवृत्तिः क्रियते, तथापि तद्दुःखनिवृत्तिर्न नित्या। यतो हि औषधादिसेवने सति पुनरपि रोगानामुद्गमो भवति। अतो यदा जीवः जन्मरणाभ्यामुच्यते तदैव त्रिविधदुःखानामात्यन्तिकी निवृत्तिर्भवति। स एव मोक्षपदार्थः। चतुर्षु पुरुषार्थेषु अर्थकामौ प्रत्यक्षमेव क्षीणतामुपगच्छतः। धर्मोऽपि क्षीण एव भवति "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति स्मृतेः। तस्मान्मोक्ष एव परमपुरुषार्थ। स च मोक्षो ब्रहमज्ञानादेव लभ्यते, "ऋते ज्ञानान्नमुक्तिः "तमेव विदित्वाऽतिमृत्युमेति नान्यः पान्था विद्यतेऽयनाय" इति श्रुतेः।

ब्रह्मज्ञाने मुख्यं कारणन्तु वेद एव। उक्तं हि गीतायाम् -

**"वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्।"**[2]

महावैयाकरणेन भर्तृहरिणापि ब्रहमप्राप्त्युपायो वेद एवेति प्रतिपादितम् -

**"प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।**
**एकोऽप्यनेकवर्त्मेव समाम्नातःप्रथक् पृथक्॥"**[3]

---

१. सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या,
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देव ॥"श्रीमद्भागवतम् - ११-९-२

२. श्रीमद्भगवद्गीता १५/१५

३. वाक्यपदीयम्, ब्रह्मकाण्ड, कारिका - ५

अयं वेदः पूर्वमेक एवासीत्, परं च परमकारुणिकेन लोकहितैषणा भगवता व्यासेनैकस्य वेदस्य ऋग्यजुः सामाथर्वाख्यभेदेन चातुर्विध्यं विहितम् ।

उक्तं च श्रीमद्भागवते -

**"चातुर्होत्रं कर्मशुद्धं प्रजानां वीक्ष्य वैदिकम् ।**
**व्यदधात् यज्ञसंतत्यै वेदमेकं चतुर्विधम् ।**
**ऋग्यजुः सामथर्वाख्या वेदाश्चत्वार उद्धृताः ॥"**[१]

चतुर्णामपि वेदानां बहुशाखात्वं वर्तते । यथा - "एकशतमध्वर्युशाखाः,सहस्रवर्त्मा सामवेदः ।" तदुक्तं भागवते - "शिष्यैः प्रशिष्यैस्ताच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ।" एवमनेकभेदविशिष्टस्य वेदस्य षडङ्गानि सन्ति । व्याकरणम् छन्दो, ज्योतिः शिक्षा निरुक्तं कल्पश्चेति ।[२] ।

एतेन सर्वेष्वङ्गेषु मुखमिव प्रधानमङ्ग व्याकरणमिति सिध्यति । महाभाष्ये भगवता पतञ्जलिनाऽप्युक्तम् -

**"प्रधानं च षडङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति ।"**

व्याकरणस्य प्रधानाङ्गत्वं भर्तृहरिणापि वाक्यपदीये प्रतिपादितम् । तथाहि -

**"आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गंप्राहुर्व्याकरणं बुधाः ॥"**[३]

व्याकरणस्य मोक्षहेतुत्वं तपसां मध्य उत्तमतपस्त्वञ्च "ब्राह्मणेन निष्कारणो धर्मो षडङ्गो वेदोऽध्येयो ज्ञेयश्चे" ति श्रुत्या सिध्यति । ब्रह्मणो वेदस्य स्वरूपज्ञाने व्याकरणमेव कारणम् । तथा च जगतः सर्वोऽपि व्यवहारःशब्दमूलः । शब्दस्योच्चारणं विना न कश्चिदपि कमपि व्यवहारं कर्तुं समर्थः । शब्दस्य च याथार्थ्येन तत्वज्ञानं व्याकरणादेवेति वाक्यपदीयकारेण निगदितम् -

**"अर्थप्रवृत्तितत्वानां शब्दा एव निबन्धनम् ।**
**तत्वाबोधः शब्दानां नास्ति व्याकरणादृते ॥"**[४]

इतथञ्च व्याकरणस्य मुख्याङ्गत्वे मोक्षहेतुत्वे च सिद्धेः शब्दसाक्षात्कार एवास्य शास्त्रस्य मुख्यो विषय इति सिघ्यति । व्याकरणपदेनापि शब्दसाधुत्वमस्य मुख्यं प्रयोजनमित्यायाति, व्याक्रियन्ते व्यत्पाद्योन्ते शब्दा अनेनेति व्युत्पत्तेः । अन्यत्रापि " व्याकृतिः = व्युत्पत्तिस्तत्साधनम् । व्युत्पत्तिश्च प्रकृतिप्रत्यययोः स्वरूपस्य तदर्थयोस्तत्सम्बन्धस्य च ज्ञान-

---

१. श्रीमद्भागवतम् १/४/१९,२०.

२. "छन्दः पादौ तु वेदस्य हस्तौ काल्पोऽथउच्यते
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥" ( पाणिनीयशिक्षा ) श्लोक- ४१-४२

३. वाक्यपदीयम्, ब्रह्मकाण्ड, काारिका - ११,पृ०-२०

४. वाक्यपदीयम् ब्रह्मकाण्डम्, कारिका - १३, पृ० - २२

रूपा"[१] इत्युक्तम्। शास्त्रस्यास्य शब्दानुशासनमित्यपि नाम लोके प्रसिद्धम्। तदाह महाभाष्यारम्भे - "अथशब्दानुशासनमि"[२]ति। शब्दानामनुशासनं शब्दानुशासनम्। अनुशासनमिति करणे ल्युट्।

तथा च अनुशिष्यन्ते असाधुशब्देभ्यः प्रथग् विविच्य ज्ञाप्यन्ते साधु शब्दा अनेनेत्यनुशासनमिति वेदितव्यम्। साधुशब्दज्ञानजनकत्वादेव शब्दानुशासनमिति व्याकरणस्यान्वर्थं नाम इति उद्योतकारेण नागेशेन प्रतिपादितम्।[३] शब्दशास्त्रमित्यपि व्याकरणस्य नाम प्रसिद्धं वर्तते। शब्दाः शास्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्ते अनेनेति शब्दशास्त्रम्।

एतेनैतत् सिद्ध्यति यल्लौकिकाः वैदिकाश्च साधुशब्दा एवास्य विषयाः। महाभाष्येऽपि केषां शब्दानाम् ?"इत्युक्त्वा" लौकिकानां वैदिकानाञ्चेति प्रतिपादितम्। व्याकरणमधिकृत्य "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इत्यपि भाष्य एवोक्तम्। रक्षा, ऊहस्तर्कः, आगमः लघु असन्देहश्चेति पञ्च प्रयोजनानि व्याकरणस्य सन्ति। रक्षा वेदस्यअर्थात् वेदानां रक्षार्थमध्येयं व्याकरणम्। अवैयाकरणः वैदिकान् प्रयोगान् दृष्ट्वा भ्राम्येत। यतो हि लोकतो वैदिकशब्दा विलक्षणा भवन्ति। यथा लोके दुह्धातोः लङि झादेशे "अदुहत्" इति रूपम्। वेदे तु झस्यादादेशे तलोपे "बहुलं छन्दसि" इति रुडागमे "अदुह्र" इति। लोके "उद्ग्राहम्" वेदे तु हस्य भकारे कृते "उद्ग्राभमिति"। तथा च कर्णपदस्य लोके "कर्णैरि"ति रूपम् वेदे तु कर्णेभिरित्यादि रूपं भवति। एवं हि लोपागमवर्णविकारज्ञो वैयाकरण एव सन्देहरहितः सन् वेदान् रक्षयितुं समर्थः।

ऊह अपि प्रयोजनम्। वेदे सर्वैर्लिङ्गैः सर्वाभिर्विभक्तिभिर्मन्त्राः न निगदिताः। ते च यथायथमवश्यमेव विपरिणमयितव्याः। अवैयाकरणः विपरिणामेऽसमर्थः। तस्मादध्येयं व्याकरणम्। यथा वेदे मन्त्रो वर्तते "अग्नये त्वा जुष्टं निर्वपामि" इति। ब्रह्मवर्चस्कामस्तु सौर्यं चरु निर्वपेत्। तत्र "सूर्याय त्वा जुष्टं निर्वपामि" इति स्यात्। तद्व्याकरणाधीनमेव।

आगमः "ब्राह्मणेन निष्कारणो षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यादि। लघुरपि व्याकरणस्य प्रयोजनम्। ब्राह्मणेनावश्यं शब्दाः ज्ञेयाः" इति। शब्दज्ञाने च लघुरुपायो व्याकरणमेव।

सन्देहनिवृत्तिरपि व्याकरणस्य प्रयोजनम्। यथा च " स्थूलपृषतीमनड्वाहीमालभेत" इति श्रुतिः। अत्र हि "स्थूलपृषतीमि" त्यत्र स्थूला चासौ पृषती इति कर्मधारयः। स्थूलानि पृषान्ति यस्याः सेयमिति बहुब्रीहिर्वेति सन्देहः। तत्रावैयाकरणः स्वरतः निश्चेतुमसमर्थः। वैयाकरणस्तु यदि पूर्वप्रकृतिस्वरः ततो बहुब्रीहिः, अथ समासान्तोदात्तस्ततस्तत्पुरुष इति निश्चेतुं क्षमः। अत्र कर्मधारये पृषतीशब्दस्य पृषद्वत्या लक्षणा। तत्रैव च स्थौल्यान्वयः। बहुब्रीहौ तु पृषपृषत्स्वेव स्थौल्यान्वय इति वैलक्षण्यम्।

यद्यपि भाष्यकारेण तेऽसुराः, दुष्टः शब्दः यदधीतम्, यस्तु प्रयुङ्क्ते, अविद्वांसः, विभिक्तिं कुर्वन्ति, यो वा इमाम्, चत्वारि, उत त्वः, सक्तुमिव, सारस्वतीम् दशम्यां पुत्रस्य, सुदेवो असि वरुण इति त्रयोदशप्रयोजनान्यप्युक्तानि। तानि विस्तरभयान्नात्र व्याख्यातानि।

---

१. श्रीसभापति शर्मोपाध्यायः, (वैयाकरणभूषणसारः - प्रभाटीका १९६९) प्रस्तावना, पृ०-६

२. महाभाष्यम् भाग - १ पृ० १

३. म० भा०, (भाग - १ झज्जरसंस्करणम्,) उद्द्योतटीका, पृ०-३

आधुनिकपरिप्रेक्ष्ये तु - व्याकरणाध्ययनस्य प्रमुखतया प्रयोजनत्रयं दष्टिपथमायाति। प्रथमं तावत्प्राच्यसंस्कृतवाङ्मयस्याध्ययनयोग्यता।

द्वितीयन्तु व्याकरणदर्शनस्य सम्यग् ज्ञानम्। तृतीयञ्चान्ताराष्ट्रियतुलनात्मकभाषाविज्ञानस्य नूतनासु प्रवृत्तिषु विकाससामर्थ्यम्।

व्याकरणेन भाषायाः परिष्करणं शब्दानां साधुत्वं नियतत्वञ्च भवत्येव। तेन भाषा स्थिराऽपरिवर्तिनी च भवति। अत एव याः भाषा व्याकरणविरहितास्सन्ति, तासां स्वरूपमद्यत्वे न तथा यत्पुरा आसीत्। संस्कृत-व्याकरणस्येदमेव वैशिष्ट्यम् यत् यादृशी भाषा पाणिनिकालेऽऽसीत्, तादृश्येवेदानीमस्ति भाविनि कालेऽपि स्थास्यतीति। कस्यचिज्जनकस्य स्वात्मजं प्रति व्याकरणध्ययनप्रवृत्तये कथनमीव महत्वाधायकं वर्तते -

**यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो माभूत् सकलं शकलं सकृच्छकृत्॥**

एवं व्याकरणप्रयोजनप्रतिपदनानन्तरमेष प्रश्नः यच्छास्त्रेऽस्मिन् शब्दोपदेशः कर्तव्य आहोस्विदपशब्दोपदेश ? अथवा हेयोपादेयोपदेशे स्पष्टं ज्ञानं भवतीति उभयोपदेशः कर्तव्यः ? अत्रोच्यते - अन्यतरोपदेशेनापि कार्यं स्यात्। तद्यथा शब्दोपदेशः क्रियते गौरिति, तेन ज्ञायते गाव्यादयोऽपशब्दाः। यदि अपशब्दोपदेश क्रियते तर्हि गाव्यादिषूपदिष्टेषु गम्यते यद्गौरित्येष शब्दः। परञ्चापशब्दानां प्राचुर्यात् लाधवाच्छब्दोपदेश एव कर्तव्यः। तथाहि-एकैकस्य शब्दस्य बहवोपभ्रंशाः। तद्यथा- गौरित्येकस्यैकस्य गावी-गाणी-गोता-गोपोतलिकेत्येवमादयोऽपभ्रंशाः। इष्टस्य चान्वाख्यानं भवति। इष्टश्च शब्दोपदेशः, न त्वपशब्दोपदेशः।

अधुनावसरसंगत्या "एषां साधुशब्दानां मुख्यो वक्ता कः ?" इति प्रश्नः समुदेति। तत्रोच्यते - यथा सर्वेषां ज्ञानानां विद्यानाञ्च प्रवक्ता ब्रह्मा, तथैवास्य व्याकरणस्यापि स एव प्रवक्तेति सामवेदस्य ऋक्तन्त्रव्याकरणे प्रतिपादितम्।

तद्यथा - "इदमक्षरं छन्दसां वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुः - ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यश्चेति।" परञ्चाधुनिके युगे उपदेशद्वारा शब्दानां प्रतिपत्तिरिति प्रतिपदपाठरूप उपायो नास्ति समीचीनम्। यतो हि वृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं शब्दानां पारायणं प्रोवाच, नान्तं जगाम। विचारयन्तु सुधयः यद्देवानां गुरुः बृहस्पतिः प्रवक्ता, देवानामीशः इन्द्रश्च श्रोता, दिव्यं वर्ष सहस्रमध्ययनकालः नान्तं जगाम। अद्यत्वे तु स्वल्पं चायुः बहवश्च विघ्नाः। वर्षशतं तु कोऽपि महाभागो जीवति। विद्याहि चतुर्भिप्रकारैरूपयुक्ता सुस्थिरा च भवति - आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेन च। तत्र यदि शब्दानां ज्ञानं प्रतिपदपाठेन स्यात्तर्हि आगमकाल एवास्मिन् कलौ मानवस्य कृत्स्ननायुः पूर्णं स्यात्। अत एवोक्तं भगवता भाष्यकारेण -

**"तस्मादनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः" इति।**

एवं हि एप विचारो प्रस्तुतो भवति यदिमे शब्दाः कथं प्रतिपत्तव्या ? अस्य समाधानाय भगवता भाष्यकृता निगदितम् किञ्चित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम् इति। तदेव शास्त्रं व्याकरणं यत्र सामान्येनोत्सर्गो भवति यथा - "कर्मण्यण्" इतिसूत्रम्। तस्य

विशेषेणापवादः यथा - "आताऽनुपसर्गे कः" इति । एवमल्पेन यत्नेन महतः शब्दसमुदायान् मानवः प्रतिपद्येरन् ।

पुराकाले नैकानि व्याकरणशास्त्राण्यासन् परं न तानि सर्वाङ्गपरिपूर्णान्यासन् । अतस्तेषु दोषान् परिभावयता भगवता पाणिनिना "अष्टाध्यायीति" नामकं सुप्रसिद्धं स्वतन्त्रं व्याकरणं प्रणीतम् । सत्स्वपि नैकेषु व्याकरणेषु भाषां सुनियन्त्रितां विधातुं पाणिनीयव्याकरणादृते नान्यद् व्याकरणं प्राभवदिति न परोक्षं प्रेक्षावताम् । भगवान् पाणिनि अष्टाध्याय्यां स्वप्राग्वर्तिनां दशसंख्यकानां वैयाकरणानां नामानि तत्तत्सूत्रेषु स्मरति । तद्यथा - "वा सुप्यापिशलेः ६/१/९२, तृतीयादिषु भाषितपुस्कं पुवद्गालवस्य ७/१/९९, अङ्गार्ग्यगालवयोः ७/३/९९, ओतो गार्ग्यस्य ८/३/२०, ई चाक्रवर्मणस्य ६/१/१३०, ऋतो भाद्वाजस्य ७/२/६३, त्रिप्रभृतिषु शाकटायनस्य ८/४/५०/, लोपः शाकल्यस्य ८/३/१९, गिरेश्च सेनकस्य ५/४/११२, अवङ्स्फोटायनस्य ६/१/१२२ इति ।"

बोपदेवेन कविकल्पद्रुमनामके ग्रन्थेऽष्टानां वैयाकरणानां नामोल्लेखः कृतः । यथा -

**"ऐन्द्रश्चान्द्रः काशकत्स्नापिशली शाकटायनः ।**
**पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः ॥"**

इमानि सर्वाणि व्याकरणानि महत्परिमाणान्यासन् । अत एव लघुपरिमाणतया सर्वोत्कृष्टतया सर्वसङ्ग्राहकतया पाणिनीयव्याकरणस्यादरेण पूर्वोक्तानि व्याकरणानि विलुप्तप्रायाणि जातानि ।

तदुक्तं महाभारतटीकाकारेण -

**"यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात् ।**
**पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे ॥"**[1]

सामान्यतः विचारे कृते पाणिनीयाष्टाध्याय्याः सूत्राणि व्याकरणमिति प्रतीयते । परं नैतत्समीचीनम् । यतो हि व्याकरणस्य सूत्रमिति प्रयोगो दृश्यते । प्रयोगेणानेन सूत्रादन्यत् व्याकरणं प्रतीयते यस्येदं सूत्रं स्यात् । अपरं च व्याकरणादेव शब्दान् प्रतिपद्यामहे । न हि सूत्रत एव शब्दप्रतिपत्तिर्दृश्यते किन्तु व्याख्यानतोऽपि । न केवलं सूत्रस्य पदच्छेद एव व्याख्यानमपितु उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इति समुदितं व्याख्यानम् । यदि शब्दो व्याकरणमिति कथ्यते तर्हि "व्याक्रियन्ते शब्दा अनेनेति व्याकरणम" त्र ल्युऽर्थो नोपपद्यते । नहि शब्देन किंचिद् व्याक्रियते, अपितु सूत्रेण । अत एव लक्ष्यलक्षणे व्याकरणमिति निर्णीतम् । अर्थात् लक्ष्यः शब्दः, लक्षणञ्च सूत्रमित्येतत् समुदितं व्याकरणं भवति ।

ननु लक्ष्यलक्षणे व्याकरणं तर्हि केवलं सूत्राण्यधीयमानेऽपि वैयाकरण इति व्यवहारः कथं संगच्छेत् ? नैष दोषः । समुदायेषु प्रवृत्तः शब्द अववेष्वपि वर्तते । यथा पूर्वेपञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, धृतं भुक्तमित्यादि । एवमेवायं व्याकरणशब्दः समुदाये प्रवृत्तः केवलं सूत्रेऽपि वर्तते । भाष्यकृता तु सूत्रमेव व्याकरणमित्यपि समाहितम् । व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थश्च व्यपदेशिवद्भावेनोपपन्नः । व्यपदेशिवद्भावस्यैतत् तात्पर्यम् प्रदीपोद्योतयोः स्पष्टम् । यथा "राहोः शिरः" इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद् भेदव्यवहारः ।

---

१. महाभारतम् ( देवबोधटीका ) पृ० १५

अर्थादनेकावस्थायुक्तं शिरः राहुशब्दार्थः। एकावस्थायुक्तं तत् शिरश्शब्दार्थः। एवं हि राहुशब्दार्थस्य शिरः पदार्थोऽवयव इति षष्ठ्यर्थोपपन्नः। एवं व्याकरणस्य सूत्रमित्यत्रापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते। सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते।

सूत्रे व्याकरणे शब्दाप्रतिपत्तिरपि दोषो न यत् सूत्रत एव शब्दान् प्रतिपद्यन्ते। अतश्च हेतोः सूत्रत एव शब्दाः निष्पन्ना भवन्ति। यो हि सूत्रमर्यादां विना प्रयोगं कथयेत् नैतद् गृहयेत। अत एव पठ्यते सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके। एवं व्याकरणे चैकेन लक्षणेन तदीयोद्देश्यतावच्छेदकक्रान्तानां बहूनां लक्ष्याणां संग्रहात् परमं लाघवं वर्तते। तत्र सूत्र लक्षणं यथा -

**"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"**

अत एव सूत्रव्याख्यानभूतानां महाभाष्यादिग्रन्थानां तत्परवर्तिनां काशिका-रूपावतार-रूपमाला-कौमुद्यादीनां तद्व्याख्यानभूतशब्देन्दुशेखराद्यनेक ग्रन्थानां व्याकरणत्वव्यवहारो विद्वद्भिः क्रियते। सूत्रांशपूरकत्वादेव वार्तिकानामपि व्याकरणत्वमुपपन्नम्।

एवञ्च व्याकरणशास्त्रे संज्ञा-परिभाषा-विधि-नियम-अतिदेशाधिकारादीनि षड्विधानि सूत्राणि सन्ति। यथा चोक्तम्।

**"संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते॥"**

तत्र "संज्ञा च नाम यतो न लघीयः" इति। अथवा शक्तिग्राहकत्वं संज्ञासूत्रत्वम्। यथा हलन्त्यम्, वृद्धिरादैच् इत्यादि। अनियमे नियमकारित्वं परिभाषात्वम्। - "परिभाषा पुनरेकदेशस्था सती शास्त्रमभिज्वलयती"[१] ति महाभाष्यकारेणोक्तम्। यथा आदेः परस्य,इको गुणवद्धी इत्यादि। लक्ष्यविषयकापूर्वसंस्कारविषयकबोधजनकत्वं विधिसूत्रत्वम्। यथा इको यणचि,आद्गुणः इत्यादि। सर्वत्र प्राप्तस्य विधेस्तदितराविषयत्वरूपसङ्कोचनं नियमः। यथा- कृत्तद्धितसमासाश्च, रात्सस्येत्यादि। अन्यधर्मस्यान्यत्रारोपणमतिदेशो यथा- 'स्थानिवदादेशोऽनल्विधौ,तृज्वत् क्रोष्टुरि'त्यादीनि। स्वप्रदेशे लक्ष्यसंस्कार-विषयकबोधाजनकत्वे सति उत्तरसूत्रानुवृत्या लक्ष्यसंस्कारविषयकबोधजनकत्वमधिकारसूत्रत्वम्- यथा "अङ्गस्य, भस्य, पूर्वत्राऽसिद्धमित्यादि। अधिकारसूत्राणां व्यापकतामङ्गीकृत्य भाष्यकृता तानि त्रिधा विभक्तानि। तद्यथा " कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति। यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्ममाभिज्वलयति। अपरोऽधिकारो यथा रज्वायसा वा बुद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते च कारेण। अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठत इति। अनया रीत्या षड्विधैः सूत्रैः लघुनोपायेन भगवता पाणिनिना शब्दोपदेशः कृतः।

अत्रेदं विचार्यते-यत्किं व्याकरणं शब्दानुत्पादयति अथवा किंचिदाद-धाति ? तत्रोत्पादकत्वं व्याकरणशास्त्रस्य सर्वथाऽनुभवविरुद्धम्। यथा चोक्तंभाष्यकारेण - " न हि

---

१. म० भा० १/१/४९.

कश्चिद्वैयाकरणंकुलं गत्वाऽऽह कुरु शब्दान् प्रयोक्ष्य इति।[१] न हि व्याकरणेन शब्दा उत्पाद्यन्ते,किन्तु तत्तत्स्थानेषु तत्तदाभ्यन्तरवाह्य-प्रयत्नानादाय वायवाघातादेव। कार्यशब्दवादिनां नैयायिकादीनां मतेऽपि शब्दानां नोत्पादकत्वम्, अपितु व्युत्पादकत्वमेव। अत एव व्युत्पत्तै व्याक्रियन्ते = व्युत्पाद्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्ते शब्दा इत्येवार्थः प्रदर्शितः। एवं व्याकरणशास्त्रनिर्देशानुसारेण शब्दव्युत्पादनेन तदभिव्यञ्जनेन वा तादृश्-शब्दप्रयोगेण प्रत्यवायपरिहारो धर्मश्च भवति। अत एव "एकः शब्दः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग् भवती"ति श्रुत्या व्याकरणस्य स्वर्गादभ्युदयपरम-पुरुषार्थमोक्षसाधनत्वं च सेत्स्यति।

वैयाकरणनां मते शाब्दश्च व्यवहारोऽनादिवृद्धपरम्परया व्युत्पत्तिपूर्वक एवेति शब्दानां नित्यत्वम्। तच्च यद्यपि सूत्रकारेण कुत्रापि कण्ठरवेण नोक्तम्। केवलं पृषोदरादीनि यथोपदिष्टम्, उणादयो बहुलमित्यादिसूत्रप्रणयनेन परिज्ञायते। भाष्यवार्तिककाराभ्यामप्युक्तम् - "सिद्धन्तु नित्यशब्द-त्वात्"। नित्याः शब्दाः नित्येषु नाम शब्देषु कूटस्थैरविचालिभिरनपायो-पजनविकारिभिर्वर्णैर्भवितव्यम् इति[२] वाक्यपदीयेऽप्याचार्येण हरिणा निगदितम् -

**"नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः।**
**सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः।[३]**

इत्थं शब्दार्थसम्बन्धानां नित्यत्वे सिद्धे "इको यणचीत्यादिसूत्राणा-मभिप्रायविषयेऽपि किञ्चिदभ्युपगन्तव्यम्।" अस्य सूत्रस्य "इकः स्थाने यण् स्यादचि" इत्यर्थो वृत्तिग्रन्थेषूपलभ्यते। परन्तु तात्विकदृष्ट्या नैष आदेशो विधिर्वा,अपितु प्रक्रियादृष्ट्यैव। वस्तुतस्तु इक्प्रसङ्गे यण् दृश्यते अचीति। पाणिनीयसूत्रन्तु विद्यमानघटनाप्रदर्शकमेव। लक्ष्यानुसारं नियमाः निर्मीयन्ते,न हि नियमानुसारि लक्ष्यमिति विवेकः।

एवञ्च नित्येषु शब्देषु सत्स्वपि व्याकरणेन तेषां साधुत्वं बोध्यते। परम्,प्रकृत्यर्थ प्रत्ययार्थादिज्ञानेन वेदार्थज्ञानमात्रमेवास्य व्याकरणस्य प्रयोजनं नास्ति। अपितु व्याकरणशास्त्रं शब्दानां साधुत्वज्ञानेन साक्षात्मोक्षप्रदमपि वर्तते। तदुक्तं हरिणा -

**"इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥"[४]**

अत एव व्याकरणस्य दर्शनत्वमभ्युपगम्यते। तथाहि चत्वारि वाक्परिमिता पदानि इति ऋक्मन्त्रमादाय चतसृणां वाचां स्वरुपं ज्ञायते। तत्र वैखर्याः मध्यमायाः पश्यन्त्याश्च संस्कारकं व्याकरणशास्त्रं प्रसिद्धमस्ति। तुरीयायाः पराख्यवाचः संस्कारो न भवति, तस्याः नित्यत्वात् निरवयवत्वात् चेतनत्वाच्चाउक्तञ्च महाभारते-

**"स्वरूपज्योतिरेवान्तः परावागनपायनी।"**

एवञ्च परावाच एव विवर्तभूतं पश्यन्त्यादिकं सर्वं वाक्तत्वम्। तत्र नित्य अखण्डः स्फोटः परावागेव मध्यमानादव्यङ्ग्यस्फोटस्तु अन्तः करणावच्छिन्नश्चिदात्मैव। तत्र व्यञ्ज-

१. म०भा०,(पस्पशाह्निकम्) सं० श्रीमधुसूदनमिश्रः, वाराणसीपृ० - ४३.

२. म०भा०,(पस्पशाह्निकम्) सं० श्रीमधुसूदनमिश्रः, वाराणसी पृ० - ४२

३. वाक्यपदीयम्,(ब्रह्मकाण्डम्) कारिका - २३ पृ०- ३४

४. वाक्यपदीयम्(ब्रह्मकाण्डम्) कारिका - १६ पृ० - २५

कस्य मध्यमाख्यध्वनेरनित्यत्वात् औपाधिकमनित्यत्वं चिदात्मभूते स्फोटेऽपि इति कृत्वा व्यञ्जकस्य ध्वनेरनात्मकत्वम्, व्यङ्ग्यस्य चिदात्मभूतस्य स्फोटस्य नित्यत्वं विवेचयत् व्याकरणमपि आत्मानात्मनोः विवेकं साधु विदधात्येव। पुनश्च "महोदेवोमत्यां आविवेश। महता देवेन नः साम्यं यथा स्यादिति" भाष्योक्त्या मुक्तिस्वरूपं तत्प्राप्यत्वञ्च संकेतितमस्ति। आचार्यभर्तृहरिणाऽपि वाक्यपदीय उक्तम् -

**"अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥"**[१]

एतत्सर्वं विचार्य भगवता पाणिनिना प्रत्याहार-द्वारा सूत्राणि प्रणीतानि। तेन महाँल्लाघवो जातः। परन्तु यदा सः सर्वेषां शिष्टप्रयोगाणां प्रकृतिप्रत्ययादिद्वाराऽन्वाख्यानं विधातुं नाशकत्, तदा सूत्रत एव तानुपादाय निपातने सिद्धिरकरोत्। यथा 'पङ्क्तिविंशति०' इत्यादिषु सूत्रेषु। किंच यदा शिष्टोच्चारितशब्दानां ज्ञानं दुःशक्यममन्यत तदा उणादयो बहुलम्, पृषोदरादीनि यथोपदिष्टम् कृत्यल्युटोः बहुलमित्यादिरीत्या यथाकथञ्चित् तेषामन्वाख्यानमकरोदाचार्यः पाणिनिः। तत्र यथा साधुशब्दानां बोधकत्वं तथैव भाषाशब्दानामपभ्रंशशब्दानामपि। अत एव संस्कृतशब्दानां प्रयोगे पामराणां ज्ञानाभावे तज्ज्ञानाय भाषाशब्देभ्यस्तदर्थस्य बोधनं क्रियते। ततश्चाऽसाधु-शब्देभ्योऽपि प्रतिपित्सितस्य सम्यगर्थस्य परिज्ञानसम्भवे किमर्थं व्याकरणेन महता प्रयासेन साधुशब्दानां विवेचनं क्रियत इत्याशङ्कायामुच्यते -

**"वाचकत्वाऽविशेषेऽपि नियमः पापपुण्ययोः।"**
**"लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः॥" इति च।**

इत्थं पुण्योत्पादनं प्रत्यवायपरिहारश्चास्य साधुशब्दविवेचनस्य फलमिति लभ्यते। किं चान्यरीत्या साधुशब्दानां ज्ञानं निष्पाद्य प्रयोगेऽपि न पुण्याद्यपवर्गपर्यन्तानां फलानामुत्पत्तिः, किन्तु व्याकरणेन कल्पितप्रकृतिप्रत्ययादिविभागद्वारा निष्पाद्यमानसाधुशब्दज्ञानपूर्वकप्रयोगेणैव। अत एव वेदान्तिभिरुपनिषदादिज्ञानद्वारा अविद्यानिवृत्ति स्वरूपरूपावस्थतिरूपो मोक्षः संपद्यते। येषां साधुशब्दप्रयोगकर्तृणां व्याकरणज्ञानाभावस्तत्र जन्मान्तरीयं ज्ञानं कल्पनीयम्।

एवं प्रकृतिप्रत्ययादिविभागकल्पनापूर्वकसाधुत्वबोधनद्वारा ध्वनिभिरभिव्यज्यमानस्फोटात्मकशब्दस्य प्रयोग एव व्याकरणशास्त्रस्य मुख्यो विषयः। तेन शाब्दज्ञानेनैव प्रवृत्तिनिवृत्यात्मकव्यवहारजन्यादृष्टविशेषेण इहामुत्रार्थभोगः। ततो व्याकरणज्ञाप्यकल्पित प्रकृतिप्रत्ययादिसाधुत्वज्ञानजन्यादृष्टविशेषसंस्कृतान्त करणचरमवृत्तिविषयीभूतपरारूपशब्दब्रह्मसाक्षात्काररूपपरमपुरुषार्थः सेत्स्यतीति शम्॥

---

१. वाक्यपदीयम् (ब्रह्मकाण्डम्) कारिका- १३१ पृ० १४०.

## द्वितीयोऽध्यायः

# प्रक्रियाग्रन्थानामविर्भावो विकासश्च

## ऐतिहासिकी पृष्ठभूमि : -

प्राचीनेषु सकलेष्वप्यार्षेषु व्याकरणेषु पाणिनीयमेवैकं साङ्गंतन्त्रमुपलभ्यते। अत एवाद्यत्वे पाणिनीयव्याकरणमेव सर्वत्राधीयते प्रमाणीक्रियते च। अस्य पाणिनीयशास्त्रस्य प्राचीनोऽध्ययनप्रकारस्तु अष्टाध्याय्याः सूत्रपाठक्रमानुसार्येवाऽऽसीत्। सूत्रपाठक्रममनुसृत्य व्याकरणाध्ययनवषये प्राचीनाः काशिकादिवृत्तिग्रन्थाः तद्व्याख्यानग्रन्थाश्च प्रमाणम्। तत्रेदं नैव तिरोहितं विपश्चिताम् यदस्याः प्रकियापरम्पराया आरम्भोऽपि द्विसहस्रवर्षेभ्यः प्रागेवाष्टा-ध्याय्यामभवत्। पाणिनीयाष्टाध्यायीमारभ्य रूपावतार-रूपमालादिप्रक्रियाग्रन्थान् यावदन्त-राले प्रक्रियापरम्परायाः विकासे को हि मार्गो तत्रानुसृतः ? गच्छति कालेऽध्ययनाध्यापनविधौ कथङ्कारं परिवर्तनं सञ्जातम् ? प्रस्ताविते‌ऽस्मिन् रूपमालाख्यग्रन्थे केषां ग्रन्थानां प्रभावोऽवलोक्यत इत्यादिसर्वं करिष्माणेऽस्मिन्प्रबन्धे विवेचयिष्यते।

प्रक्रियाग्रन्थानामविर्भावविवेचनप्रसङ्गे ऐतिहासिकपृष्ठभूमिरुरूपेण पाणिनेः अष्टा-ध्याय्याश्च विषये किंचित्कथनीयं न तावदप्रासांगिकं भविष्यति।

## पाणिनिः तत्कृतिरष्टाध्यायी च :-

सूत्रात्मकेऽस्मिन् ग्रन्थेऽष्टौ अध्यायास्सन्ति। अत एव कृतिरियमष्टकमष्टाध्यायीति वाकथ्यते। प्रत्यध्यायं चत्वारः पादाः,प्रतिपादं चानेकानि सूत्राणि सन्ति। सम्पिण्डितेन अष्टा-ध्याय्याः सूत्र संख्या ३९९६ भवति।

यथोक्तं श्रीशचन्द्रचक्रवर्तिभट्टाचार्यमहोदयेन-[१] त्रीणिसूत्रसहस्राणि तथा नवश-तानि च।

**षण्णवतिः च सूत्राणां पाणिनिः कृतवान् स्वयम्॥**

अष्टाध्याय्यां सूत्रसंरचनासु वैज्ञानिकक्रमबद्धतां, ग्रन्थकारस्य सूक्ष्मेक्षिकां विशा-लतां चावलोक्यं प्राच्याः पाश्चात्याश्च विद्वांसोऽस्य प्रशंसामकुर्वन्। अस्य ग्रन्थस्यापरिमित-प्रभावादेव पूर्ववर्तीनि ऐन्द्र-भागुरि-काशकृत्स्नापिशलादिव्याकरणानि विलुप्तप्रायाणि

---

१. न्यासः, प्रस्तावना पृ० ४

केषाञ्चिन्मतेन अष्टाध्याय्यां ३९९५ एव सूत्राणि सन्ति। तथा चोक्तम्-चतुः सहस्री सूत्राणां पञ्चसूत्रविवर्जिता। अष्टाध्यायी पाणिनीया सूत्रैर्महेश्वरैः सह॥ (स्वरसिद्धान्त-चन्द्रिका, श्लोक - १५)

बभूवुः। विलुप्तप्रायेषु व्याकरणेषु केषांचिद् व्याकरणानामेव द्वित्रीणि सूत्राणि प्राप्यन्ते। तद्यथा - दुर्गाचार्येण निरुक्तवृत्ते आरम्भे ऐन्द्रव्याकरणस्यैकं सूत्रमुद्धृतम् - "नैकं पदजातम्, यथा अर्थः पदमित्यैन्द्राणाम्"। एवं विविधग्रन्थानामालोडनेन काशकृत्स्नव्याकरणस्यापि कतिपयसूत्राणि समुपलभ्यन्ते। यथा चोक्तं भर्तृहरिणा[1] - "धातुरिति काशकृस्नानां सूत्रम्।" महाभाष्यस्य टीकाकारेण कैयटन[2] च "प्रत्योत्तरपदयोश्चेति सूत्रं काशकृत्स्नस्येत्युक्तम्।

आचार्येण पाणिनिना स्वस्यामष्टाध्याय्यां स्वप्राग्वर्तिनां दशवैयाकरणानां नामानि तत्तत्सूत्रेषुं संकीर्तितानि तेषां सूत्रनिर्देशपूर्वकं नामानि अस्माभिर्प्रथमाध्याये समुल्लखितानि।

पाणिनीयाष्टाध्याय्या यो हि महिमा पुरा आसीत् अद्यत्वेऽपि स दृश्यते, भाविन-कालेऽपि तथैव स्थास्यतीत्यत्र नास्ति लेशतोऽपि सन्देहावसरः। तत्र या वैज्ञानिकी पद्धतिः, विशालता च विराजते, तामवलोक्य न केवलं भारतवर्षे, अपितु अन्येष्वपि देशेषु विदुषां मनांसि आश्चर्यकितान्यभूवन्। अत एव परवर्तिभिराचार्यैः पाश्चात्यैश्च विद्वद्भिः प्रशंसित आचार्यः पाणिनिः। पाणिनीयाष्टकस्य विषये केषांचिद् विदुषामाचार्याणाञ्चोद्गाराः -

१- तत्र प्रथमं पतञ्जलिर्महाभाष्ये - "सामर्थ्ययोगान्नहि किञ्चित् पश्यामि शास्त्रे यदनर्थकं स्यात्"[3]

२- अपि च "उदक् च इतिसूत्रवृत्तिप्रसङ्गे काशिकायां साश्चर्यमुक्तम्[4] -

"महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्येति।"

३- चीनदेशीययात्रीह्वेनसाङ्गः[5] - "महर्षिः पाणिनिः शब्दभाण्डारस्य शब्दान् संचित्य सहस्रश्लोकेषु (४००० सूत्रेषु) शाब्दीं व्युत्पत्तिं प्रादर्शयत्। एषु प्राच्यनव्यशब्दज्ञानराशिः परिसमाप्ता वर्तते। शब्दाक्षरविषयकं किमपि ज्ञान-मत्र नावशिष्टमभूत्।"

४- प्रो० मोनियरविलियमः[6] - "संस्कृतस्य पाणिनीयव्याकरणं मानवमस्तिष्कस्य प्रतिभाया आश्चर्यममुदाहरणम्। यत्केनचिदन्येन देशेन नाऽऽविष्कृतम्।"

५- प्रो० टी० शेखात्स्की - "पाणिनेः अष्टाध्यायी मानवस्तिष्कस्य श्रेष्ठतमा रचना वर्तते।"

६- सर डब्लू० हण्टर - "जगतः सर्वेषु व्याकरणेषु पाणिनीयं व्याकरणं सर्वोत्कृष्टं वर्तते।"

---

१. वाक्यपदीयस्य स्वोपज्ञटीका भाग - १ पृ० ४०

२. महाभाष्यप्रदीपः, सू० २-१-५०

३. म० भा० सू० ६/१/७७ (इको यणचि)

४. काशिका सू० ४/२/७४

५. ह्वेनसांग - प्रथमोभागः (हिन्दीसंस्करणमाधृत्य) पृ० २२१

६. महान् भारत पृ० १४१

७- प्रो० मोक्षमूलरः[१] -"यद्वा वदन्तु नाम जनाः न कोऽपि जनाति संस्कृतम्, यो हि न जानति पाणिनिम् ।"

पाणिनेः कालविषये ऐतिह्यविदां विदुषां नैकानि मतानि सन्ति । अष्टाध्याय्यां यवनानीशब्दस्य सिद्धिप्रदर्शनेन केषाञ्चित्तद्धितप्रयोगाणामाधारेण च डा० कीथ महोदयाः[२] पाणिनेः समयः ३५० ख्रिष्टाब्दपूर्वममन्यत । तत्र डा० गोल्डस्टूकरमहोदयाः[३] पाणिनेः समयं शुक्लयजुर्वेदब्राह्मणग्रन्थप्रणयनानन्तरं ईशातः पूर्व सप्ताशताब्यां स्वीकुर्वन्ति । ग्रियर्सनमहाभागमतेन पाणिनः४०० ख्रिष्टाब्दात्पूर्ववर्ती वर्तते । प्रो० एस० के० वेल्वकरमहाभागाः[४] प्रो० के० बी० पाठकमहाभागश्च[५] ई० -पू० सप्तमशताब्यामेव पाणिनिरभूदिति स्वीकुर्वन्ति । परमन्तः साक्ष्यमूतैः बहुभि प्रमाणैः "व्याकरण शास्त्र का इतिहास" इतिग्रन्थस्य लेखकः पं० युधिष्ठिरो मीमांसकः[६] प्रमाणयति यत्स्थूलतया पाणिनेः समयः विक्रमाब्दात् २९०० वर्षपूर्वं निश्चीयत इति । अतो पृथक् पृथक् कालावम्बिनीं भारतीयामनुश्रुतिं पाश्चात्यां च विचारसरणिं सम्यगालोच्य "पाणिनि कालीन भारतवर्ष" इति महतः ग्रन्थस्य प्रणेतृभिः डा० वासुदेवशरण अग्रवालमहोदयैः[७] पाणिनेः समयः ५०० ई०पू० विनिर्धारितः । एवमुपदर्शितमतानुसारेण ५०० ख्रिष्टाब्दपूर्वमेव पाणिनेरष्टाध्याय्याः समयोऽवगन्तव्यः ।

पाणिनीयव्याकरणशास्त्रस्येदानीं तिस्रोऽवस्थाः दृष्टिपथमायान्ति-(१) त्रिमुनिकालः (२) त्रिमुनिटीकाकालः (३) प्रकियाकालश्च । प्रो० उमाशंकरशर्मणः मतेन पाणिनिकालादारभ्य ख्रिष्टाब्दस्य षष्ठशताब्दपर्यन्तं त्रिमुनिकालः[८] । तत्र च पाणिनेः समये संस्कृतं व्यावहारिकी परिवर्तिनी च लोकभाषा आसीत् ।

सैव महाभाष्यकृत् पतञ्जलिकालेऽपि शिष्टभाषारूपेण व्यवहृता । उत्तरकालेऽपि भाषा परिवर्तिनी आसीत् । अतः कालक्रमेण नूतनाः प्रयोगाः भाषायां संगृहीताः । तेनोत्तरोत्तरं भाषेयं स्फीतत्वमवाप ।

**कात्यायनः :-**

अतः पाणिनीयव्याकरणमसम्पूर्णमिव मन्यमानः भगवान् का त्यायनः नूतनोदितानां शब्दानां व्याकरणशास्त्रेऽन्तर्भावार्थं उक्तानुक्तदुरुक्तचिन्तनरीत्या वार्तिकं विरचय्य सम्पूर्णमकरोत् । नूनं चेदं पाणिनीयं व्याकरणं वार्तिकानां संन्निवेशेन पुष्पितं फलितं प्रतिमण्डितं

---

१. रूपावतारः प्रस्तावना पृ० १७

२. A.B.KIETH- "PaninisVocavulary" pp -343-45

३. ı. GOLDSTUCKER - "Panini" - P. 108

४. . K.BELVALKAR - "Systems of Sanskrit grammer" pp-13-18

५. K.B.PATHAK-"The Age of panini and Sanskrit grammer as a spoken language" vol-XI, part-183

६. व्या०शा०का० इति० भाग - १ पृ०

७. द्र० पा० का० भारतवर्ष - पृ८ ४७०-४८०

८. सि० कौ० (वैदिकप्रक्रिया) भूमिका पृ० ३

चाभवत्। परमतीव खेदकरोऽयं विषयो यदिदानीं कात्यायनप्रणीतवार्तिकानां कश्चन स्वतन्त्रो ग्रन्थो नैव प्राप्यते। वार्तिकलक्षणविषये च विदुषामेकमत्यं वर्तते। तथाहि -

**"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञाः विपश्चितः।।"**[१]

तथैव नागेशेनापि उद्योते - "उक्तानुक्तदुरुक्तचिन्तनकरत्वं वार्तिकत्वमि"ति स्वीकृतम्।[२]

अत्र डा० बर्नेल-बेवर-गोल्डस्टुकरमहोदयानां मतमेतत् यत् पाणिनिसूत्रेषु दोषोद्भावनदृष्ट्या वार्तिकानि विरचितानि। परं डा० किलहार्नमहोदयेन[३] लिखितम् - यत् न हि केवलं दोषान् उद्भावयितुं कात्यायनः वार्तिकानि प्रणीतवान्, किन्तु निःपक्षपातेन गुणदोषसमीक्षणाय तानि व्यलिखत्। पाणिनि-विषये कात्यायनस्य न काप्यसूया आसीत्। अपितु पाणिनीय-व्याकरणस्य न्यूनतामापाकरणायैव लोकहिताय कात्यायनेन वार्तिकानि प्रणीतानि इति मे मतिः।

रूपमालाया अपि पाणिनिसूत्रानन्तरमपरमुपजीव्यं कात्यायनप्रणीत - वार्तिकान्येवेति सुनिश्चितम्। कात्यायनप्रणीतवार्तिकानि हृदि निधायाचार्येण विमलसरस्वतीमहाभागेन तत्तत्सूत्रेषु निजनिर्मितवार्तिकान्यप्युक्तानीति यथावसरं वक्ष्यामि। मुनित्रयसमवाये पाणिनेरनन्तरं वररुचिरित्यपरनाम्नः कात्यायनस्य नाम सादरं स्मृतिपथं नीयते। इदमेव गौरवास्पदं यदधिकांशतया पातञ्जलेर्महाभाष्ये कात्यायनप्रणीतवार्तिकानामेव व्याख्यानमुपलभ्यते। अयं न केवलं वैयाकरणः, अपितु कविरूपेणापि प्रथित आसीत्। अस्य स्वर्गारोहणनामकस्य काव्यस्योल्लेखः कृष्णचरिते एवं प्राप्यते -

**यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।**
**काव्येन रुचिरेणैव ख्यातो वररुचिः कविः।।**

अपि च

**"न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः।**
**काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः।।"**

अस्य महर्षेः समयविषये पं० युधिष्ठरमीमांसकमहोदयानां[४] मतमिदं यत्कात्यायनः पाणिनेरुत्तरवर्ती आसीत्। डा० एस० के० बेल्वरकरमहोदयेन[५] कात्यायनस्य समयः ३५० -

१. व्या० शा० का इति० भाग - १ पृ० २१० (तत्रमीमांसकमहाभागैः वचनमिदंपाराशरपुराणस्येति स्वीकृतम्)

२. उद्द्योतः (व्या०म०भा० १) पृ०१२५ सू० १/१/१ (गुरुकुलसंस्करणम्)

३. F.KIELHORN-"KATYAYAN AND Patanjali" p. 2-4 and p.47

४. व्या० शा० का० इति० पृ० ९५

५. "Systems of sanskrit Grammar" p.29

५०० ई० पूर्वपर्यन्तं विनिर्धारितः। श्री श्रीशचन्द्रचक्रवर्तिमहोदयेनापि[1] ३५० ई० पू० एव कात्यायनस्य समयः। कैश्चिद् विद्वद्भिः कथासरित्सागरमधिकृत्य पाणिनिकात्यायनयोः समकालिकत्वमुररीक्रियते, तत्तु एतिहासिकदृष्ट्या प्रबलप्रमाणाभावाच्च नादरणीयम्। अतः कात्यायनः ईश वीयाब्दात् पूर्व ३५० तः नातिदूरवर्ती इत्येव मतं समीचीनं प्रतिभाति।

**महाभाष्यकारः पतञ्जलिः : -**

महर्षेः कात्यायनानन्तरमनेके वैयाकरणाः सवार्तिकं पाणिनीयतन्त्रं व्याख्यातवन्तः। परं यदा ते वार्तिकैः सह पाणिनिसूत्राणामभिप्रायं ज्ञातुमशक्नुवन् तदा भगवान् पतञ्जलिः पाणिनीयव्याकरणमाश्रित्य महाभाष्यमिति नाम्ना महद् व्याख्यानं चकार। नीरसमपि व्याकरणशास्त्रं स्वीयाऽभिनवव्याख्यानसरण्याऽयं सरसयाञ्चकार। महाभाष्ये यादृशी गभीरा, सरला सुगमा च भाषाऽस्ति, न तादृशी अन्यत्रावलोक्यते। यदधीत्य प्राच्याः पाश्चात्याश्च विद्वांसो महाभाष्यमिदं मुक्तकण्ठेन प्रंशसन्ति। यथोत्तरं मुनीनां प्रामाण्यमिति वाक्यं प्रमाणयितुं महाभाष्यग्रन्थः सर्वथा समर्थः।

"यद्यपि महाभाष्यं पाणिनीयतन्त्रस्य व्याख्याग्रन्थः। तथापि ग्रन्थोऽयं विविधविषयाणामाकरः। भाषा सरला व्यावहारिकी च, परं कुत्रचित्स्थलेषु भावगाम्भीर्यमवलाक्यते एतादृशेषु स्थलेषु व्याख्यातारः हतप्रभाः संजायन्ते। अथवा विविधव्याख्यानानि प्रस्तूयन्ते।अत एतादृशस्थलानि अद्यावधि दुरूहान्येव सन्ति।"[2]

महाभाष्यं न हि केवलं व्याकरणशास्त्रनिबन्धमात्रम्, अपि तु सर्वाण्यपि ज्ञातव्यानि विषणाण्यत्र स्थाने स्थाने विवेचितानि वर्तन्ते। तथोक्तं भर्तृहरिणा वाक्यपदीये -

**कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।**
**सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥**[3]

अस्मिन् ग्रन्थे सर्वेऽपि लौकिकाः व्यवहाराः इतिहासाः, धर्माः भारतीय-दर्शनानां सिद्धान्ताश्च स्थाने स्थाने उपवर्णिताः सन्ति। किं बहुना, विज्ञानस्य गूढसिद्धान्ताश्चास्मिन् महार्णवे यत्र तत्र प्राप्यन्ते। यथा "स्थानेऽन्तरतमः" (१/१/५०) इति सूत्रे उक्तम्- "अचेतनेष्वपि, तद्यथा लोष्ठः क्षिप्तो वायु वेगं गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति, पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा च या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः। स एव धूम आकाशे निवाते नैव तिर्यग्गच्छति, नार्वागवरोहति, अब्धिविकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितो नैव तिर्यग्गच्छति नार्वागवरोहति, ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः॥"

---

१. २१न्यासः (चक्रवर्ती) प्रस्तावना पृ० ६

"So the interval between panini and Katyayan was long enough otherwise such change in a language cannot be so repaid He lived probably in 350 B.C."

२. पं० युधिष्ठिरमीमांसकः - "व्या० म० भा०" - प्रकाशटीका, प्रस्तावना पृ० २१।

३. वा० प० २/४७९

यद्यपि महाभाष्यस्य बहुत्र स्थलेषु पाणिनीयसूत्राणां पतञ्जलिना प्रत्याख्यानं कृतम्। तथापि प्रमाणभूत•आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राणि प्रणयति स्म, "तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण" इत्यादि। "वृद्धिरादैच्"(१/१/१/) सूत्रभाष्येन प्रतीयते यत्पाणिनसूत्रविषये महाभाष्यकारस्य सुमहान् श्रद्धाभाव आसीत्। तत्र तत्रोपन्यस्तस्य सूत्राणां प्रत्याख्यानपरभाष्यस्यायमाशयः - यद्भगवान् पतञ्जलिः स्वीयबुद्धिचातुर्येण प्राकारान्तरेणापि प्रयोगसाधनोपायान् विनिर्दिष्टवान्। अथवा व्याकरणस्य वेदाङ्गत्वेन तदध्ययने न केवलं प्रयोगसाधुत्वमेव फलम्, अपितु वेदाध्ययनजन्यं यत्पुण्यं तदप्यस्य फलं भवितुमर्हति। तथा चोक्तं नागेशेन लघुशब्देन्दुशेखरे[1] "किञ्चिद् दृष्टाऽदृष्टार्थवत्, किञ्चिच्छुद्धाऽदृष्टार्थवत् सर्वर्थानर्थकं न किञ्चिदिति तदर्थः।"

भाष्यकारस्य पतञ्जलेः समये नैतिह्यविदां विभिन्नानि मतानि। महाभाष्ये ३-१-२६ सूत्रे "पुष्यमित्रो यजते, याजकाः याजयन्तीति, अग्रे च" ३-२-१२३ सूत्रे "इह पुष्यमित्रं याजयामः" इत्याद्युदाहरणादयं पुष्यमित्रसमकालिक इति कैश्चिदङ्गीक्रियते। अयं पुष्यमित्रः ख्रिष्टाब्दतः पूर्वं १४८ तमे वर्षे स्वर्गं जगाम। महाभाष्ये ३-२-१११ सूत्रे "अरुणद् यवनः साकेतम्, अरुणद् यवनो माध्यमिकाम्" इत्युदाहरणद्वयमुपलभ्यते। ग्रीकदेशोद्भवेन महेन्द्रेण ई० पू० १५५ वर्षे "साकेतमाध्यमिका" चेति नगरद्वयमपि स्वायत्तीकृतमासीत्। अतएव पतञ्जलेः समयः ख्रिष्टाब्दतः पूर्वं द्वितीये शतके विनिर्धारणीयः[2]।

पं० युधिष्ठरमीमांसकमहोदयानां मतम् यत् भारतीयकालगणनामनुसृत्य पुष्यमित्रस्य समयः १२०० वर्षपूर्वं विद्यते। अत्रेदमप्यवधेयम् - यन्महाभाष्यस्य वर्तमानः पाठः चान्द्राचार्येण परिष्कृतम्। चान्द्राचार्यः कश्मीराधिपस्य अभिमन्युनामकस्य आदेशेन विलुप्तस्य महाभाष्यस्य पुनरुद्धारः कृतवान्। राजतरङ्गिणीमनुसृत्य अभिमन्योः समयः प्रायेण १२०० विक्रमसंवत्सर पूर्वं स्वीक्रियते। अतः पुष्यमित्रनामप्रयोगमात्रेण "पुष्यमित्रसमकालिको महाभाष्यकारः" इति कथममयुक्तम्। अतः पतञ्जलेः कालः विक्रमतः सहस्रद्वयवर्षपूर्वं भवितुमर्हति[3]।

विविधेषु प्राच्यग्रन्थेषु पतञ्जलेर्गोर्नदीयः, गोणिकापुत्रः, अहिपतिः, नागनाथः, फणिभृत्, शेषराजः, शेषाहिः, चूर्णिकारः पदकारश्चेति नामान्युपलभ्यन्ते। अत्र गोणिकापुत्रशब्देन ज्ञायते यदस्य मातुनमि गोणिका आसीत्। गोर्नदीयपदं गोर्नदे भव इत्यर्थे "एङ० प्राचां देशे" इति छप्रत्यये कृते सति सिध्यति। यदीदं तथ्यं तर्हि गोर्नददेश उत्तरप्रदेशस्य" गोण्डा जनपदं पतञ्जलेर्जन्मस्थानमिति स्वीकर्तव्यम्।

पतञ्जलेर्महाभाष्यग्रन्थः बहुभिः व्याख्यातः। तेषु भर्तृहरिः कैयटश्च मूर्धन्यौ स्तः। रूपमालायां महाभाष्यस्य बहूनि वाक्यान्य-विकलेनोपन्यस्तानि। एतदतिरिक्तं महाभाष्याशयश्च बहुत्र प्रतिपादितः। इत्थमस्मिन्काले पाणिनिकात्यायनपतञ्जलिप्रणीनैर्नियमैः भाषायाः परिणतत्वं सुनियन्त्रिततत्वञ्च सञ्जातम्। ख्रिष्टाब्दस्य षष्ठशतकादारभ्य त्रिमुनिटीकासमयः प्रतीयते। अस्मिन् कालेष्टाध्याय्याः नैके वृत्तिकारा अभवन्। तेषु श्वोभूति-व्याडि-कुणि-मा-

---

१. ल० श० शे० (संज्ञाप्रकरणम्) पृ० ६

२. श्री श्रीचन्द्र चक्रवर्ती - न्यासः (प्रस्तावना) पृ० १०

३. व्या० शा० का० इति० भाग - १ पृ० ३१८-३२९ (द्वि० सं०)

थुर-वररुचिप्रभृतयः मुख्या आसन्। परमधुनोपलब्धेषु सर्वेषुवृत्तिग्रन्थेषु काशिका अतीव प्राचीनः सर्वादृतश्च वृत्तिग्रन्थः।

## काशिका -

काशिका द्वयोर्लेखकयोः कृतिः। ख्रिष्टाब्दस्य सप्तमशताब्द्यां जयादित्यवामनाभ्यामियं वृत्तिर्लिखितेति चीनदेशयात्रिण इत्सिंगस्य भारतयात्रावर्णनोद्धरणेन प्रतीयते। डॉ० वेल्वरकरेणाऽपि तदेव समर्थितम्। भाण्डारकरप्राच्यविद्याशोधसंस्थानस्य ग्रन्थालये काशिकावृत्तेः बहवः हस्तलेखाः विद्यन्ते। तत्र ६०,६४ हस्तलेखयोः अर्थात् प्रथमद्वितीयतृतीयचतुर्थाध्यायानां प्रणेता जयादित्य इत्युल्लिखितम्। तदिदतरेषां चाध्यायानां कर्ता वामन इति।[१]

काशिकावृत्तिविषये डॉ० बर्नेलमहाभागाना[२] मतं यदियं ख्रिष्टाब्दस्य द्वादशशतकस्य समीपवर्तिनी वर्तते। परं रूपावतारस्य भूमिकाभागे एम० रङ्गाचार्यमहोदयैर्लिखितं यत्काशिकावृत्तेः रचनाकालः नवमशतकादूर्ध्वं नास्ति। परं मतमिदं प्रो० के० ए० नीलकण्ठशास्त्रिणः नोररीकुर्वन्ति। ते काशिकायाः रचना कालं ६००० ख्रिष्टाब्दसमीप एव निर्धारयन्ति।[३]

काशिकावृत्तौ सर्वाणि पाणिनीयसूत्राणि व्याख्यातानि वर्तन्ते। अतः वृत्तिरियमनतिसाधारणं महत्वं भेजे। चीनदेशयात्रिणः इत्सिंगस्य भारताऽऽगमनकाले काशिकावृत्तेरध्ययनमनिवार्यरूपेण भवति स्म। स्वकीयभारतयात्रा प्रसङ्गे सः लिखति -

"काशिकावृत्तेरध्ययनानन्तरं विद्यार्थिनिः गद्यपद्यरचनाया अभ्यासं कुर्वन्ति, हेतुविद्यामभिधर्मकोषादिविद्याञ्च गृह्णन्ति"[४]।

काशिकायां महाभाष्यवद् विस्तृतगद्यमयसंवादाः न विद्यन्ते। अपि तु प्रतिसूत्रमनुवृत्तिरर्थोदाहरणानि शङ्कासमाधानपूर्वकं समुपलभ्यन्ते। विषयप्रतिपादनमत्र प्रौढतया वर्तते। अतः ग्रन्थतात्पर्यपरिज्ञाने पाठकेन सौकर्यमनुभूयते। वैयाकरणेन जिनेन्द्रबुद्धिना काशिकावृत्तौ न्यासापरनाम्नी काशिकाविवरणपञ्जिका महती टीका विरचिता। टीकेयं काशिकाध्येतृणां कृते महत्युपयोगिनी वर्तते। तथैव पं० हरदत्तमिश्रेणापि पदमञ्जरी नाम्नी व्याख्या प्रणीता। पदमञ्जरीति ग्रन्थोऽयं प्रौढः,प्रायेण कैयटस्याधारेण विनिर्मितः। ग्रन्थकर्तुः स्वपाण्डित्यप्रदर्शनपर इति हेतोर्न्यास इव छात्राणां कृते नोपयुज्यते।

काशिकावृत्तिविषये एषा जनश्रुतिर्वर्तते यत्काश्यां विरचनादेवैषा काशिकेति नाम्ना प्रसिद्धा। पं० हरदत्तमिश्रेण पदमञ्जरीटीकायामप्युक्तम्-

---

१. A Discriptive catalouge of Mss BORi vol - 11, Grammer part 1 (Vedic and Paniniya) p.46-53

२. "BURNELL-Aindra school of Sanskrit grammerians"

३. रूपावतारः भाग - १ ( भूमिका ) पृ० १२

४. इत्सिंग की भारतयात्रा पृ० १८

"काशिका देशतोऽभिधानम्, काशीषु भवा इति। अथवा सूत्रार्थप्रकाशनादन्वर्थं नाम काशिका।" तथा चोक्तं श्रीशचन्द्रचक्रवर्तीमहाभागैः-"काशयति प्रकाशयति सूत्रार्थमिति काशिका। काश्यां भवा।"[1] रूपमालायामाचार्यविमलसरस्वती-महाभागैः सूत्राणां वार्तिकानाञ्च पाठभेदप्रसङ्गे सूत्रार्थज्ञाने प्रयोगसाधुत्वादिपु च काशिकायाः बहुधा आश्रयणं कृतमिति सूत्रार्थविवेचनप्रसङ्गे मया विस्तरेण प्रपञ्चयिष्यते।

## अपाणिनीयव्याकरणानां प्रादुर्भावः

### चान्द्रव्याकरणम्

अथेदानीं महाभाष्यादिग्रन्थैरुपबृंहितमिदं पाणिनीयं व्याकरणशास्त्र- मतीव गभीरं विस्तृतं च सञ्जातम्। सामान्याश्छात्राः व्याकरणध्ययने विरताः बभूवुः। तदर्थं सुलभव्याकरणस्यावश्यकता आसीत्। अतः बौद्धमतावलम्बिना चन्द्रगोमिनामकेन विदुषा १००० तमे विक्रमाब्दपूर्वे वर्षे पाणिनीयव्याकरणे किमपि परिवर्तनं विधाय तत्सदृशमेकमपरं व्याकरणं विरविचतम्। अयं स्वकीयग्रन्थप्रपूरणे पातञ्जलमहाभाष्यात्महत्साहाय्यं गृहीतवान्। यद्यप्यत्र पाणिनीयतत्वानामाश्रयणं कृतं वर्तते। तथापि केचन मूलगामिनो विचारा अप्यवलोक्यन्ते, ये खलु महाभाष्ये नोपलभ्यन्ते। संप्रति, चान्द्रव्याकरणं सम्पूर्णं नोपलभ्यते। जर्मन-देशे यच्चान्द्रव्याकरणं प्रकाशितं तत्सम्पूर्णं नास्ति। यतोहि तत्र स्वरप्रक्रिया-निर्देशको भागो नास्ति[2]।

### कातन्त्रव्याकरणम् -

कातन्त्रव्याकरणस्य संस्कृतवाङ्मये महत्वपूर्णं स्थानं वरीवर्ति। शास्त्रमिदं काशकृत्स्नस्यैव संक्षिप्तं रूपम्। ग्रन्थोऽयं कौमारः कलापश्चेति नाम्ना लोके प्रसिद्धिमवाप। डॉ० बेवरमहाभागेन[3] समुल्लिख्रितं यदस्य व्याकरणस्य प्रणयनं तेषां कृतेऽभवत्, ये खलु प्राकृतमाध्यमेन संस्कृतभाषामध्येतुमैच्छन्। अपि च, पालिभाषायाः कच्चायन-व्याकरणमपि कातन्त्रव्याकरणमधिश्रित्यैव प्रवर्तते।

कथासरित्सागरस्यैकां कथामनुसृत्य शर्ववर्मण विदुषा अनायासेन स्वीयराज्ञः शालिवाहनस्य व्याकरणशस्त्रपरिज्ञानाय नूतनव्याकरणस्य रचनां प्रतिज्ञाय भगवतः शिवस्याराधना विहिता। अनन्तरं सः शिवस्याज्ञया कुमारकार्तिकेय माराध्य तस्य कलापात् शास्त्रमिदं निर्ममे। अतः व्याकरणमिदं कलापः कौमारश्चेति नाम्ना प्रसिद्धं वर्तते। पं० के० पी० त्रिवेदिमहाभागेन कलापव्याकरणप्रादुर्भावप्रस्तावे वनमालिविदुषः मतमुद्धृतम् यथा- "स च शर्ववर्माऽचिरेणैव कालेन राजानं व्याकरणसंस्कृर्तुं प्रतिज्ञाय शिवस्याराधनां कृतवान्। देवस्य च शम्भोरनुज्ञया कार्तिकेयमाराध्य शिखिवाहनस्य शिखिनां कलापाद् व्याकरणं संगृह्य नृपमल्पकालेनैव व्याकरणाभिज्ञं कृतवान् इत्यस्य 'कलापः' इति नामाऽभूत्। कातन्त्रव्याकरणं ख्रिष्टाब्दस्य प्रथमशतकादनन्तरं चतुर्थशतकपर्यन्तं विरचितमासीदिति बेल्वरकरमहोदयानाम-

---

१. न्यासः भाग - १ प्रस्तावना पृ० १८

२. डॉ० ब्रह्मानन्द त्रिपाठी-व्या०शास्त्रेतिहासः पृ० ६७

३. 'History of Sanskrit literature' p.227

तम् ।[१] कातन्त्रव्याकरणोपरि दुर्गासिंहप्रणीता टीकाऽपि काशिकातः पूर्ववर्तिनीति पं० युधिष्ठिरमीमांसकमहोदयैः प्रतिपादितम् ।[२] ।

व्याकरणग्रन्थोऽयं सन्धिः, नामचतुष्टयम्, आख्यातम् कृदन्तश्चेति चतुर्षु विभक्तः । तत्र चावान्तरप्रकरणानि यथा-

१- सन्धिः - संज्ञाः, स्वरसन्धिः, प्रकृतिभावः, व्यञ्जनसन्धिः, विसर्गसन्धिश्चेति ।

२- नामचतुष्टयम् - (अष्टपादाः) स्वरान्तपादः, व्यञ्जनान्तपादः, सखिपादः युष्मत्पादः, कारकपादः, समासमादः, तद्धितपादः, स्त्रीप्रत्ययान्तपादश्च ।

३- आख्यातम्- (अष्टौ पांदाः) परस्मैपादः, प्रत्ययपादः, द्विवचनपादः, सम्प्रसारणपादः, गुणपादः, अनुषङ्गपादः, इडागमपादः धुट्पादश्च ।

४- कृदन्तपादः - (पञ्चपादाः) सिद्धिपादः धातुपादः, कर्मपादः, क्वन्सुपादः (उणादिपादः) धातुसम्बन्धपादश्चेति ।

यद्यपि कातन्त्रव्याकरणं भाषायाः लघुतरं व्याकरणं तथापि पाणिनीय-व्याकरणेऽनुक्तानां केषांचित् नूतनप्रयोगाणां सिद्धिं प्रर्दशयति । पाणिनीयतन्त्र-वदेतेषां चान्द्रकातन्त्रादिव्याकरणानां सार्वदेशिकः प्रचारो नैव जातः । किन्तु रूपमालायां प्रक्रियाकौमुद्यादिषु चैषां बहुधा प्रभावोऽवलोक्यते । अतः पक्रियाक्रमस्याविर्भावप्रसङ्गेऽपाणिनीयानां कातन्त्रादिव्याकरणानामपि परिचयः समीचीन एव प्रतीयते ।

## प्रक्रियाक्रमस्याविर्भावः -

परिवर्तनशीलेऽस्मिन् जगति अध्ययनाध्यापनक्रमेऽपि परिवर्तनं स्वाभाविकमेव । इतिहासादेतदवगम्यते यत पठनपाठनादिपरम्परायां समये बहूनि परिवर्तनानि समभूवन् । पुरा अध्ययनादिक्रिया मौखिकी आसीत् । अनन्तरं भूर्जपत्रादिषु लेखनस्यारम्भो जातः । एवञ्च खिष्टाब्दास्य प्राग् व्याकरणाध्ययनानन्तरं वेदाध्ययनस्य परम्परा आसीत् । किन्तु परम्परेयं महा भाष्यकारस्य पतञ्जलेः समये परिवृत्तिं गता । यथा चोक्तं महाभाष्यस्य पस्पशाह्निके -

"पुरा कल्प एतदासीत् - संस्करोत्तरकालं ब्राहमणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति । वेदान्नो वैदिकाः शब्दाः, सिद्धाः लोकाच्च लौकिकाः, अनर्थकं व्याकरणमिति ।"[३]

इत्थं ख्रिष्टाब्दस्य सहस्रेभ्योऽप्यधिकवर्षपर्यन्तं पाणिनीयव्याकरणस्याध्ययनमध्यापनञ्चाष्टाध्यायीक्रमेणैवाभूत् । चीनदेशयात्रिणा इत्सिंगेनापि स्वीयभारतयात्रावर्णनप्रसङ्गे समुल्लिखितम् - "चीनदेशवास्तव्याः यदाऽध्ययनाय भारतं समागच्छन्ति, तदा पूर्वं पाणिनीयाष्टाध्याय्याअध्ययनं कर्तव्यं भवति, ततः तेभ्योऽन्ये विषयाः पाठ्या भवन्ति स्म । यदि

---

१. S.K.BELVALKAR 'Systems of Sanskrit Grammer' p 83

२. व्या० शा० का० इति भाग - १ पृ० ४०८ - ०९

३. व्या० म० भा० ( परस्पशहनिक ) सं० आ० मधुसूदन मिश्र पृ० २६

अष्टाध्याय्या अध्ययनं न स्यात्तर्हि तेषां श्रम एव वृथा स्यात्।" एतेन प्रमाणेनेदं सिध्यति यदित्सिंगस्य भारतागमनकाले व्याकरणस्याष्टाध्यायीक्रमेणौवाध्ययनस्य पद्धतिरासीत्। इत्सिगेन भारतयात्रा ख्रिष्टाब्दस्य सप्तमशतकस्योत्तरार्द्धे कृतेति सुनिश्चितमेव। परमुत्तरवर्तिनि काले पद्धतिरियं परिवर्तिता। कश्चात्र हेतुरित्यधुना विमृशामः -

अष्टाध्याय्याः काशिकादिवृत्तिषु सत्स्वपि बहुसूत्रनिष्पाद्ये एकस्मिनन्प्रयोगेऽपेक्षितानामनेकाध्यायस्थसूत्रवृत्तीनामन्वेषणम् अद्यतनानां जनानां कृते दुष्करम्। यतोहि- अष्टाध्यायीक्रमेण शब्दशास्त्रपरिज्ञानाय महान् प्रयासः कर्तव्यो भवति। प्रथमाध्यायादारभ्याष्टमाध्यायपर्यन्तं सम्पूर्णामष्टध्यायी-मधीत्यैव कोऽपिजनः रामः, रामेण, रामायेत्यादीनां प्रयोगाणां सिद्धिःकर्तुं शक्यते। यतो ह्युक्तप्रयोगाणां सिद्धिसम्पत्तये "अर्थवदधातुरप्रत्ययः प्रतिपदिकम्" (१-१-४५) "कृत्तद्धितसमासाश्च"(१-२-४६) "स्वौजसमौट्०" (४-१-२) "समजुषो रुः" (८-२-६६) "खरवसानयोर्विसर्जनीयः" (८-३-१५) "टाङसिङ.साामनात्स्याः" (७-१-१२) "अट्कुप्वाङ्नुम्व्यवायेऽपि" (८-४-२) "ङे.र्यः" (७-१-१३) "इत्यादीनां पृथक् पृथगध्यायस्थानां सूत्राणामेकत्रोपस्थितिरपेक्ष्यते। अष्टाध्याय्याञ्च सूत्राणां महती संख्या वर्तते। तत्रापि तत्तत् सूत्रेषु स्वल्पाक्षरैरेव शब्दैः गूढतमानां भावानां सन्निवेशः कृतः भगवता पाणिनिना। अतः सरलरीत्या स्वल्पेनैव कालेन व्याकरणशास्त्रज्ञानमिच्छतामध्येतॄणाम् अष्टाध्याय्याः क्रमेण शब्दशास्त्राध्ययनमत्यायासकरं भवति स्म। अतोऽध्येतारः व्याकरणाध्ययनात्पराङ्मुखा बभूवुः। अत एव सरलरीत्या व्याकरणशास्त्रज्ञानाय अष्टाध्यायीक्रमस्थ-काठिन्यनिवारणाय च प्रक्रियाक्रमस्यारम्भो जातः।

**रूपावतारः-**

यद्यपि पाणिनीयेतरव्याकरणेषु कातन्त्रस्य प्रक्रियाक्रमे प्रथमं स्थानम्, तथापि पाणिनीयव्याकरणपरम्परायां बुद्धधर्मावलम्बिना आचार्येण धर्मकीर्तिनारूपावतारनामकः प्रथमः प्रक्रियाग्रन्थो विरचितः। प्रक्रियाक्रमेण पाणिनीयसूत्राणां संघटनेन व्याकरणशास्त्रस्याध्ययनाध्यापनविधौ महत्वपूर्णं परिवर्तनं सञ्जातम्। अस्य निर्माणकालविषये एम० रङ्गाचार्यमहोदयाः भूमिकाभागे एवं लिखन्ति - "रूपावतारस्य धातुप्रत्ययपंजिकाप्रकरणे काशिकाटीकाकारयोः हरदत्तजिनेन्द्रबुद्धयोः नामग्रहणाद् रूपावतारस्य रचनाकालः ख्रिष्टाब्दस्य त्रयोदशशताब्दीपर्यन्तं भवितुमर्हति।[१] "श्री सूर्यकान्तवलिमहाभागा अपि धर्मकीर्तेः समयः १३०० ख्रिष्टाब्दे स्वीकुर्वन्ति[२]। परं मतमिदं प्रो० नीलकण्ठशस्त्रिभ्यो न रोचते। श्रीमन्तः शास्त्रिणः[३] शिलालेखादिभिः स्वकीये शोधपत्रे एवं निर्णीतवन्तः यत्पुरा "धर्मकीर्तिः" इति नाम लोकेऽत्यधिकं प्रसिद्धमासीत्। इदञ्च नाम प्रायेण तदानीं बौद्धवैयाकरणानां कृते प्रयुक्तं भवति स्म। "धम्मकीर्तिः" इति तु "धर्मकीर्तिः" इत्यस्यैवापभ्रंशरूपो भवितुं शक्यते। अस्य रूपावतारस्याध्ययनार्थं प्राचीनकालेऽनेके राजानाः आचार्योणामन्तेवासिनाञ्च व्यवस्थां चक्रुः। चोलवंशो-

---

१. द्र० रूपावतार - भाग- भूमिका पृ० १२

२. "An Introduction to Siddhant Kaumudi" (Summaries) 1969 p-418

३. K.A.NILKANTHA SHASYRI 'A Note on the Rupavatar' (Madras) Vol -111 pp.277-280

त्पन्नानां नृपतीनां शिलालेखा इममेवार्थं द्रढयन्ति । राजेन्द्रप्रथमनृपतेः राज्यकाले (१०४४ ई०) लिखितेन एण्णारियमिति शिलालेखेनास्य कथनस्य पुष्टिर्भवति । राजेन्द्रप्रथमनृपतेरुत्तराधिकारिणो राजाधिराजप्रथमस्यैकः शिलालेखः "त्रिभुवनी" इति स्थाने साम्प्रतमुपलभ्यते । तेनेदं सुस्पष्टं भवति यत् "निरूमुक्कूडल्" इति स्थानेऽपि रूपावतारस्याध्यापनार्थमेकोऽऽचार्यः १०६७ ई० वर्षे नियुक्त आसीत् । अनेन विवेचनेन प्रो० नीलकण्ठशास्त्रिणः रूपावतारस्य रचनाकालं ख्रिष्टाब्दस्य १०-१२ शतकमध्येऽङ्गीकुर्वन्ति ।

बौद्धभिक्षुणा धर्मकीर्तिना विरचितेऽप्यस्मिन् ग्रन्थे नास्तिकादीनां ग्रन्थवदत्र मङ्गलाभावो नैवावलोक्यते । अपितु "मङ्गलादौ मङ्गलमध्ये मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि चायुष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरि"ति[1] भाष्योक्तिमनुसृत्य ग्रन्थादौ ग्रन्थमध्ये च मङ्गलं दृश्यत एव तद्यथा -

**"सर्वज्ञमनन्तगुणं प्रणम्य बालप्रबोधनार्थमिमम् ।**
**रूपावतारमल्पं सकलामृजुं करिष्यामि ।।"**

अनेन मङ्गलाचरणश्लोकेन ज्ञायते यदयं धर्मकीर्तिः सौगतमतानुयायी आसीत् । ग्रन्थदाविव ग्रन्थमध्येऽपि अर्थात् उत्तरार्द्धारम्भेऽपि अनेन मङ्गलमाचरितम् । यथा -

**"प्रणम्य शिरसा देवीं बालानां हितकारिणीम् ।**
**यथासरं प्रवक्ष्यामि धातुप्रत्ययपञ्चिकाम् ।।"**

प्रक्रियाक्रमस्याध्ययनप्रसङ्गे मया अस्य ग्रन्थस्याप्यवलोकनं कृतम् । रूपमालायामस्य ग्रन्थस्य बहुधा प्रभावोऽवलोक्यत इति यथावसरं विमृक्ष्यामि ।

अष्टाध्यायीक्रमं परित्यज्य केवलं प्रयोगसाधनमभिलक्ष्य ग्रन्थोऽयं भागद्वये विभक्तः । पूर्वार्द्धमुत्तरार्द्धञ्च । तत्र पूर्वार्द्धे संज्ञावतारः, सन्ध्यवतारः विभक्त्यवतारः, अव्ययावतार स्त्रीप्रत्ययावतारः, कारकावतारः, समासावतारः तद्धितावतारश्चेति प्रकरणानि विद्यन्ते । उत्तरार्द्धे तु केवलं धातुप्रत्ययपञ्चिकेति नाम प्रकरणम् । अस्मिनग्रन्थे (स्वरवैदिकप्रकरणं विहाय) केवलं २६६४ अष्टाध्यायीसूत्राणि प्रक्रियाक्रमेण व्याख्यातानि[2] । तत्र पञ्चिकाशब्दप्रयोगेणानुमीयते यतस्मिन् प्रकरणे पञ्चधाः प्रत्ययः निहिता वर्तन्ते । यथा शुद्धधातुभ्यो तिङ्कृद्भेदेन प्रत्ययानां प्रकारद्वयम् । एवं सप्रत्ययधातुभ्यो ण्यन्तसन्नन्तयङन्तभेदेन च त्रैधमित्येवं रीत्यात्र पञ्चप्रत्ययानां निर्देशेन धातुप्रत्ययपञ्चिकेत्युक्तम् ।

अत्र ग्रन्थकारः प्रतिप्रकरणारम्भे कश्चन प्रश्नमुपस्थाप्यान्ते तस्य समाधनायैव प्रकरणमारभते । अत एवास्य ग्रन्थस्य "रूपावतारः" इति नामान्वर्थकरं प्रतिभाति । तथैवोत्तरार्द्धे धातुप्रत्ययपञ्चिकायां लकारादिक्रमोऽङ्गीकृतः, तदधीनश्च गणक्रमः । अनेन प्रकारेण प्रतिकारचर्चासमय एक एव धातुः पुनः पुनः पठ्यते । प्रक्रियेयं सारल्यं भजते । यतो ह्यस्मिन् क्रमे सर्वेषां धातूनां रूपाणि एकत्रैव समुपलभ्यन्ते । परमस्मिन्क्रमे पुनः पुनर्धातुप्रत्यावर्तनेनाध्येता गणक्रममाश्रित्य कमपि धातुं पूर्णतया नाध्येति । अतोऽत्र काठिन्यमस्त्येव ।

---

१. व्या० म० भा० ( पस्पशाह्निकम्) पृ० ३८

२. द्र०-डॉ० आद्याप्रसाद मिश्र- "प्र० कौ० वि०" पृ०- १३

ग्रन्थेऽस्मिन् प्रक्रियापद्धतेः सरलीकरणमभिप्रेत्य ग्रन्थकृता प्रथमं सार्वधातुकलकाराः प्रतिपादिताः। तदन्ते चार्धधातुकाः। चत्वारः सार्वधातुकलकाराः भाषायां व्यवहारोपयोगिनः सन्ति। एतेषां परिज्ञानेन जिज्ञासवः संस्कृते वार्तालापं कर्तुं शक्नुवन्तीति विचार्य परस्परं सम्भाषणसाधवः सर्वे धातुप्रयोगाः सार्वधातुकलकाराणां चर्चाप्रसङ्गेऽऽचार्येण व्युत्पादिताः सन्ति। आर्धधातुकप्रकरणञ्चात्र सार्वधातुकप्रकरणापेक्षया विस्तरतरं वर्तते। सूत्रार्थकरणे ग्रन्थकारः काशिकावृत्तिमनुसरति। प्रक्रियाग्रन्थानामाधारत्वेनास्य ग्रन्थस्य महत्वमतितरां वर्तते। उत्तरवर्तिग्रन्थेष्वप्यस्य ग्रन्थस्य प्रभावो दृश्यते इत्यग्रे वक्ष्यामः।

**हैमशब्दानुशासनम् -**

ख्रिष्टाब्दस्यैकादशशतके हेमचन्द्रेण सिद्धहैमशब्दानुशासननामकस्यापाणिनीयप्रक्रियाग्रन्थस्य रचना कृता। हेमचन्द्रस्य पिता चाचिगः, माता पाहिणी चास्ताम्। अस्य पिता वैदिकमतावलम्बी माता च जैनधर्मे तत्पराऽऽसीत्। अनेन स्वजनुषा मोढवंशीयवैश्यकुलोऽलङ्कृतः। अस्य जन्म ११४५ विक्रमाब्दस्य कार्तिकपूर्णिमायामभूत्।[१]

ग्रन्थेऽस्मिन् प्रथमतः सप्तमाध्यायपर्यन्तं संस्कृत-भाषाशब्दानां तथा चाष्टमेऽध्याये प्राकृत-सौरसेनी-मागधी-पैशाचीत्यादीनां विविधभाषाणां शब्दानामनुशासनं विद्यते। ३५६६ सूत्राण्यस्मिन् शब्दानुशासने सन्ति।

**प्रक्रियारत्नम् -**

संस्कृत व्याकरण शास्त्र का इतिहास "इति ग्रन्थे पं० युधिष्ठरमीमांसकमहाभागैर्लिखितम्"- "यत्सायणाचार्यस्य धातुवृत्तौ "दैवम्" इति ग्रन्थोपरि लीलाशुकमुनिप्रणीते पुरुषकारव्याख्याने च प्रक्रियारत्ननामकस्य व्याकरणशास्त्रग्रन्थस्योल्लेखो विद्यते। अतो नूनमेवायं ग्रन्थः प्रक्रियाक्रमस्य विकासे सहायक आसीत्।[२]" ग्रन्थोऽयमिदानीं नोपलभ्यते। अतः कोऽस्य ग्रन्थस्य प्रणेता, तस्य कश्च काल इत्येतत्सर्वं संशयारूढमेव। परं पुरुषकारव्याख्याने प्रकियारत्ननामकस्य ग्रन्थस्य नामनिर्देशादिदं वक्तुं शक्यते यदस्य समयः १३०० विक्रमाब्दपूर्वे वर्षे (१२४३ ख्रिष्टाब्दपूर्वे वर्षे) भवितुमर्हतीति।

**मुग्धबोधव्याकरणम् -**

बोपदेवनामकपण्डितेन ख्रिष्टाब्दस्य चतुर्दशशतकारम्भे मुग्धबोधनाकं लघुतन्त्रं प्रणीतम्। अस्य पिता केशवः प्रसिद्धः वैद्य आसीत् गुरुश्च धनेशः धनेश्वरो वा आसीत्। अस्य जन्मभूमिः महाराष्ट्रप्रदेशे देवगिरिनामके स्थाने (दौलताबाद) वर्तते।[३]

मुग्धबोधव्याकरणं संक्षेपण प्रक्रियाज्ञानाय रचितमासीत्। ग्रन्थेऽस्मिन् प्रकरणानां क्रमश्चेत्यं वर्तते - संज्ञाः, सन्ध्यध्यायः, अजन्ताध्यायः हलन्ताध्यायः, अव्ययशब्दः स्त्रीप्रत्ययः, कारकम्, समासः, तद्धितः, भ्वाद्यदादिदशगणाः गान्तः (ण्यन्तः) सन्नतः, यङन्तः, लिद्युः (नामधातुः)

---

१. "व्या० शा० इति०" - ब्रह्मानन्दत्रिपाठी पृ० ७०

२. "सं० व्या० शा० का इति०"- पं० मीमांसक : भाग - १ पृ० ३८०

३. व्या० शा० इति - डॉ० त्रिपाठी पृ० ७१

पपादः (परस्मैपदम्) मपादः (आत्मनेपदम्) ढभावम् (भावकर्म) क्तिः (लकारार्थ) कृदन्ताध्यायश्चेति। अत्र केवलं लौकिकशब्दानां साधुत्वं कृतं वर्तते। ग्रन्थान्ते केवलं बहुलं ब्रह्मणि (कु० मु०) ११८४ सूत्रे वैदिकप्रयोगाणां सम्बन्धेऽपि किञ्चिदुक्तम्।

ग्रन्थस्यादौ बोपदेवेन "ओं नमः शिवाय" इति सूत्रं मङ्गलार्थमुपन्यस्तम्। ग्रन्थेऽस्मिन् वर्णसमाम्नाये इत्संज्ञकवर्णानां समावेशो नैवावलाक्यते। प्रत्याहारा अप्यङ्गीकृताः। संज्ञानां सङ्केतनिर्धारणेऽत्र वैभिन्यं दृश्यते। यथा-

| पाणिनीयव्याकरणे | | मुग्धबोधे |
|---|---|---|
| १- ह्रस्वः | - | सु |
| २-दीर्धः | - | अर्घः |
| ३-प्लुतः | - | प्लु |
| ४-सवर्णम् | - | र्ण |
| ५-उपसर्गः | - | गिः |
| ६-धातुः | - | द्युः |
| ७-सुप्तिङ् | - | क्तिः |
| ८-गुणः | - | णुः |
| ९- वृद्धिः | - | व्रि |

डॉ० ब्रहमानन्दत्रिपाठिना स्वकीये व्याकरणशास्त्रस्येतिहासे मुग्धबोधस्य दशटीकानामुल्लेखो विहितः।[1] तेषु द्वे टीकेऽतिमहत्वाधायिके स्तः। एका रामविद्यालङ्कारस्य अपरा दुर्गादासद्यिवागीशस्य च।

## प्रबन्धस्योपजीव्यग्रन्थः रूपमाला तत्कर्ता च

इदानीं यावत्पाणिनीयव्याकरणशास्त्रस्य क्रमिको विकासः पणिनीयप्रक्रियाग्रन्थानामारम्भः, अपाणिनीयव्याकरणानामाविर्भावः, रूपमालया सह तेषां सम्बन्धश्च प्रदर्शितः। अष्टाध्यायीपद्धतौ रूपसिद्धयेऽनेकाध्यायस्थसूत्राणामालोडने महद्गौरवमनुभूय जनाः प्रक्रियाक्रमे प्रवृत्ताः। प्रक्रियाक्रमेणास्मिन् शास्त्रे आमूलं परिवर्तनं सञ्जातम्। अत एवास्यां प्रक्रियापरम्परायां रूपावतारो मूलग्रन्थो बीजग्रन्थो वेति निश्चप्रचम्। यद्यपि रूपावतारेऽपि कांश्चन त्रुटय आसन्। तेन तस्य सार्वदेशिकप्रचारो नैवाभवत्। नारायणभट्टेनाप्युक्तम्[2] -

**"वृत्तौ चारु न रूपसिद्धिकथना रूपावतारे पुनः।"**

तदुत्तरवर्तिकाल अस्यां प्रक्रियापरम्परायां श्रीमत्परमहंसपरिव्राजकाचार्यविमलसरस्वतीमहाभागैः रूपमालानामकस्य पाणिनीयप्रक्रियाग्रन्थस्य रचना कृता। ग्रन्थस्यास्य जिज्ञासूनां बालानां पाणिनीयशास्त्रे प्रवेशाय प्रक्रियाज्ञानाय च प्रणयनं जातम्। यथा चोक्तं रूपमालारम्भे -

**"शिवमभिवन्द्य विदध्मो मालामल्पां सुरूपकुसुमानाम्।**
**शिशुकण्ठभूषणार्थं पाणिनिसूत्रैरनेकगुणैः॥"**

---

१. व्या० शास्त्रेतिहासः (चतुर्थाऽऽननम्) पृ०- ७१

२. प्रक्रियासर्वस्वम् (संज्ञाखण्डः) पृ० - ३

लघुकलेवरकस्यास्य ग्रन्थस्य प्रक्रियाग्रन्थानां विकासे महत्वपूर्ण योगदानं वरीवर्ति। यद्यपि सिद्धान्तकौमुद्यादिषु च रचनापद्धतिरस्माद् ग्रन्थाद् भिन्नैव वर्तते। तथापि प्रक्रियापरम्परायामग्रगामित्वादुपयोगित्वाच्चास्य रूपमालेति ग्रन्थस्य महत्वपूर्णं स्थानम्। अस्य ग्रन्थस्योत्तरवर्तिषु प्रक्रियाग्रन्थेषु प्रभावोऽवलोक्यत इति यथावसरं वक्ष्यामः।

ग्रन्थोऽयमद्यावधि वारद्वयं प्रकाशितः पूर्वं वाराणसीतः पं० मुरलीधरमिश्रमहोदयैः सम्पादितः प्रकाशितश्च। अनन्तरं १९७१ ख्रिष्टाब्दे वाराणसीत एव मोतीलाल बनारसीदास-संस्थायाः सुन्दरलालजैनमहोदयेन श्रीकेशवदेवशास्त्री-पाण्डेयकृतहिन्दी-व्याख्यापुरःसरं प्रकाशितः। ग्रन्थोऽयं न सर्वथा दोषरहित इति ग्रन्थविवेचनप्रसङ्गे वक्ष्यते। अस्यैको हस्तलेखः पुण्यपत्तनस्थ-भाण्डारकरप्राच्यविद्याशोधसंस्थाने, अपरश्च कालिका-तास्थराजकीयसंस्कृत-महाविद्यालयस्य पुस्तकालये वर्तते। अनयोः हस्तलेखयोः यथाक्रमं वि० सं० १५०७ (१४५०ई०) वि० सं० १४९३ = (१४३६ई०) लेखनकालस्योल्लेखो• विद्यते। अतः के० पी० त्रिवेदि महोदयैः[१] प्रक्रियाकौमुदीसमकालिकोऽयं ग्रन्थ इत्युक्तम्। परं डॉ० बेल्वरकरमहोदयानां मतम् यत्पाडुलिपीनां तिथिः सत्या चेतर्हि अस्य ग्रन्थस्य समयः १३५० ख्रिष्टाब्दात् पश्चान्नैव भवितुमर्हति।

रूपमालायां कालिदास-भारति-माघ-प्रभृतीनां कवीनामुदाहरणानि यत्र तत्र वर्तन्ते। अमरकोशकारस्तु बहुत्र नामनिर्देशपूर्वकं विमलसरस्वतीभिरुद्धृतः। यथा - "भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः॥ इत्यमरसिंहः।[२]"

तथैव कारकमालायां भोजदेवरचितस्य सरस्वती -

**कण्ठाभरणस्याधोलिखिते कारिके समुद्धृते[३]** -

**"आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्।**
**कोशदण्डसमग्राणां किमेषामस्ति दुष्करम्॥ १ ॥**

**इदं हि शास्त्रमाहात्म्यं दर्शनालसचेतसाम्।**
**अपशब्दवदाभाति न च सौभाग्यमुज्झति॥ २ ॥"**

प्रो० एस० के० डे महाभागाः[४] १०१० ख्रिष्टाब्दतः १०५५ ख्रिष्टाब्दपर्यन्तं भोजस्य समयं स्वीकुर्वन्ति। परं डॉ० राघवन् महाशयः[५] राज्याभिषेक-समयं १०१० ई० तथा मृत्योर्समयं १०६२ ख्रिष्टाब्दात्परं मन्यते। अत एव ख्रिष्टाब्दस्य द्वादशशताब्द्या अन्तिमभागो विमलसर स्वतीनां समय इत्यनुमीयते।

---

१. के० पी० त्रिवेदी - प्र० कौ० भाग - १ प्रस्तावना पृ० ३०

२. रु० मा० (नियतलिङ्गमाला) पृ० २२

३. सरस्वती कण्ठाभरणम् - पृ० - १५५

४. Sanskrit Poeties - page - 136

५. Dr. Raghavan Srinagar prakash page - 6 Footnote No. 1

एवं रूपमालायां समासमालाख्यप्रकरणे श्रीकृष्णमिश्रविरचितस्य प्रबोधचन्द्रोदय-नामकनाटकस्य प्रस्तावनायाः श्लोकोऽयं विमलसरस्वतीभिरुद्धृतः -

**विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम् ।**
**श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ।।**[1]

प्रबोधचन्द्रोदयः प्रतीकात्मकशैल्याः प्रथमं नाटकम् । नाटकमिदं चंदेलवंशीयस्य महाराजस्य कीर्तिवर्मणः समये तस्यैव प्रशस्त्यां लिखितमासीत् । कीर्तिवर्मणश्च कालः ऐति-ह्यविदि्भः ११०७ विक्रमाब्दात्परं स्वीकृतः। एवमुक्तविवेचनेन सुस्पष्टं प्रतीयते यद्रूपमा-लाकारस्य समयः ख्रिष्टाब्दस्य द्वादशशताब्द्यां ततः परं वाऽऽसीत् ।

रूपमालाकारैः विमलसरस्वतीभिः कुत्रापि स्वकीयः परिचयो नैव निर्दिष्टः । अत एवास्य स्थानादिविषये किमपि नैव परिज्ञायते । अयं परमहंसः सन्यासी आसीदिति ग्रन्थान्ते लिखितया पुष्पिकया परिज्ञायते - यथा - "इति श्रीमत्परमहंसपरिव्राजकाचार्यविमलसरस्वती-विरचिता रूपमाला समाप्ता ।"

इति । अयं परमशिवभक्तः आस्तिकः साधुरासीत् । यथाग्रन्थारम्भे ग्रन्थान्ते चाने-नाचार्येण भगवान् शिवः सम्यगाराद्धः ।

ग्रन्थान्ते च -

**त्रिविक्रमादेः कृपया गिरीश,**
**त्वच्चिन्तनस्याल्पतरान्तरायः ।**
**मयैष सोढः कतिचिद् दिनानि,**
**प्रीत्यै तवैवातिकृपाप्रियस्य ।।"**

रूपमालायां प्रकरणानां क्रमश्चेत्थं वर्तते संज्ञामाला, सन्धिमाला, अजन्तमाला, हलन्तमाला, सर्वनाममाला, नियतलिङ्गमाला, छान्दसमाला, अव्ययमाला, स्त्रीप्रत्ययमाला, कारकमाला, तिङन्तमाला, सनादिभागः, कृदन्तमाला, तद्धितमाला, समासमाला च । ग्रन्थेऽस्मिन् सूत्राणां संघटने सूत्रार्थकरणे च सर्वत्रैवाचार्याणां विमलसरस्वतीनां सङ्क्षेपकरणप्रवृत्तिरवलो-क्यते ।

अतः ग्रन्थेऽस्मिन् न सन्ति सर्वाणि पाणिनीयसूत्राणिः आचार्यैः विमलसरस्वतीभि-रत्र केवलं २०४६ सूत्राणि व्याख्यातानि । संक्षेपरुचेः ग्रन्थकारस्य संक्षेपेण व्याकरणशास्त्रस्य प्रक्रियापद्धतौ प्रस्तुतीकरणमेवोद्देश्यमासीत् । येन जिज्ञासूनामिह शास्त्रे प्रवेशः सुकरो भवेत् । अत्र सूत्रार्थकरणेऽप्याचार्यस्यैषा प्रवृत्तिदृष्टिपथमायाति । रूपमालायाः निर्माणेन पूर्वोक्ताया अपेक्षायाः पूर्तिः कथं सञ्जातेति ग्रन्थस्य क्रमिकविवेचनेन सुस्पष्टं भविष्यति ।

## रूपमालायाः टीका -

अस्याः रूपमालायाः व्याख्यानं विष्णुभट्टकृतमिति प्रक्रियाकौमुद्याः प्रकाशटीका-यामुल्लिखितम् । परन्तु व्याख्येयमद्यावधि अनुपलब्धैव । तत्र कोऽयं विष्णुभट्टः, कश्चास्य काल ? - इति प्रमाणाभावान्निर्णेतुं न शक्यते ।।

---

१. प्रबोधचन्द्रोदयः (प्रस्तावना) पृ०१

## रूपमालाया उत्तरवर्तिप्रक्रियाग्रन्थाः

### प्रक्रियाकौमुदी -

रूपमालाया अनन्तरमियं प्रक्रियापरम्परा प्रक्रियाकौमुदीग्रन्थेन पल्लविता सिद्धान्तकौमुद्या च पुष्पिता तत्रैव पर्यवसिता च । सिद्धान्तकौमुद्या उपजी व्यग्रन्थोऽयं शेषवंशावतंसेन मनीषिणा श्रीमता रामचन्द्राचार्येण प्रणीतः ।

प्रक्रियाकौमुद्याः निर्माणे किं प्रयोजनमित्यस्मिन् विषये प्रसादकृता विट्ठलाचार्येणोक्तम् - "यथा कौमुदी सुखरूपा सती सकलानर्थानभिव्यनक्त्येवमियं सुखं जनयन्ती स्वल्पैरेव शब्दैः संकलान् शब्दानाञ्जस्येन प्रकाशयति । अन्ये हि ग्रन्थाः न प्रकाशन्त इत्यवान्तरप्रयोजनमस्याः ।" इति ।

ग्रन्थेऽस्मिन् कुत्रापि ग्रन्थकृता रचनाकालस्योल्लेखो नैव कृतः । अस्य ग्रन्थस्योपरि प्रसादनाम्नी टीका ग्रन्थकर्तुः पौत्रेण विठ्ठलाचार्येण विरचिता ।पुण्ययत्तनस्थडेक्कनकालेजस्य ग्रन्थालये प्रक्रिया-प्रसादटीकायाः एको हस्तलेखो वर्तते । तत्र सं० १५३६ = (१४७९) ई० लेखनकालस्योल्लेखो विद्यते ।

अनेन विवरेण विज्ञायते यद् विट्ठलः रामचन्द्रस्य कालं १४८० विक्रमाब्द इति स्वीकुर्वन्ति । हेमाद्रिविरचितरघुवंशमहाकाव्यस्य टीकायां प्रक्रिया-कौमुद्याः प्रक्रियाप्रसादस्य च नामोल्लेखदर्शनात् के० पी० त्रिवेदिमहोदयाः ख्रिष्टाब्दस्य चतुर्दशशतकः रामचन्द्रचार्यस्य काल इति निर्धारयन्ति ।

प्रक्रियाकौमुदीकारः श्रीरामचन्द्रचार्यः आन्ध्रदेशवास्तव्यः शेषकुलोद्भवः कौण्डिन्यगोत्रीयः ब्राह्मण आसीत् । वंशोऽयं पुराकालत एव व्याकरणशास्त्रे लब्धप्रतिष्ठो बभूव । विट्ठचार्येण प्रसादटीकायामस्य वंशस्य वृहत्परिचयः प्रदत्तः । प्रसादकारोऽयं रामचन्द्रं शेषस्य, पाणिनेः, वररुचेः शिवस्य वावतारं मनुते । श्रीरामचन्द्राचार्यस्य कुलं परमपावनं विष्णुभक्तं चासीत् । वंशेऽस्मिन् समुत्पन्नाः जनाः व्याकरणे न्यायशास्त्रे च विश्रुताः विद्वांस आसन् । श्रीगोपालाचार्याः विठ्ठलाचार्याश्चैतेषां गुरव आसन् । प्रक्रियाकौमुदीकारः रामचन्द्रः "कालनिर्णयदीपिका, वैष्णवसिद्धान्तदीपिका" इति ग्रन्थद्वयमपि व्यरचयत् ।

ग्रन्थोऽयं भागद्वये विभक्तः - पूर्वार्द्ध उत्तरार्द्धश्चेति । तत्र पूर्वार्द्धे सुबन्तप्रक्रिया । सुबन्तज्ञानाय क्रमेण संज्ञाः, सन्धयः, स्वादयः स्त्रीप्रत्ययाः, विभक्त्यर्थाः, समासाः, तद्धितप्रत्ययाश्च निरूपिताः । उत्तरार्द्धे तु तिङन्त-प्रक्रिया । तत्र पूर्वभ्वाद्यदादयो दशगणाः, अनन्तरं ण्यन्त - सन्नन्त - यङन्त - यङ्लुङन्तादयः क्रमेण निरूपिताः । धातुभ्य एव विहिततया कृत्प्रत्यया अप्युत्तरार्द्धे एव विवेचिताः । ग्रन्थान्ते च केषाञ्चिद् वैदिकप्रयोगाणां साधुत्वमुपन्यस्तम् । अत्रापि ग्रन्थकारस्य ग्रन्थसङ्क्षेप एव प्रधानं लक्ष्यम् । अतः संक्षेपप्रधानेऽस्मिन् ग्रन्थे । १५२६ सूत्राणि परित्यज्य केवलं २४७० सूत्राण्येव व्याख्यातानि । अमुं विषयमधिकृत्य ग्रन्थान्तेऽऽचार्याः स्वयमेव निवेदयन्ति । यथा -

**आनन्त्यात्सर्वशब्दाः हि न शक्यन्तेऽनुशासितुम् ।**
**बालव्युत्पत्तयेऽस्माभिः संक्षिप्योक्ता यथामति ॥**

**प्रक्रियाकौमुदी सेयं रामचन्द्रप्रकाशिता ।**
**असद्वचस्तमो वध्यात् सच्चकोरप्रिया चिरम् ।।**[१]

## सिद्धान्तकौमुदी -

संस्कृतवाङ्मये वैदुष्यमभिलषतामध्येतॄणां सिद्धान्तकौमुद्या अध्ययनमतीवावश्यकम् । यद्यपि सिद्धान्तकौमुदीतः पूर्वं रूपावतार-रूपमाला-प्रक्रियाकौमुदीत्यादिग्रन्थाः विद्वद्भिः रचितास्तथापि तेषु समेषां पाणिनीयसूत्राणां समावेशो नासीत् । संक्षिप्ततया ते व्याकरणशास्त्रस्य सान्मान्यज्ञानाय एवोपकारका आसन् । अतो निखिलविद्यापारङ्गतैः भट्टोजिदीक्षितैःन्यूनतामिमां पूरयितुं सम्पूर्णाष्टाध्याय्याः सूत्राणां समावेशं विधाय "सिद्धान्तकौमुदी " इति नामकं सुमहान् प्रकियाग्रन्थो विरचितः । प्रक्रियाग्रन्थानां क्रमश्चास्मिन्नेव ग्रन्थे पर्यवसितः ।

अयं भट्टोजिदीक्षितः महाराष्ट्रियब्राहमण इति केचित् स्वीकुर्वन्ति, अपरे तु सारस्वतब्राहमण इति वदन्ति । अस्य कालिनिर्णयविषये बहव ऐतिह्यविदः विद्वांसः पृथक् पृथक् मतानि प्रदर्शयन्ति । तथा हि - डॉ० बेल्वरकरमहाभागस्य[२] मतेन १६३० ईशवीयवर्षसमीपवर्ती, प्रो० पी० वी० काणेमहोदयस्य[३] मतेन १५८०-१६३० ख्रिष्टाब्दसमीपवर्ती, ए० वी० कीथमहाशयस्य[४] मतेन १७०० ई० ,एम० विण्टरनिट्जमतेन[५] च १६२५ ख्रिष्टाब्दो दीक्षितस्य कालः ।

अस्य गुरोः विषयेऽपि विदुषां मतवैभिन्यं वर्तते । अस्य शब्दकौस्तुभग्रन्थे "तदेतत्सकलमभिधाय प्रक्रियाप्रकाशे गुरुचरणैरुक्तम्" इत्युक्त्या ज्ञायते यत्प्रक्रिया प्रकाशकारः श्रीशेषकृष्णः भट्टोजिदीक्षितस्य गुरूरासीत् । प्राप्तहस्तलेखानुरोधन प्रकाशटीकायाः समयः १४७९-१४९७ ख्रिष्टाब्द आसीत् । अतो दीक्षितस्य कालः १५१० तः १५७५ विक्रमाब्दपर्यन्तं भवितुमर्हति । अपरत्र पं० युधिष्ठिर-मीमांसकमहोदयमतेन भट्टोजिदीक्षितः तत्वकौस्तुभेऽप्ययदीक्षितं स्तौति । यस्य कालः १५३० तः १६०२ विक्रमवर्षपर्यन्तमासीत् । एतेन ज्ञायते यत् अप्ययदीक्षितादप्ययं शिक्षां गृहीतवान् । पं० मीमांसकमहोदयाः[६] स्वकीये व्याकरणशास्त्रस्येतिहासे प्रथमं भट्टोजिदीक्षितं शेषकृष्णपुत्रस्य रामेश्वरस्य शिष्यं मन्वाना अग्रे पुनः श्रीशेषकृष्णस्यैवायं दीक्षितः शिष्य आसीदिति प्रतिपादयन्ति । परस्पर-विरुद्धत्वादत्र विषये किमपि वक्तुं न पार्यते । तथा च शेषकृष्णाप्ययदीक्षिता-दिकालविषयेऽविचार्य दीक्षितप्रणीतग्रन्थानां हस्तलेखलिपिकालप्रमाणेन भट्टोजिदीक्षितस्य कालः १५३५ ख्रिष्टाब्दादूर्ध्वमेव भवितुमर्हतीति । सिद्धान्तकौमुदी, प्रौढमनोरमा, शब्दकौस्तुभः वैयाकरणभूषणकारिका चेति दीक्षितमहोदयानां व्याकरणग्रन्थाः सन्ति । तेषु वैयाकरणसिद्धान्तकौमुदी अल्पीयसा कालेन लोकप्रियतामध्यगच्छत् । अत्र ग्रन्थकृता प्रक्रियाक्रमानुसारं समाश्रिता विषयप्रतिपादनपद्धतिः, प्रकरणरचना, सूत्रार्थादिकं सर्वं प्रशंसार्हं वर्तते । ग्रन्थोऽयं द्विधा विभक्तः पूर्वार्द्ध उत्तरार्द्ध-

---

१. प्र० कौ० भाग - ३ पृ० ६१४

२. 'Systems of Sanskrit Grammar' p. 46-47

३. 'History of Sanskrit poetics' p.324

४. 'History of Sanskrit litrature' p.430

५. 'History of Indian literature' vol. 3 part 11 p.435

६. व्या० शा० इति० भाग -, पृ० २९४

श्चेति। "तिङ्सुबन्तचयो वाक्यमि "ति वैयाकरणसमयं सम्यगधार्य सुबन्तानां परिज्ञानाय क्रमेण संज्ञा-सन्धि-स्वादि-स्त्रीप्रत्ययकारकसमासतद्धितादयः पूर्वार्द्धे विवेचिताः। उत्तरार्द्धे भ्वाद्यादयो दशगणाः ण्यन्तादिप्रक्रिया कृत्प्रत्ययाश्च-निरूपिताः। अन्ते च वैदिकीप्रक्रिया स्वरप्रक्रिया, लिङ्गानुशासनम् गणपाठश्च व्याख्यातः। सिद्धान्तकौमुद्याः क्रमोऽय-मतीव हृद्यं वैज्ञानिकं चास्ति। पूर्वार्द्धोत्तरार्द्धविभागेऽत्र प्रक्रियाकौमुद्याः प्रभावो वर्तते। परं प्रकरणान्यत्र परिवर्त्य निरूपितानि लौकिकवैदिकोभयविधप्रयोगाणां साधुत्वार्थपुपयोगित्वादस्य ग्रन्थस्य समधिकं प्रचारः सञ्जातः। ग्रन्थेऽस्मिन् सर्वाणि पाणिनीयसूत्राणि ग्रन्थकृता व्याख्यातानि। रूपावतार-रूपमाला-प्रक्रियामुद्यादिषु प्रयोगाणां साधुत्वप्रतिपादनाय बहूनि सूत्राण्येतादृशा-न्यव-लोक्यन्त येषां व्याख्यानं ग्रन्थकृद्भिः नैकबारं कृतम्, परं सिद्धान्तकौमुद्यां पूर्वव्याख्यात-सूत्रस्य पुनर्व्याख्यानं कुत्रापि नोपलभ्यते। सूत्रार्थकरणेऽपिनैकेषु स्थलेषु पूर्वां सूत्रार्थपद्धतिं विहाय नवीनमेव सूत्रार्थं प्रतिपादितम्।

ग्रन्थोऽयं बहुभिः विद्वद्भिः व्याख्यातः, परमुपयोगिनीनां शङ्कासमाधानानां यादृशः सङ्ग्रहः श्रीमज्ज्ञानेनद्रसरस्वतीविरचिततत्वबोधिन्यामस्ति तादृशोऽन्यत्र दुर्लभः। ततः वासु-देवदीक्षितविदुषाऽतिविशदा सरला बालमनोरमाख्या व्याख्या विलिख्य बहुपकृताऽध्येतारः।

## प्रक्रियासर्वस्वम्

श्रीमन्नारायणभट्टाविरचितमिदं प्रक्रियासर्वस्वं नाम व्युत्पित्सूनां किमपि महनीयं मतिमञ्जूषामान्यं सर्वस्वमेव। श्रीनारायणभट्टपादः केरलदेशीय आसीत्। अस्य पिता ब्रह्म-श्रीमातृदत्ताभिधो नाम कश्चन मीमांसापण्डितो द्विजन्द्र आसीदिति प्रक्रियासर्वस्वग्रन्थनिर्मित-प्रतिज्ञानिर्वहणपरात् पद्यात् स्पष्टं परिज्ञायते। तद्यथा -

**भूखण्डे केरलाख्ये सरितामिह निलामुत्तरर्णव नावा-**
**क्षेत्रे गव्यूतिमात्रे पुनरुपरिनवग्रामनाम्नि स्वधाम्नि।**
**धर्मिष्ठाद् भट्टतन्त्राद्यखिलमतपटोमातृदत्त द्विजेन्द्रा**
**ज्जातो नारायणाख्यो निरवहदतुलां देवनार [illegible]ज्ञाम्**[1] ॥

निजगुरोरच्युतमहाभागादयं शब्दशास्त्रविद्यां लब्धवानिति प्रक्रियासर्वस्वस्यार-म्भिक पद्येनावगम्यते। यथा -

**अच्युतगुरुकृपया पाणिनिकात्यायनादिकारुण्यात्।**
**यत्नः फलप्रसूः स्वात्कृतरागरसोऽद्य शब्दमार्गजुषाम्॥**

अस्य भट्टपादस्य जीवितसमयः - कोलम्बीय ७३५ तमवर्षादारभ्य ८४१ तमवर्ष-पर्यन्तः षडुत्तरशतसंवत्सरपरिमित इति के० साम्बशिवशास्त्रिमहोदयैः[2] प्रक्रियासर्वस्वप्रस्ताव-नायां प्रतिपादितम्। पं० आशारामदासेन[3] स्वकीये शोधपत्रे लिखितम् यन्नारायणभट्टस्य जीवनकालः १५६० ईशवीयतः १६६६ ईशवीयपर्यन्तं तिष्ठति। जनश्रुत्या ज्ञायते यत् नारा-यणभट्टः भट्टोदीक्षितसमकालिक आसीत्।

---

१. प्रक्रियासर्वस्वम् (प्रस्तावना) पृ० xviii

२. प्रक्रियासर्वस्वम् (प्रस्तावना) पृ० xvii

३. प्रक्रियासर्वस्वसमीक्षा, भाग ३ पृ० २०प्रक्रियासर्वस्वम् (संज्ञाखण्डे) पृ० ३

अस्य ग्रन्थस्य विषयप्रतिपादनपद्धतिः प्रक्रियाकौमुद्यादितः भिन्नैव वर्तते। अत्र विंशतिखण्डेषु विषयप्रतिपादनं विद्यते। यथोक्तं ग्रन्थकृता स्वयमेव

**इह संज्ञा, परिभाषा, सन्धिः, कृतद्धितसमासाश्च।**
**स्त्रीप्रत्ययाः सुबर्थाः सुपां विधिश्चात्मनेपद विभागः।**
**तिङपि च लार्थविशेषाः सन्नन्तयङ्यङ्लुकश्च सुब्धातुः।**
**न्यायो धातुरुणादिश्छान्दसमिति सन्तु विंशतिखण्डाः**[१] ॥

## लघुसिद्धान्तकौमुदी मध्यसिद्धान्तकौमुदी च -

श्रीमद्भट्टोजिदीक्षितविदुषा विरचिता वैयाकरण-सिद्धान्तकौमुदी प्रौढा पाण्डित्य-परिपर्णा आसीत्। सुकुमारमतीनां बालानां प्रवेशोऽत्र दुष्कर इति विचार्य भट्टोजिदीक्षितशिष्येण वरदराजाचार्येण लघुसिद्धान्तकौमुदी नाम्ना लघुकलेवरकः ग्रन्थः प्रणीतः। ग्रन्थेऽस्मिन् सिद्धान्तकौमुदीतः प्रकरणविपर्यासोऽवलोक्यते। लघुसिद्धान्तकौमुदीयं स्वभावत एव बालोपयोगिनी सञ्जाता। अनया बलानां महानुपकारः समजायत।

लघुकौमुद्यारनन्तरं १५५० विक्रमाब्देऽयं वरदराजः स्वगुरोः सिद्धान्तकौमुदीं लघुरूपेण संकलय्य मध्यसिद्धान्तकौमुदीं प्रणीतवान्। आचार्यस्येयमपरा कृतिरपि विद्वत्समाजे स्तुत्या सञ्जातेति शम्॥

---

१. प्रक्रियासर्वस्वम् ( संज्ञाखण्डे ) पृ० ३

## तृतीयोऽध्यायः

# रूपमालादिशा व्याकरणशास्त्रस्य प्रस्तुतीकरणविमर्शः

**संज्ञामाला -**

सकलव्याकरणशास्त्रप्रवृत्तेः संज्ञामूलकत्वादौ रूपमालायां संज्ञामालेति प्रकरणमुपन्यस्तम् तत्राचार्यपादैः विमलसरस्वतीभिः चतुर्दशसूत्रैः वर्णोपदेशानन्तरं प्रत्याहारसाधकं "आदिरन्त्येन सहेता" इति सूत्रमुक्तम्। ततः प्रत्याहारसिद्धावुपकारकत्वात् "हलन्त्यम्, तस्य लोपः" इतीत्संज्ञा लोपसंज्ञा च विनिर्दिष्टे। यतः पाणिनीयव्याकरणे प्रत्याहाराणां महिमा अद्वितीय एवास्ति। एतज्ज्ञानाभावेऽस्मिन् शास्त्रे लेशमात्रप्रवेशोऽप्यसम्भवः। इत्थं प्रत्याहारसाधनप्रक्रियामुपदिश्य अगित्याद्येकचत्वारिंशत्प्रत्याहाराणां पाठं कृतवान् ग्रन्थकारः। प्रत्ययादि प्रत्याहाराणामुपदेशोपि अन्ये त्वित्यादिना कृतः। यथा - "सुप्सुदतिङत्तङादयः।" "लण्मध्ये त्वित्संज्ञकः" इत्युक्त्वा रप्रत्याहारोऽपि प्रदर्शितः। तत्र "उपदेशेऽजनुनासिक इत" इत्यनेनेत्संज्ञा सिद्धा। कीदृशं चात्रानुनासिकत्वमिति "प्रतिज्ञानुनासिक्याः पाणिनीयाः" इति वैयाकरणपरम्परा उपदिष्टा।

अनन्तरं सवर्णग्राहकताविधायकं "अणुदित्सवर्णस्य चाप्रत्ययः" सवर्णसंज्ञाविधायकं "तुल्यास्यप्रयत्नं सवर्णम्" इति सूत्रे पठिते। अत्रैषां सूत्राणां संघटनस्य क्रमः महाभाष्योक्तिमनुसरति। तद्यथा - वर्णनामुपदेशस्तावदुपदेशोत्तरकालेत्संज्ञा, इत्संज्ञोत्तरकालः प्रत्याहारः प्रत्याहारोत्तरकाला सवर्णसंज्ञा, सवर्णसंज्ञोत्तरकालं सवर्णग्रहणमिति।

तत अचां ह्रस्वादिभेदप्रदर्शनाय "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" "अचश्च" इत्यादिसूत्राणि संग्रथितानि। अत्र ग्रन्थसङ्क्षेपस्य प्रवृत्तिमनुसरता रूपमालाकृता "उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः, मुखनासिकावचनोऽनुनासिकः" इत्यादिसूत्राण्यनुक्त्वा तिसृभिः कारिकाभिः अचामष्टादशभेदा उपबृंहिता। अतः परं लघु-गुरु-संयोग-दीर्घ-गुणवृद्ध्यादयः संज्ञाः प्रदर्शिताः। अनन्तरं च विधिसूत्रोपकारकत्वेन "इकोगुणवृद्धी, स्थानेऽन्तरतमः," इत्यादपरिभाषासूत्राण्यप्यत्रैवोपन्यस्तानि।

अत्रोपन्यस्तायाः संज्ञा - मालायाः न किमपि स्वतन्त्रं वैशिष्ट्यम्। अपितु सन्धिमालायाः पूर्वं तत्प्रवेशाय तदङ्गभूतेयं संज्ञामाला। अतोऽत्राचां भेद-प्रदर्शनप्रसंगे कांचित्संज्ञाउक्त्वा वृद्धिगुणेत्यादिसन्ध्युपयोगिनीनां संज्ञानां विवरणमुक्तम्। एवञ्चात्र सन्धावनुपयोगिन्यः प्रतिपादिक-टि-धु-कारकोपसर्जनेत्यादयो बहव्यः संज्ञा अनुक्ता एव।

## सन्धिमाला

"परः सन्निकर्षः संहिता" इति पाणिनेर्सन्धलक्षणमादौ पठितम्। तत्र "दूरानात्मोत्तमाः" इत्यमरकोषवचनात् परः अतिशयितः, सन्निकर्षः = सामीप्यम्, अर्धमात्राधिककालव्यवधानाभावः, अर्धमात्राकालव्यवधानस्यावर्जनीयत्वात्। एवञ्च पूर्ववर्णोच्चारणानन्तरमर्धमात्राधिककालव्यवधानाभावेन यद्वर्णान्तरमुच्चार्यते सः सन्निकर्षः संहितासंज्ञः स्यादित्यर्थः।

### स्वरसन्धिः -

रूपमालायां हि सन्धिमाला चतुर्धा विभजते। यथा - स्वरसन्धिः, प्रकृतिभावः, व्यञ्जनसन्धिः विसर्गसन्धिश्चेति। तत्र स्वरसन्धौ पूर्वपरयोरुभयोः स्वरवर्णयोः सतोरेव सन्धिर्विधीयते। तद्यथा -

| | | | |
|---|---|---|---|
| १- लृ + आकृतिः | = | लाकृतिः | (यण्सन्धिः) |
| २- विप्र + आज्ञा | = | विप्राज्ञा | (दीर्घ सन्धिः) |
| ३- खट्वा + इह | = | खट्वेह | (गुण सन्धिः) |
| ४- गङ्गा + एषा | = | गङ्गैषा | (वृद्धि सन्धिः) |
| ५- उप + ओषणम् | = | उपोषणम् | (पररूप सन्धिः) |
| ६- ते + आगताः | = | तयागताः | (अयादि सन्धिः) |
| ७- अग्ने + अत्र | = | अग्नेऽत्र | (पूर्वरूप सन्धिः) |

इत्थं हि रूपमालायां यणादिसप्तविधाः स्वरसन्धयः विविधोदाहरण - प्रदर्शनपुरःसरं विवेचिताः। सूत्रादीनां व्याख्यानं चात्र प्रायेण काशिकावृत्तिमनुसरति। तद्यथा काशिकावृत्तौ "इकोयणची" त्यस्यार्थं विनिर्दिश्य 'दध्यत्र, मध्वत्रे' त्याद्युदाहरणानि प्रदत्तानि। यणतिरिक्तं न हि तत्र किञ्चिदन्यत्कार्यं विशेषतो निर्दिश्यते। तथैवात्र लाकृतिः, पित्रन्नम् सुन्दर्येषा, नह्यस्ति इत्याद्युदाहरणानि विद्यन्ते। परं "मध्वत्रे"त्याद्युदाहरणनिष्पत्तये यणि कृते "अनचि चे"ति द्वित्वे "झलां जश्" इत्यनेन जश्त्वेन पूर्वधकारस्य दकारे, "मद्ध्वत्र" इत्यस्य सिद्धिः। परं" सर्वत्र शाकल्यस्य" इतिसूत्रेण द्वित्वाभावमुक्त्वा "मध्वत्र" इत्येव सिद्धिं प्रदर्श्य शाकल्याचार्याणां मते द्वित्वाभावोऽपि प्रदर्शितः। अनया रीत्योदाहरणानां साधुत्वं प्रदर्शितं रूपमालाकृता। अयमेव सूत्रसंघटनक्रमः सन्धेरन्येषु स्थलेष्वपि वर्तते। अच् एव स्वराः संन्तीति सन्धिरयं प्रकियाकौमुद्यादौ अच्सन्धिरूपेण प्रसिद्धः।

### प्रकृतिभावः -

रूपमालाकारेण प्रकृतिभावोऽपि रूपावतारवत्सन्धित्वेनोररीकृतः। अत एव सन्धिमालान्तर्गते प्रकरणमिदं पृथक्तया विन्यस्तम्। प्लुत प्रगृह्या अचिनित्यमितिसूत्रेण अचि परे प्लुतसंज्ञकाः प्रगृह्यसंज्ञकाश्च वर्णाः प्रकृत्या भवन्ति। अत अच्सन्धेरङ्गभूतोऽयं प्रकृतिभाव इति केचित्। प्रकृत्या = स्वभावेन भावोऽवस्थानम्। अर्थात् सन्धयो न भवन्तीत्यर्थः। यथा - "देवदत्त ३ एहि, खट्वे एते, अमू आगतौ" इत्यादौ। प्रकरणेऽस्मिन् पूर्वं प्लुतसंज्ञायाः सूत्राणामनन्तरं च प्रगृह्यसंज्ञायाश्च सूत्राणां व्याख्यानं दृश्यते।

**व्यञ्जनसन्धिः -**

व्यजनसन्धौ प्रायेण पूर्वपरयोरुभयोर्व्यञ्जनवर्णयोर्सन्धिवलोक्यते। विगता अञ्जना अभिव्यक्तिः स्वरं विना यत्र तद्वयञ्जनम् अर्थात् हल्वर्णः। अत एव प्रकियाकौमुद्यां सिद्धान्तकौमुद्यादौ चायं हलसन्धिपदेनोच्यते।

व्यञ्जनसन्धिमालायां जश्त्वानुनासिक-चर्त्व-छत्व-श्चुत्व-तुक्-ष्टुत्वा-नुस्वार-पर-सवर्ण-रुत्वेत्यादयः क्रमेण विविक्ताः। क्वचिदज्झलोरपि सतोरागमरुपः सन्धिर्भवति। तद्यथा- "देव + छत्रम् = देवच्छत्रम्,प्रत्यङ् + आस्ते = प्रत्यङ्ङास्ते,षट् + सा = षट्त्सा" इत्यादि। एतेषां साधुत्वार्थं "छेच", इत्यादि तुग्विधायकानि पञ्चसूत्राणि, "ङमो ह्रस्वादचि ङमुण् नित्यम्" इति ङमुडागमविधायकमेकम्, "ङसिधुट्" नश्चे ति धुड्विधायकसूत्रद्वयमस्यां व्यञ्जनसन्धिमालायामेवोक्तानि। प्रक्रियानिर्वाहायात्राप्यपेक्षितानां सूत्राणां संग्रहस्य रीतिः पूर्ववदवलाक्यत एव।

**विसर्गसन्धिः -**

विसर्गसन्धिप्रकरणे पूर्वपरयोर्हल्विसर्गवर्णयोः सतोविसर्गस्थानिकादेशरूपः सन्धिर्दृश्यते। तद्यथा - "कः + छन्नः = कश्छन्नः,वासः क्षौमम्,कः शमः" इति। अतो पूर्वं व्यञ्जनसन्धावेव "विसर्जनीयस्य सः" इति विसर्गस्य सत्वविधायकसूत्रमुक्तम्। ततश्चात्र तदपवादभूतानि "शर्प्परे विसर्जनीयः, वा शरि, कुप्वो क पौच" इत्यादिसूत्राणि क्रमेण व्याख्या-तानि।

प्रक्रियाकौमुद्यादिवदत्र स्वादिसन्धेर्पृथक् प्ररकणं नास्ति। किन्तु विसर्गसन्धावेव स्वादिविभक्त्यन्तर्गतसकारस्थानिकसन्धिरूपपादितः। तत्र सकारस्य त्रिविधः सन्धिर्दृश्यते। यथा - सोरुत्वे उत्वे गुणादिकार्ये च कृते सोऽयम्, वृक्षोऽत्र इत्याद्यनेकविधप्रयोगाः सिद्धयन्ति। सोरुत्वे, रोर्यत्वे यलोपे च कृते "भो एहि, भगो नमस्ते, देवा इहे" त्यादयः प्रयोगा अपि निष्पद्यन्ते। सोर्लोपेकृते "एष कर्ता, स याति, सैषदाशरथी रामः, सैष राजा युधिष्ठरः" इत्यादिरूपाणि सिध्यन्ति। अत्रापि तत्तकार्यविधायकानि यथायथमपेक्ष्याणि सूत्राणि व्याख्यातानि। एवमष्टा-ध्याय्याः रुप्रकरणमवधार्यातिरिक्तं रेफादेशस्यापवादभूतं - "रोऽसुपि" इति सूत्रमप्युक्तम्। सर्वमिदं विसर्गसन्धिनिर्देशादप्राकरणिकमित्यवगन्तव्यम्।

पूर्वमष्टाध्यायीक्रमानुसारिण्याः काशिकायाः क्रमे कश्चन ईदृगुपायो नासीत्। येनैवंविधसन्धीनां ज्ञानमेकत्रैव भवेत्। यतो हि स्वरसन्धेः सूत्राणि षष्ठाध्यायस्य प्रथमेपादे, व्यञ्जनसन्धेः कानिचित्सूत्राणि अष्टमाध्यायस्य तृतीये पादे, कानिचिच्च चतुर्थे पादे, विसर्ग-सन्धेः कतिपयसूत्राण्यष्टमाध्यायस्य द्वितीये तृतीये च पादे, कानिचिच्च पुनः षष्ठाध्यायस्य प्रथमे पाद इति विभिन्नेषु स्थलेषु प्रसृतानि सन्ति। एकस्य सन्धेर्परिज्ञाने बहूनां स्थलानामवलोकनात् प्रक्रियादृष्ट्या सा पद्धतिः नितरां गौरवावहेति। अस्यां प्रक्रियापद्धत्यामिदमेव सौकर्यं वर्तते यदेकत्रैव समेषां सन्धीनां ज्ञानाय यत्नो विहतो वर्तते।

## अथाजन्तमाला

सुप्तिङन्तंपदमिति पदसंज्ञाविधायकसूत्रे प्राथम्येन सुप्प्रत्ययानामुपात्तत्वेन रूपमालायां पूर्वं सुऔ जसित्यादि-एक-विंशतिविभक्तिषु शब्दानां सिद्धयर्थं अजन्त-हलन्तमालादि प्रकरणन्युपन्यस्तानि। अत्र सूत्राणां संघटनस्यैषः क्रमः ग्रन्थकृता स्वीकृतो येनैकप्रकारस्य शब्दस्य सर्वासुविभक्तिषु सर्वेषु च वचनेषु रूपाणि समग्ररूपेणैकत्रैव प्राप्नुयुः।

अथास्यामजन्तमालायां "स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतपदैः। गुणंद्रव्यक्रियाशब्दास्तथास्युस्तस्यभेदकाः" इतिकारिकया विशेषणशब्दानां भेदान्प्रदर्श्य एकैकस्य विशेषणशब्दस्य त्रिषुलिङ्गेषु सर्वासु च विभक्तिषु रूपाणि निष्पादितानि। अत्र वर्णसमाम्नायक्रमेण शब्दानां विवेचनस्य रीतिरवलोक्यते। तद्यथा - सर्वप्रथमं शुक्लशब्दस्य त्रिषुलिङ्गेषु रूपाणि, अनन्तरं शैवी-सोमप-शुचि-सुश्री-सेनानी-होतृ-दातृ-सुरै-सुद्यावित्यादि - शब्दानां रूपाणि निष्पादितानि सन्ति।

एतत्प्राग्वर्तिनि काशिकावृत्तेःक्रमे सूत्राणां संघटनस्यैतादृशी रीतिर्नासीत् येन समेषां शब्दानां सर्वासुविभक्तिषु रूपपरिज्ञानं संजायेत्। यतो हि तत्र काशिकादिवृत्तिग्रन्थेषु सूत्राणां संघटनमेवं क्रमेण नासीत्। तद्यथा - "शुक्लः" इत्यस्य पदस्य निष्मत्तये प्रातिपदिकसंज्ञा, सुप्रत्ययः सोरुत्वम्, रुत्वस्य च विसर्गादिकमपेक्षितं वर्तते। एतादृशकार्याणां निष्पत्तयेऽष्टाध्याय्यां सूत्राणामेष क्रमोऽवलोक्यते यथा -

| | | | |
|---|---|---|---|
| १- | अर्थवदधातुरप्रत्ययः प्रातिपदिकम् | | १/२/४५ |
| २- | स्वौजस्मौट्० | - | ४/१/०२ |
| ३- | ससजुषोरुः | - | ८/२/६६ |
| ४- | खरवसान० | - | ८/३/१५ |

एवं काशिकादिवृत्तिग्रन्थाध्ययनेन एकस्यापि शुक्लादि शब्दस्य रुपसंसिद्धये प्रथमाध्यायादारभ्य अष्टमाध्यास्य तृतीय पादे "रवसानयोर्विसर्जनीयः" इति सूत्रपर्यन्तमधीत्यैव पूर्वसूत्राणां स्मरणं कुर्वन् प्रयोगनिष्पादनं प्रभविष्यति। अत एव तदानीन्तनैराचार्यैरध्येतृभिश्चास्मिन् विषये महदगौरवमनुभूतम्। अतो विमलसरस्वतीभिरस्या अपेक्षायाः पूर्त्यर्थं अजन्तमालादिषट्प्रकरणोपन्यासो विहितः।

## हलन्तमाला

**इत्थमजन्तमालायां -**

स्वरान्तशब्दानां साधुत्वम् आचार्यवर्यैः प्रदर्शितम्। अस्यां हलन्तमालायां व्यञ्जनान्तशब्दाः वर्णसमाम्नायक्रमेण व्युत्पादिताः। तत्र प्रथमं मधुलिहित्यादयः, प्रकरेणऽस्मिन् प्रायेण तेषामेव शब्दानां निष्पादनं ग्रन्थकृता कृतम् येषां रूपाणि त्रिषु लिङ्गेषु समुलभ्यन्ते। अत्र यथाक्रमं मधुलिह्गोदुह्-बहुराजन्-सुपर्वन्-पारदृश्वन्-ब्रह्महन्, जन्मभाज्-भारवाह्-देवराज्-विश्वसृज्-वेदविद्-द्विपाद्-अग्निमथ्-प्रत्यच्-तिर्यच्-सम्यच्-शुभकृत्-गोमत्-महत्-यात्-ददत् कुर्वत् सजुष्-सुवचस्-लघीयस्-उपसेदिवस्-शुश्रुवस्-विद्वसादयः शब्दाः संसाधिताः।

## सर्वनाममाला

सर्वनाममालायां रूपमालाकृता "सर्वादीनि सर्वनामानि" - इति सूत्रेण सर्वनामसंज्ञामुक्त्वा सर्वशब्दादारभ्य सर्वे सर्वनाम शब्दाः त्रिषु लिंगेषु व्युत्पादिताः। तद्यथा - सर्व - विश्व,उभ,उभय,डतर डतमप्रत्ययान्ताः। किंयत्तदेकानांकतरकतमादयः। इतर,अन्य,अन्यतर, त्वशब्दोऽन्यपर्यायः। सम सिम,नेम,सौत्राः पूर्वादयो नव। त्यद्,तद् एतद्,इदम्,अदस्,एक द्वि युष्मद्,अस्मद्,भवतु किम्। एकस्यवृद्धसंज्ञार्थं त्यदादिभिरेकशेषे च किमः परिशेषार्थमयं गणपाठक्रमः द्विशब्दात्प्रागेव किमः पाठे च "किं सर्वनामबहुभ्योऽद्वयादिभ्यः" इत्येव सूत्रं विरुध्येत।

## संख्यामाला

संख्यामालायां संख्यावाचकशब्दानां रूपाणि त्रिषु लिङ्गेषु संसाधितानि। अत्र पूर्वं त्रिशब्दस्य रूपाण्युपलभ्यन्ते यथा त्रयः। तिस्रः। त्रीणि। अनन्तरं चतुर्शब्दस्य रूपाणि। ततः पञ्चन्-षट्-अष्टन्शब्दानां क्रमेण रूपनिष्पादनं वर्तते। अत्रैव एकादिशब्दानां वैशिष्टयं प्रदर्शितम्। यथा - एकादयो दशान्ताः संख्येय एव वर्तन्ते। तल्लिङ्गाश्च। तेषु त्र्यादयो बहुवचनान्तं एव। दशपर्यायस्तु पंक्तिशब्दो विंशत्यादयश्च नवत्यन्ताः कोटिश्च स्त्रियामेव। शतादिशब्दाः नपुंसक एव सन्तीति प्रतिपादितम् प्रकरणान्ते कतिशब्दस्य व्युत्पादनं वर्तते।

## नियतलिङ्गमाला

नियतलिङ्गमालाख्यप्रकरणं त्रिषुभागेषु विभक्तं वर्तते,पुल्लिङ्गाः,स्त्रीलिङ्गाः नपुंसकलिङ्गाश्च। शुक्लादयोऽभिधेयलिङ्गाः पूर्वमजन्तमालायां दर्शिताः। अत्र पुल्लिंगेषु सखिपत्यादयश्चानियताभिधेयाः अपि षण्ढे प्रयोगविरहिता इति प्रदर्शिताः। अत्र क्रमेण अजन्तानां हलन्तानाञ्च शब्दानां रूपाणि संसाधितानि। स्त्रीलिङ्गेषु जरा-बुद्धि-श्रीस्त्रीलक्ष्मी अवीतरीतन्त्रीभ्रूस्वस्राद्यजन्तशब्दानां रूपाणि, अनन्तरं उपानह्-दिव्-गिर्-सीमन्-अप्-दिक्-सृक्-उष्णिह्-आशिष् प्रभृतीनां हलन्तशब्दानां रूपाणि प्रदर्शितानि। नियतषण्ढेषु च पूर्वं वारि-अस्थि-सक्थ्युरुशब्दानां रूपाणि पश्चात्-अहन् हविष्धनुष्शब्दानां रूपाणि निष्पादितानि वर्तन्ते।

## छान्दसमाला

छान्दसमालायां दिङ्मात्रं वैदककशब्दनामुल्लेख-पुरःसरं "आज्जसेरसुक्" ७/१/५०/, "सुपांसुलक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" ७/१/३९ इति सूत्रद्वयं ग्रन्थकृता व्याख्यातम्।

## अव्ययमाला

न व्येति = भिन्नभिन्नरूपं विकारं लिङ्गक्रियाकारकप्रयोज्यं न प्राप्नोति, तदव्ययम्। अन्वर्थाचेयं संज्ञा। "तद्धिश्चासर्वविभक्तिः (१-१-३२) इति सूत्रे भाष्ये" स्त्रीपुंनपुंसकानि सत्वगुणाः,एकत्वद्वित्वबहुत्वा-नि च। एतानर्थान् केचिद् वियन्ति,केचिन्न वियन्ति। ये न वियन्ति तदव्ययम्। इत्युक्तम्। "न वियन्ति = विविधप्रकारप्रापकान्न प्राप्नुवन्ती"ति

नागेशः[1] ।" नेदं वाचनिकमलिङ्गता असंख्यता च। किं तर्हि ? स्वाभाविकमेतत्। "इति च तत्रैवभाष्ये।

अत्र अव्ययमालायां पूर्वं निपातसंज्ञाधिकारसूत्रं "चादयोऽसत्वे" - इत्युक्तम् प्रादयः, गतिसंज्ञाकाः ऊर्यादयश्च बहवोऽत्राधिकारे पठिता इत्यपि विवेचितं ग्रन्थकृता। ततः स्वरादिनिपातमव्ययम्, कृन्मेजन्तः,क्त्वातोसुन्कसुनः, तद्धितश्चासर्वविभक्तिः, इत्यव्ययसंज्ञा-विधायकानि सूत्राणि क्रमेण व्याख्यातानि। तद्यथा - पूर्वं स्वरादीत्यादिसूत्रं व्याख्यायता ग्रन्थकारेण अव्ययेषु चावाहबतादयोद्योतकाः, स्वयमादयोऽन्तर्भूतविभक्त्यर्थाः। यत्तद्यावत्ता-वदादयः प्रातिपदिकान्तरस्य, उत्चित् चिरादयः सुबन्तस्य, अस्तिस्यादादयः आख्यातस्य, नास्त्यपि च नह्यादयः समुदायस्य प्रतिरूपकाः सन्तीति निगदितम्। लक्षणलब्धान्यव्ययानि अव्ययीभावकृदन्ततद्धितान्तभेदेन त्रिधा सन्ति। तेषु अव्ययीभावाव्ययान्यत्रानुक्तान्येव। कृदन्ताव्ययानि यथा - कर्तुम्, भोजं भोजम् तद्धितान्ताव्ययानि यथा - सर्वतः,ततः,परितः,सर्वत्र, इतः कुत इत्यादि। ग्रन्थेऽस्मिन् तद्धितश्चासर्वविभक्तिरिति सूत्रमुक्त्वा तद्धितान्ताव्ययश-ब्दानां प्रक्रियाऽपि पञ्चविंशतिसूत्रैः प्रदर्शिता। अत्र केवलमव्ययाद्विहितस्यापः सुपश्च लुग्भ-वतीति तदर्थं "अव्ययादाप्सुपः" इति सूत्रमव्ययमालान्ते उपनिबद्धम्।

## स्त्रीप्रत्ययमाला

"स्त्रियाम्" ४-१-३ इति सूत्राधिकारे चतुर्थाध्यायस्य प्रथमपादस्थाः स्त्रीत्वबोधकाः -"टाप्-ङीप् - ङीष् - ऊङ्ति" इत्यादयः प्रत्यया अष्टाध्यायीक्रमेणैवात्र निरूपिताः। एतेषां प्रत्ययानां विधायकसूत्राणि ग्रन्थकारेण सोदाहरणं व्याख्यातानि। अत्र"डाप्-चाप् ङीन्" इत्या-दयः स्त्रीप्रत्यया अनुक्ता एव। अथ चास्यां स्त्रीप्रत्ययमालायां स्त्रीत्वबोधकप्रत्यये कृते सति प्रयोगाणां निष्पत्यवसरे सत्यामपेक्षायामन्येषां सूत्राणां संग्रहोऽवलोक्यत एव तद्यथा - "गार्गी" इति प्रयोगनिष्पादने गार्ग्यशब्दात् "यञश्चे" "ति ङीपि प्रसङ्गे अकारलोपार्थं यस्येति चे" ति सूत्रमुक्तम्,तथा यकारलोपविधायकं "हलस्तद्धितस्ये" ति सूत्रमप्यत्रैवोक्तम्। एवञ्चात्र ककारात्पूर्वस्याकारस्येत्वविधायकं 'प्रत्ययस्थात्कादि'ति-सूत्रं तथा क्रोष्टुस्तृज्वत्विधायकं "स्त्रियां चे" ति सूत्रमपि विवृते। मध्ये कतिपयकारिकाभिः केषांचित्प्रयोगाणां साधुत्वं प्रदर्शि-तम्।

## कारकमाला

ननु "सुप्तिङन्तं पदमि" सूत्रे सुबन्तस्य प्रथमोपान्तत्वेन सुपश्च प्रातिपदिकप्रकृतिकत्वेन प्रातिपादिकसंज्ञाकथन पुरःसरं तत्प्रकृतिकस्वादिप्रत्ययानां अजन्तमा-लादिप्रकरणानि, स्त्रीप्रत्ययानाञ्च स्त्रीप्रत्ययमालाप्रकरणमभिधाय, तदर्थबोधनाय कारकमाला व्यवस्थापिता। अष्टाध्याय्यां कारकसंज्ञाभिधायक सूत्राणि विभक्तयश्च एकत्र नैवोपल-भ्यन्ते। तत्र कारकाणि प्रथमाध्यायस्य चतुर्थे पादे विभक्तयश्च द्वितीयाध्यायस्य तृतीये पादे उक्तानि। अस्यां कारकमालायामुभयोरेकत्र व्याख्यानेन कारकाणां विभक्तीनाञ्चार्थवबोधने महत्सारल्यमानीतं ग्रन्थकृता।

---

१ म० भा० (उद्योतः) सूत्रम् १-१-३२

अत्र प्रातिपादिकार्थे कर्मणि कर्तरि,करणे सम्प्रदानेऽपादानेऽधिकरणे वा यस्मिन्नर्थे प्रथमाद्वितीयातृतीयेत्या-दयः सप्तविभक्तयो भवन्ति, त एवात्र क्रमेण प्रदर्श्यन्ते तत्तत्कारकेऽर्थेऽत्र तत्तद्विभक्तयो भवन्ति। यथा - कर्मणि द्वितीये "तिसूत्रेण कर्मण्यर्थे द्वितीयाप्रसङ्गे कर्मज्ञानस्यापेक्षयां सत्यां" कर्तुरीप्सिततमं कर्म "इति सूत्रार्थमभिधाय तत्र कर्म निर्दिष्टम्। एवं "कर्तृकरणयो स्तृतीया" इति तृतीयाविधानप्रसङ्गे कर्तृकरणसंज्ञयोः परिज्ञानस्यावश्यकतया "स्वतन्त्रः कर्ता" तत्प्रयोजको हेतुश्च "साधकतममं करणमि" ति त्रीणि सूत्राणि क्रमेण व्याख्यातानि। इत्थमेव चतुर्थी पंचमी'त्यादीनां विभक्तीनां विधानप्रसङ्गे सम्प्रदानापादानसंज्ञाविधायकसूत्राणि क्रमेण व्याख्यातानि। प्रसङ्गवशात् पञ्चमीविभक्तिविधाने "लुक्तद्धितलुकि" इति स्त्रीप्रत्ययस्य लुग्विधायकं सूत्रमत्रैव व्याख्यातम्। कारकमालान्ते "अस्मद्द्वयोश्चे" (१/२/५९) ति सूत्रमपि प्रकरणवशादुपन्यस्तमिति।

## अथ तिङन्तमाला

सुप्तिङन्तं पदमिति सूत्रस्य क्रममनुसृत्य पूर्व सुबन्ताः विवेचिताः अनन्तरं तिङन्तमालाया आरम्भो ग्रन्थकृता कृतः। तिङप्रत्ययाः धातुभ्यो भवन्तीति पूर्वं "भूवादयो धातवः" इति सूत्रं सविशेषं व्याख्यातम्। द्विविधा हि तिङन्ता दृश्यन्ते शुद्धाः सप्रत्ययाश्च। शुद्धास्तावत्-भवति श्रयति श्रयत इत्यादिषु। सप्रत्ययास्तु सन्-णिच्-यङादि प्रत्ययान्तेभ्यो धातुभ्यो विहितारितङः। तद्यथा- "चिकित्सति बुभूषति, भावयति, पापच्यते" इत्यादयः। तिङन्तमालायां पूर्वं शुद्धा एव तिङन्ताः विवेचिताः एते दशसु गणेषु विभक्ताः सन्ति। यथोक्तं धर्मकीर्तिना रूपावतारे -

**भ्वाद्यदादिजुहोत्यादिदिवादिस्वादयस्तथा।**
**तुदादिश्च रुधादिश्च तनक्रयादिचुरादयः॥**

रूपमालायां व्युत्क्रमप्रणाल्या गणाः निर्दिष्टाः। परं तिङन्तमालायां मध्येऽनुक्रमप्रणाल्यापि गणा विनिर्दिष्टाः वर्तन्ते। इमे भ्वाद्यदादयो दशगणा विकरणभेदाद् भिद्यन्ते तद्यथा -

| गणाः | विकरणाः | सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १- भ्वादिः | शप् | "कृर्तरि शप्" | भवति |
| २- अदादिः | शप् (लुक्) | (आदिप्रभृतिभ्यशपः) | अत्ति |
| ३- जुहोत्यादिः | श्लुः | "जुहोत्यादिभ्यःश्लुः" | जुहोति |
| ४- दिवादिः | श्यन् | "दिवादिभ्यःश्यन्" | दीव्यति |
| ५- तुदादिः | शः | "तुदादिभ्यःशः" | तुदति |
| ६- स्वादिः | श्नुः | "स्वादिभ्यःशनुः" | सुनोति |
| ७- तनादिः | उः | "तनादिकृञ्भ्य उः" | तनोति |
| ८- रुधादिः | श्नम् | "रुधदिभ्यःश्नम्" | रुणाद्धि |
| ९- क्रयादिः | श्ना | "क्रयादिभ्यःश्ना" | क्रीणाति |
| १०- चुरादिः | शप् | (णिच्सहितेनधातुना) "कर्तरिशप्" | चोरयति |

लकाराणां विन्योसेऽप्यत्र सिद्धान्तकौमुद्यादितो भिन्नक्रमोऽवलोक्यते। अत्र लकाराणां सार्वधातुकार्धधातुककभेदेन व्याख्यानं विहितम्। तथाहि पूर्वं लट् लङ्लकाराणां रूपाणि व्युत्पादितानि। एवं चर्तुणां सार्वधातुकलकाराणां विवेचनप्रसङ्ग एव भ्वाद्यदयो दश-गणाः प्रदर्शिताः। ततः आशीर्लिङ् लुट्लृट्लृङ्लुङ्लिट् लकाराणां रूपाणि प्रतिपादितानि एषु परस्मैपदिनः,आत्मनेपदिनः,उभयपदिनश्च धातवः यथावसरं क्रमेणैवान्वाख्याताः। एवञ्चात्र प्रतिलकारं प्रथममध्यमोत्तमपुरुषेषु वचनक्रमेण धातूनां रूपाणि निष्पादितानि।

अनुक्रमप्रणाल्या गणभेदप्रदर्शनानन्तरमत्रैव भावकर्म प्रक्रिया निरूपिता। तत्र यदा अकर्मकेभ्यो धातुभ्यो भावे लकारस्तदा भावप्रक्रिया,अथ च यदा सकर्मकेभ्यो धातुभ्यः कर्मणि लकारस्तदा कर्मप्रकियेति व्यपदिश्यते। अत्र भावप्रक्रियायां कर्मप्रक्रियायाञ्चोभयत्र "भाव-कर्मणोरि"त्यनेन तङ्विधीयते। भावे लकारे सति तिङ्वाच्यक्रियाया असत्वरूपत्वेन द्वित्वा-द्यप्रतीतेर्न तत्र द्विवचनादि, किन्तु औत्सर्गिकत्वेन संख्यानपेक्षत्वादेकवचनमेव। एवं च लट्-लोट्-लङ्विधि-लिङिति चतुर्षु "सार्वधातुके यक्" इत्यनेन यग्भवती-त्यपि निगदितम्। तेन भूयते भूयतामित्यादिरूपाणि सिध्यन्ति। अकर्मकोऽपि धातु उपसर्गवशात्क्वचित् सक-र्मको भवति ततः कर्मणि लडादयः। तत्र कर्मणस्तिङोक्तत्वात् कर्मणि द्वितीयेति द्वितीया न भवति, अपि तूक्ते कर्मणि प्रथमैव। तेन गन्धोऽनुभूयते त्वया मया अन्येन वा, अनुभूयेते, अनुभूयन्ते इत्यादिरूपाणि भवन्ति।

ततः साधुत्वप्रक्रियासाम्यात् कर्मकर्तृप्रक्रियाप्यत्रैव प्रदर्शिता। यदा सौकर्यातिशयं द्योतयितुं कर्मैव कर्तृत्वेन विवक्ष्यते तदा सकर्मकाणामप्यकर्मकत्वाद्भावे कर्तरि च लकारा भवन्ति। अत्र "कर्मवत् कर्मणा तुल्यक्रियः" इति सूत्रेण कर्ता कर्मवद् भवति। तेन "भिद्यते काष्ठम्, पच्यते स्वयमोदनः" इत्यादयः सिद्ध्यन्ति। एवं कर्मकर्तृप्रक्रियाप्रदर्शनानन्तरमा-शीर्लिङ्लुट्लृट्-लृङ्लुङ्-लिट्लकार-रूपाणि क्रमेण प्रतिपादितानि।

अत्रैवाशीर्लिङ्मालायामाचार्यविमलसरस्वतीभिः कतिपयकारिकासु अनिट्धातु-संग्रहो विहितः। तद्यथा -

**अनेकाचः श्विश्रिडीङ्शीङुर्णुस्नुक्षुयुनुक्षुरुन्।**
**अदूदृदन्ततृन् हित्वा स्वरान्ता अनिटोऽखिलाः ॥ १ ॥**
**अदन्तो वृद्ध्यभावाय हनादेशो वधो मतः।**
**अनेकाजित्ययं त्यक्तोऽप्याचार्यैः दर्शितः पृथक् ॥ २ ॥**
**हनादेशतया ह्यस्मिन्नपि प्राप्तो ह्यनिङ् भ्रमः।**
**यङर्थमामश्चाप्राप्त्यै मतो ह्यणुह्नर्णुमात्रवत् ॥ ३ ॥**
**श्रयुकः कितीतीड्निषेधार्थं चातः सन्दर्शितः पृथक्।**
**द्वित्वादौ तु विधातव्ये विज्ञेयोऽजादिरेव सः ॥ ४ ॥**
**शक्लृ शक्तौ सिचिमुचि वचिर्विचिरिची पृचिः।**
**प्रच्छिःसञ्चिरुजी-रञ्जि-स्वञ्जीनिजिविजी सृजिः ॥ ५ ॥**
**भजिभञ्जी त्यजिभुजी भ्रस्जिमस्जी यजिर्युजीः।**
**अदिस्कन्दिः छिदिर्भिदी बदिः शदिसदी क्षुदिः ॥ ६ ॥**
**तुदिर्नुदिः पदिखिदी स्विद्यति विन्द्विद्यतीः।**
**रुधिर्युधिः साधिराधी व्यधिबन्धिः क्रुधिः क्षुधिः ॥ ७ ॥**

**सिध्यतिः शुध्यतिश्चैव बुध्यतिः मन्यतिः हनिः ।**
**आपिर्वपिस्तर्वितिपी शपि लिंपलुपी स्वपिः ॥ ८ ॥**
**क्षिपिर्छुपिः तृपिदृपी सृपिर्जभिरभी लभिः ।**
**यमिर्नमिर्गमिरमी स्पृशिर्धृशिदृशी क्रुशिः ॥ ९ ॥**
**रुशिर्विशिर्लिशिरिशी दिशिर्दशिस्त्विषिर्द्विषिः ।**
**श्लिषिः शिषिर्पिषिविषी तुषिः शुषिदुषी कृषिः ॥ १० ॥**
**पुष्यतिर्धसिवासार्थौ दहिर्दिहदुही रुहिः ।**
**लिहिर्मिहिर्नहिवही हलन्तेष्वनिटो मताः ॥ ११ ॥**
**मुनते विन्दते वेत्तिवस्ते सेधति बोधतिः ।**
**स्वदति पुष्णातीत्यस्ममादिड्स्याद्भिदोक्तितः ॥ १२ ॥**
**रधादित्वादिड्विकल्पेऽप्यत्रोपात्ततृपिर्दृपिः ।**
**अनुदात्तत्वमाख्यातं तच्चामागमसिद्धये ॥ १३ ॥**
**भृजेस्त्वमागमो नेष्ट ऊदित्वादिट् च पाक्षिकः ।**
**त्यक्त्वातस्तं जगुः पूर्वे विजिरं पठितं परैः ॥ १४ ॥**

ततः परं पंचम लकारभागे "लिड.र्थेलेट्" इति सूत्रं व्याख्यातम् । उक्तं च - "बहुप्रकाराण्यस्य रूपाणि, तानि तु भाषायामस्यानुपयोगदिह न प्रदर्श्यन्ते । अग्निहोत्रं जुहोतीत्यादीन्यपि मीमांसका अस्यैव रूपाणीच्छन्ति ।" इति ।

पाणिनेरष्टाध्याय्यां सूत्राणां संघटनस्यैतादृशी प्रणाली न दृश्यते यया धातूनां सर्वेषु लकारेषु प्रथममध्यमोत्तमपुरुषेषु वचनक्रमेणैकत्र रूपज्ञानं भवेत् । अष्टाध्यायी-क्रमे धातूनां रूपपरिज्ञानेऽनेकस्थलावलोकनात् महत्काठिन्यमासीत् यथा -

१- वर्तमाने लट् ३/२/१२३

२- तिप्तसझि० ३/४/७८

३- कर्तरिशप् ३/१/६८

४- तिङ्शित्सार्वधातुकम् ३/४/११३

अतो रूपमालाकारैः सारल्येन धातुनां रूपपरिज्ञानाय तिड.न्तमाला संग्रथिता ।

## (तिड.न्तमालायां) सनादिभागः -

तिड.न्तमालायाः सनादिभागे सन्नन्ताः क्यजाद्यन्ताः यड.न्ताः, यङ्लगुन्ताः ण्यन्ताः यगन्ताश्च धातवः क्रमेण प्रदर्शिताः । एतेषां सनाद्यन्तधातूनां रूपसंसिद्धये रूपामलाकारेणप्रायेणाष्टाध्यायीक्रम एवाश्रितः । अत्रस्थसनादिप्रत्ययविधायकसूत्राणि, प्रत्यायाः, उदाहरणानि क्रमश्चेत्थं वर्तन्ते -

| प्रत्ययाः | सूत्राणि | उदाहरणानि |
|---|---|---|
| सन् | १- गुप्तिज्किद्भ्यः सन् ३/१/५ | जुगुप्सते |
| | २- मान्बधदान्शान्भ्यो दीर्घ श्चाभ्यासस्य ३/१/६ | मीमांसते |

| | | |
|---|---|---|
| | ३- धातोःकर्मणःसमान कर्तृकादि-च्छायांवा ३/१/७ | पिपठिषति |
| क्यच् | १- सुप आत्मनः क्यच् ३/१/८ | पुत्रीयति |
| काम्यच् | काम्यच्च ३/१/९ | पुत्रकाम्यति |
| कयच् | उपमानादाचारे ३/१/१० | पुत्रीयति शिष्यम्। |
| क्यङ् | कर्तुः क्यङ्सलोपश्च ३/१/११ | सूर्यायते चन्द्रमाः। |
| क्यङ् | भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ३/१/१२ | भृशायते |
| क्यष् | लोहितादिडाज्भ्यःक्यष् ३/१/१३ | लोहितायति |
| क्यङ् | कर्मणोरोमन्थतपोभ्यां वर्तिचरोः ३/१/१५ | रोमन्थायते |
| क्यङ् | शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणे ३/१/१७ | शब्दायते |
| क्यङ् | सुखादिभ्यः कर्तृवेदनायाम् ३/१/१८ | सुखायते |
| यङ् | धातोरेकाचो हलादेः क्रियासमभिहारे- ३/१/२२ | यङ् ,बोभूयते |
| यङ् (लुक्) | यङोऽचि च २/४/७४ (प्रसङ्गवशात् मध्य उपन्यस्तम्) | वर्वृतीति वरिवृतीति (वरीवृतीति च) |
| णिच् | सत्यापपाशरूपवीणा० ३/१/२५ | सत्यापयति |
| " | हेतमति च ३/१/२६ | भावयति |
| क्यच् (स्वार्थे) | नमोवरिवश्चित्रङःक्यच् ३/१/१९ | नमस्यति |
| यक् | कण्ड्वादिभ्यो यक् ३/१/२७ | कण्डूयति (कण्डूयते) |

**लकारार्थभागः -**

तिङन्तमालायाः लडादिभागेषु "वर्तमाने लट्, अनद्यने लङ्, इत्यादिभिः सूत्रैः येष्व-र्थेषु लकारा भवन्तीति त उक्ताः। इदानीं भूते लट्, भविष्यति लट्, स्मृतिबोधिन्युपपदे भूते लृट्, वर्तमानसामीप्ये भूते लट् लृट् चेति लकारव्यत्यासप्रदर्शनायेदं प्रकरणमारभते । यथा "जयति स्म" इत्यत्र स्मपदयोगे भूतेऽपि "लटस्मे" इति सूत्रेण लड्विहितः। एवं भविष्यति कालेऽपि "यावत्पुरानिपातयोर्लट्" इत्यनेन लड्विधीयते। यथा - "यावदागच्छति तावत्तिष्ठ, आलोके ते निपतति पुरा।" स्मृतिबोधकपदे समीपे प्रयुज्यमाने सति भूतानद्यतने "अभिज्ञावचने लट्" इतिसूत्रेण लटलकारो विधीयते। अस्योदाहरणाय रूपमालाकृता माघकवेरयं श्लोक उद्धृतः। यथा -

**स्मरस्यदो दाशरथिर्भवन् भवानमुं वनान्ताद्वनितापहारिणम्।**
**पयोधिमाविद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ॥**
**(शिशुपालबधम्)**

अथ च वर्तमानसामीप्ये भूते भविष्यति च "वर्तमान-समीप्ये वर्तमानवद्वा" इति सूत्रेण वा लट्लकारो विधीयते यथा - "कदा त्वमागतः, इदानीमा-गच्छामि, आगतो वा। कदा

गमिष्यसि, इदानींगच्छामि गमिष्यामि वा।" एवमन्यत्रापि यत्र भिन्नलकारो भवति तत्सर्वं लकारार्थ भागे प्रतिपादितम्।

**परस्मैपदात्मनेपदभागः**

अनेके परस्मेपदिनो धातवो हेतुविशेषदात्मनेपदिनो भवन्ति तथा हेत्वन्तरात् केचन आत्मनेपदिनोऽपि धातवः परस्मैपदिनः संजायन्ते।.एतदेव स्फुटीकरण परस्मैपदात्मनेपदभागः तिङन्तमालान्ते निरूपितः। यथा जयार्थकजिधातुः परस्मैपदी, परन्तु विपराभ्यामुपसर्गाभ्यां परस्मात् जिधातुः "विपराभ्यां जेः" १/३/१९ इति सूत्राणात्मनेपदी विधीयते। तेन "विजयते, पराजयते" इति सिद्धयतः। सामान्येन क्रीड्धातुः परस्मैपदी, किन्तु अनुसम्-परि-आङ्एभ्य उपसर्गेभ्यः परस्मात् क्रीड्धातोः "क्रीडोऽनुसंपरिभ्यश्चे" त्यनेन तङ्भवति। तेन अनुक्रीडते, संक्रीडते,परिक्रीडते आक्रीडते " इति सिध्यन्ति। परं "समोऽकूजने इप्यते" इति वार्तिकबलात् समः परस्मात् अकूजने विद्यमानात् क्रीड्धातोरात्मनेपदं भवति। यथा "संक्रीडन्ते बालाः। कूजनेऽर्थे तु "संक्रीडन्ति शकटानि" इति। एवं क्रीडार्थकरमुधातुरात्मनेपदी, किन्तु व्याङ्पर्यु-पसर्गेभ्यः परस्मात् रम्धातुः"व्याङ्परिभ्यो रमः" इतिसूत्रेण परस्मैपदी विधीयते। तेन विरमती-त्यादि-रूपाणि सिद्धयन्ति। एवञ्च उपादूरमेरकर्मकात् "विभाषाऽकर्मकात्" इत्यनेन विकल्पेन परस्मैपदं भवति,तेन उपरमति कलहात् उपरमते वेति सिद्धयतः। इत्थं प्रकरणेऽस्मिन् प्रायेणा-ष्टाध्याय्याः क्रमेणैव प्रथमाध्यायस्य तृतीयपादस्थेकत्रिशंत् तङ्विधायकसूत्राणि व्याख्यातानि। अन्ते च "व्याङ्परिभ्यो रमः १/३/८३ इति,विभाषाऽकर्मकात् १/३२/८५ इति च परस्मैपद-विधायके सूत्रे व्याख्याते।

**॥ इति तिङन्तमाला ॥**

## अथ कृदन्तमाला

धातोरित्यस्याधिकारेऽष्टाध्याय्याः तृतीयाध्यायस्याः प्रत्यायाः कृदन्तामालायां निरूपिताः। अत्र "कृदतिङ्" इत्यनेन तिङ्भिन्नानां प्रत्यायानां कृत्संज्ञा विधीयते। तेषु केचन-प्रत्ययाः कृत्संज्ञकाः कृत्यसंज्ञकाश्च भवन्ति। केचित् तु केवलं कृतसंज्ञकाः। तथाहि "कृत्याः ३/१/३२" इत्यस्याधिकारत्वे "ण्वुल्तृचौ"३/१/१३३ इत्यतः प्राग् ये तव्यदादयः प्रत्यया विहितास्ते कृत्यसंज्ञकाः कृत्संज्ञकाश्च भवन्ति। अन्ये च केवलं कृत्संज्ञकाः तत्र "तयोरेव कृत्यक्तखलर्थाः" इत्यनेन कृत्यसंज्ञकाः प्रत्ययाः प्रायेण भावकर्मणोरेव भवन्ति। अर्थात् अक-र्मकेभ्यो भावेमात्रे सकर्मकेभ्य उभयत्र भवन्ति। तत्र क्तप्रत्ययस्तु क्वचित् गत्यर्थाकर्मक (३-४-७२)इतिसूत्रबलेन कतर्यपि भवति। यथा - ग्रामं गतः। कृत्संज्ञकास्तु प्रायेण "कर्तरिकृत्" (३-४-६७) इत्यनेन कर्तरि भवन्ति। तत्रापि केचन-प्रत्ययाः कर्तृभिन्नेऽर्थेऽपि भवन्ति। यथा - अकर्तरि च कारके संज्ञायामिति सूत्रेण कर्तृभिन्ने कारके धातोः भावे घञ् भवति। एवमन्येऽपि प्रत्ययास्सन्ति।

कृदन्तमालायामत्र पूर्वं लट्लृट्लिट्लकाराणां स्थाने जायमानाः शतृशानच्कान-च्क्वस्वादयः-कृतप्रत्यया उपन्यस्ताः। ततः "कृत्याःयत्क्यण्ण्यत्तव्याद्यादुरादौ युच् खलौ समौ" इति निगदता रूपमालाकृता सप्तविधाः कृत्यप्रत्यया विवेचिताः। तद्यथा -

| | | |
|---|---|---|
| तव्यत् | - | हसितव्यम् |
| तव्य | - | हसितव्यम् (तव्यत्तव्यानीरः ३/१/९६) |
| अनीयर् | - | वचनीयः |
| केलिमर् | | पचेलिमाः माषाः |
| यत् | | चेयम्, लव्यम् (अचोयत् - ३/१/९७) |
| क्यप् | · | ब्रह्मभूयाय कल्पते (भुवो भावे - ३/१/१०७) |
| ण्यत् | | कार्यः, ग्राह्यः (ऋहलोर्ण्यत् - ३/१/१२४) |

बहुषु कृत्प्रत्ययेषु केवलं सप्ततिप्रत्यया एवात्र निरूपिताः। यथा- शतृ शानच्, चानश्, अतृन्, कानच्, क्वसुः, खल्, युच् ल्युट्ण्वुल्, तृच्, तृन्, ष्वुन्, तुमुन्, ल्युट्, णिनिः, अच्, कृत्वा, ल्यप्, णमुल, खमुञ्, क्त, क्तवतु, धञ्, अप्, किः अथुच्, क्त्रिः, इजुण्, णच्, मप्, अन्, क्तिन्, अः, अङ्, क्यप्, शः, अनिः, कः, अण्, खश्, खच्, टः, टक्, कप्, ख्युन्, खिष्णुच्, खुकञ्, क्विप्, मनिन्, क्वनिप्, वनिप्, क्विन्, इष्णुच्, क्नुः, आरुः, कुक्, लुकन्, आलुच्, धुरच् कुरच्, उकञ्, ऊक्, उः, षाकन्, वरच्, क्वरप्, क्मरच्, रः, नजिङ्।

उणादिप्रत्ययास्तु प्रायेणात्र नैवोक्ताः। - "उणादयो बहुलम्" ३/३/१। इति "ताभ्यामन्यत्रोणादयः" ३/४/७५ इति च सूत्रं व्याख्यायैषा कारिका उपन्यस्ता -

**"लक्ष्यानुसारेणोन्नेया अनुबन्धा उणादिषु।**
**बहुलोक्त्या प्रसाध्यानि तेषु कार्यान्तराणि च॥"**

ततः केवलं पञ्चोणादिसूत्राणि एव व्याख्यातानि। तथाहि

| | |
|---|---|
| १- कृपावाजिमिस्विदिसाध्यसूभ्य उण् | कारुः, जायुः मायुः |
| २- क्विब्वचिप्रच्छ्यायतस्तुकटपुजु श्रीणां दीर्घोऽसंप्रसारणं च | वाक् आयतस्तूः कटप्रूः |
| ३- अविसृतन्त्रिभ्य ईः | अवीः |
| ४- लक्षेर्मुट् च | लक्ष्मीः |
| ५- स्त्यायतेर्ड्रट् | स्त्री |

## षत्वणत्वमाला

षत्वणत्वमालायां प्रायेण षत्वणत्वविधायकानि सूत्राणि तयोः निषेधसूत्राणि चोपन्यस्तानि। आदौ प्रसङ्गवशात् सुड्विधायके "हिंसायां प्रतेश्च, अपाच्चतुष्पाच्छकुनिष्वालेवने" इति सूत्रे व्याख्ययाते। "उरोविदारं प्रतिचस्करे नखैः, अपस्किरते कुक्कुटः इति तदुदाहरणेऽपि क्रमशउपन्यस्ते। ततः अष्टाध्याय्याः अष्टामाध्यायस्य तृतीयपादस्थ-षत्वप्रकरणस्याष्टादशसूत्राण्युपन्यस्तानि। अनन्तरमष्टमाध्यायस्य - चतुर्थपादस्थणत्वप्रकरणस्य पंचदश सूत्राणि व्याख्यातानि। यथावसरं इट्ह्रस्वपूर्वसवर्ण-गुणादिविधायकसूत्राण्यप्यत्रैव विवेचितानीति।

## अथ तद्धितमाला

तिङन्तकृदन्तमालयोरनन्तरं तद्धितमालारम्भो ग्रन्थकृता कृतः। यतो हि - "कृभ्वस्तियोगे सम्पद्य कर्तरि च्विः। ५/४/५० "क्त्रेर्मम्नित्यम्" ४-४-२० इत्यादीनि सूत्राणि तद्धितस्य तिङन्तकृदन्तोत्तरस्थितिं ज्ञापयन्ति। तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इति। चतुर्थाध्यायस्य प्रथमे पादे "तद्धिताः"४/१/७६ सूत्राधिकारादारभ्य पञ्चमाध्यायस्य "निष्प्रवाणिश्च"ति (५/४/१६०) सूत्रपर्यन्तमष्टाध्याय्यां ये तद्धितप्रत्यया उक्तास्ते प्रायेण तत्क्रमेणैव तद्धितमालायामुपन्यस्ताः। संज्ञासर्वनामविशेषणादिपदेभ्य एते प्रत्यया भवन्ति। द्विविधा हि तद्धितप्रत्ययाः दृश्यन्ते - प्रकृत्यर्थभिन्नार्थप्रत्यायकाः स्वार्थिकाश्च। तत्र प्रकृत्यर्थभिन्नार्थका यथा, उपगोरपत्यम्, औपगवः, मञ्जिष्ठेन रक्तं वस्त्रम् = माञ्जिष्ठम्, पाणिनिना प्रोक्तम् = पाणिनीयमित्यादि। स्वार्थिका यथाप्रज्ञ एव प्राज्ञः "प्रज्ञादिभ्यचे" त्यण्। एवं चात्र द्वादशावान्तर प्रकरणान्यष्टाध्यायीक्रमेणैव निरूपितानि। तद्यथा -

१- अपत्यप्रकरणम्

२-रक्ताद्यर्थप्रकरणम्

३- चातुरर्थिकप्रकरणम्

४- शैषिकाः

५-ठगधिकारः

६-प्राग्घितीयाधिकारः

७- छयतोरधिकारः

८- आर्हीयाः

९- कालाधिकारः

१०- भवनाधिकारः

११- मतुबर्थीयाः

१२- स्वार्थिकाः

तद्धितप्रत्ययान्तानां शब्दानां सिद्ध्यर्थमत्र यथायथमपेक्षितानामन्येषामपि सूत्राणां संघटनस्य रीतिरवलोक्यत एव। यथा "गर्गाः" इत्यत्र "गर्गादिभ्यो यञ्" इति यञि "विदाः" इत्यादौ अनृष्यानन्तर्ये विदादिभ्योऽञ्" इत्यनेन अञि च कृतयोस्तयोः लुग्विधानायापेक्षितं "यञञोश्चे"ति द्वितीयाध्यायस्य चतुर्थपास्थ सूत्रमप्यत्रैवोपन्यस्तम्।

ग्रन्थविस्तारभियाऽत्राचार्यचरणैः बहूनि सूत्राणि परित्यक्तानि। १०२२ तद्धितसूत्रेषु केवलं ४१२ सूत्राण्येव व्याख्यातानि।

## समासमाला

समसनं समासः (बहूनां पदानां स्वविभक्तिं परित्यज्य एकीभवनम् (मिलित्वैकभवनम्)) समार्थ्य एव समासः सम्भ्वतीति "समर्थः पदविधिरि"ति सूत्रं संमासमालादावुक्तम्। तत्र हि एतत्सूत्रव्याख्यावसरे रूपमालाकृता लिखितम्-"यः कश्चित्पदसम्बन्धी विधिः सः सम्बद्धार्थपदविषयो ज्ञेयः तेन" क्षेत्रं राज्ञोवित्तं ममेति, अत्र राजवित्तयोर्न समासः। "सामार्थ्यं तावद्द्विविधम्व्यपेक्षारूपमेकार्थीभावरूपञ्च। तत्र स्वार्थपर्यवसायिनां पदानामाकांक्षादिवशात्परसम्बन्धरूपा व्यपेक्षा। सा च "राज्ञः पुरुष" इत्यादिवाक्ये एव। स्वार्थपर्यवसायिनां पदानां विशेषण-विशेष्यभावावगाह्येकोपस्थितिजनकत्वमेकार्थी भावत्वम्। तच्च "राज- पुरुषः" इत्यादिवृत्तावेव। तत्र वृत्यर्थावबोधकं वाक्यं विग्रहः।

"प्राक्कडारात्समासः" २/१/३ "सहसुपा" २/१/४ इत्यधिकारसूत्रयोरर्थं वदताऽऽचार्येणोक्तम् "सुप् सुपा सह समाससंज्ञकं भवति ततो न दह्यति पचति भृत्यो, यस्य पचति च ददाति चेत्यादौ न भवति, विधिरप्ययमिष्यते ततो पूर्वं भूतः भूतपूर्वः"

अत्र हि समासानां चत्वारो भेदा अष्टाध्यायीक्रममनुसृत्य अङ्गीकृताः। तद्यथा - अव्ययीभावः तत्पुरुषः, बहुब्रीहिः द्वन्द्वश्च। तत्र प्रायेण, पूर्वपदार्थप्रधानोऽव्ययीभावः, प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषः प्रायेणान्यपदार्थप्रधानो बहुव्रीहिः, प्रायेणोभयपदार्थप्रधानो द्वन्द्वः।

### अव्ययीभावः -

द्विविधोऽयमव्ययीभावसमासः अव्ययपूर्वपदो नामपूर्वपदश्चेति। इदमेवाभिप्रेत्य पूर्वोक्तलक्षणे प्रायेणेतिपदमुपन्यस्तम्। रूपमालायामव्ययपूर्वपदमव्ययं प्रथमं प्रतिपादितम्। अतस्तत्र "अव्ययं विभक्ति०" यथाऽसादृश्ये, यावदवधारणे, इत्यादिसूत्राणि, अधिस्त्रि कथां श्रुणु, सुमगधम् दुर्यवनम्, यथापात्रम्, यावदमत्रम्-इत्याद्युदाहरणपुरः सरं व्याख्यातानि। अनन्तरन्नामपूर्वपदाव्ययीभावसमासप्रदर्शनाय "सुप्प्रतिना मात्रार्थे" इत्यादिसूत्रमुक्तम्, लाभं प्रति इत्याद्युदाहृतञ्च। समासवृत्तौ प्रक्रियानिर्वाहाय यथायथमपेक्षितानि उपसर्जनं पूर्वम्" इत्यादि सूत्राण्यप्यत्रैव व्याख्यातानि।

### तत्पुरुषः -

यस्मिन्समासे प्रायेणोत्तरपदार्थस्य प्राधान्यं स तत्पुरुषसंज्ञको भवति। त्रिविधस्तावत्तत्पुरुषः समासः व्यधिकरणपदः, समानाधिकरणपदः, संख्यापूर्वपदश्चेति। रूपमालायां प्रथमं व्यधिकरण पदतत्पुरुषसमासः प्रतिपादितः। तत्र द्वितीया तृतीयाचतुर्थीपंचमी-षष्ठीसप्तमीतत्पुरुषास्तत्तत्सूत्रैः क्रमेणोपपादिताः
यथा -

| सूत्राणि | उदाहरणानि |
|---|---|
| १- द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २/१/२९ | वृक्षं श्रितः, कूपपतित इत्यादि |
| २- तृतीया तत्कृतार्थेन गुणवचनेन २/१/३० | वातशूरः, व्रणकाणः, धान्यार्थः, |

३- चतुर्थी तदर्थावलिहितसुखरक्षितैः २/१/३ यूपदारुः,
४- पंचमी भयेन २/१/३७ चौरभयम्, शीतमासः
५- षष्ठी २/२२८ राजपुरुषः
६- सप्तमीशौण्डैः २/१/४० दानशौण्डः

अष्टाध्याय्यां पञ्चमीसमासानन्तरं सप्तमीसमास उक्तः ततः परं षष्ठीसमासः। परम् रूपमालायामाचार्यचरणैः पञ्चमीसप्तम्योर्मध्ये षष्ठीसमासमुक्त्वा तत्रत्यः क्रमः परिहृतः विभक्तीनां क्रमश्च सुस्थापितः।

ततः परमत्र समानाधिकरणपदस्तत्पुरुषः प्रतिपादितः। "तत्पुरुषः समानाधिकरणः कर्मधारयः" १/२/४२ इति पाणिनिसूत्रबलादयं समासः कर्मधारयपदेनाभिधीयते। अत्र हि विशेषणं विशेष्येणं बहुलम् (२/१/५७), कुत्सितानि कुत्सनैः (२/१/५३) पापणके कुत्सितैः (२/१/५४) पोटा युवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः (२/१/६५), कुमारः श्रमणादिभिः (२/१/७०), उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (२/१/५६), उपमानानि सामान्यवचनैः (२/१/५५), श्रेण्यादयः कृतादिभिः (२/१/५९) इत्यादिसूत्राणि सोदाहरणं व्याख्यातानि।

एतदुत्तरं "तद्धितार्थोत्तरपदसमाहारे च" (२/१/५१) इति सूत्रेण संख्यापूर्वपदः समासः प्रतिपादितः। स च "संख्यापूर्वो द्विगुः" इति सूत्रेण द्विगुसंज्ञको भवति। तथा पञ्चसु कपालेषु संस्कृतः पञ्चकपालः। द्वौ वेदावधीते द्विवेद इति। तत्पश्चात् "नञ्" इतिसूत्रविहितनञ्समासो व्युत्पादितः। "अनश्वः, अधर्मः,", इत्याद्युदाहरणान्यपि प्रदर्शितानि। अत्रैवान्ते गतिसंज्ञाकानां कुशब्दस्य च "कुगतिप्रादयः" इत्यादिसूत्रविहिततत्पुरुषसमासः "उपपदमतिङ्" इतिसूत्रेण उपपदसमासः सोदाहरणं प्रतिपादितः।

**बहुव्रीहिः -**

"प्रायेणान्यपदार्थप्रधानो बहुब्रीहिः" इति प्रागेवोक्तम्। "अनेकमन्यपदार्थे, इतिसूत्रेण बहुब्रीहिसमासो विधीयते प्रथमाभिन्नविभक्त्यर्थेष्वयं समासो भवतीति रूपमालकारेणोक्तम् - "प्रथमान्तस्यार्थे तु नायमिष्यते।" साधारणतया त्रिविधोऽयं बहुब्रीहिः-समानाधिकरणबहुब्रीहिः, सहार्थकबहुव्रीहिः व्यधिकरणबहुव्रीहिश्चेति। षड्विधानांबहुव्रीहि-समानाधिकरणानामुदाहरणानि रूपमालायामुपदर्शितानि तद्यथा -

१- द्वितीयार्थे समानाधिकरणबहुव्रीहिः - प्राप्ता अतिथयो यंसःप्राप्तातिथिःग्रामः

२- तृतीयार्थे " " ऊढो रथो येन स ऊढरथोऽश्वः

३- चतुर्थ्यर्थे " " उपहतःपशुर्यस्मै स उपहतपशू रुद्रः

४- पंचम्यर्थे " " च्युतानि फलानि यस्मात् स च्युतफलस्तरुः

५- षष्ठ्यर्थे " " लम्बौ कर्णौ यस्य सः लम्बकर्णः पुमान्

६- सप्तम्यर्थे " " दत्तःबलिर्यस्मिन् दत्तबलिर्यज्ञः

"तेनसहेति तुल्ययोगे" (२/२/२८) इतिसूत्रेण सहार्थकबहुब्रीहिः प्रतिपादितः तदुदाहरणं च "सह पुत्रेणागतः सपुत्रः" इत्युपन्यस्तम् ।

व्यधिकरणबहुव्रीहिः यथा - कण्ठे कालो यस्य सः कण्ठेकालः, उरसि लोमानि यस्य स उरसिलोमा ।

"समानाधिकरणानामेवायमिष्यते । केचित्तु वैयाधिकरण्येऽपि ।" इति रूपमालाकृतां वचनेनेदं ज्ञायते यत् समानाधिकरणपदानामेव बहुब्रीहिरिति तेषामाशयः ।

पुनश्चायं बहुव्रीहिः द्विविधः-तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । यत्र समस्यमानपदार्थनाम् अन्यपदार्थेन्वयं भवति स तद्गुणसंविज्ञानो बहुब्रीहिः यथा लम्बकर्णमानय" इत्यत्र । रूपमालाकारोऽप्याह-" विशेष्यैकदेशस्य विशेषणत्वे तद्गुणत्वेन तद्गुणसंविज्ञानोऽयमुच्यते ।" इति । यत्र समस्यमानपदार्था अन्य पदार्थे नानुयान्ति स अतद्गुण-संविज्ञानो बहुब्रीहिः यथा दृष्टसागरमानय इति ।

समासविधानानन्तरमत्र तत्तत्प्रयोगेषु यथायथमपेक्षितानि "वामि ङितिह्रस्वश्च" इत्यादि स्त्रीलिङ्गे नदीसंज्ञाविधायकानि सूत्राणि, "बहुब्रीहौ संख्येयेऽजबहुगणात्" इत्यादीनि समासान्तविधायकान्यपि सूत्राणि विवृतानि ।

**द्वन्द्वः -**

"उभयपदार्थप्रधानो द्वन्द्वः" इति । तत्र "चार्थे द्वन्द्वः" इति सूत्रेण द्वन्द्व समासो विधीयते । स च द्विविधः - समाहारार्थः, इतरेतरयोगार्थश्च । यदाह-रूपमालाकारः "समुदायप्रधानोऽन्योऽन्यं, सम्बन्धः समाहारः । अवयव प्रधान इतरेतरयोगस्तत्र स्यात् ।" इति । यथा - संज्ञा च परिभाषा च अनयोः समाहारः संज्ञापरिभाषम्, रामश्च कृष्णश्च-रामकृष्णौः इति च तयोः क्रमेणोदाहरणे । अत्र "द्वन्द्वे घि" (२/२/२३) इत्यादीनि पूर्वपरनिपातप्रयोजकानि पञ्चसूत्राणि "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामू" (२/४/२) "जातिरप्राणिनाम् (१/४/६) क्षुद्रजन्तवः (२/४/८) इत्यादीनि एकवद्भाव-विधायकानि षट्सूत्राणि, न दधि पय आदीनि, (१/४/१४) इत्यादीनि एकवद्भावनिषेधसूत्राणि च यथापेक्षं व्याख्यातानि । अनन्तरं "जात्या-ख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति विभाषया बहुवचनविधायकं सूत्रं व्याख्याय "सर्वोद्वन्द्वो विभाषयैकवदित्येके" इत्युक्तम् ।

**लिङ्गानुशासनम् -**

समासान्ते लिङ्गवैचित्र्यमुपदर्शितुमाचार्यचरणैः लिङ्गानुशासनमित्याख्यप्रकरणमुपन्यस्तम् । यथा "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि"ति सूत्रं व्याख्याय - एतौ वीणादुन्दुभी, मुखचन्द्रः, करकमलमित्याद्युदाहरणानि प्रदर्शितानि । एवमेव "रात्राह्नाहाः पुंसि, अपथं नपुंसकम्, अर्द्धर्चाः पुंसि च, विभाषासेनासुराच्छायाशालानिशानाम्, छांयाबाहुल्ये"इत्यादीनि सूत्राणि सोदाहरणं व्याख्यातानि ।

**समासान्तभागः -**

समासानुक्त्वा प्रकरणेऽस्मिन् समासान्तप्रत्ययाः विनिर्दिष्टाः। अत्र "ऋक्पूरब्धूः पथामानक्षे" ५/४/७४ इत्यादीन्यच् विधायकानि दशसूत्राण्यष्टाध्यायीक्रमेण व्याख्यातानि। अनन्तरं "राजाहःसखिभ्यष्टच्" ५/४/९१। इत्यादीनि टच्प्रकरणस्य दशसूत्राणि सोदाहरण-मुपन्यस्तानि। ततः "बहुब्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५/३/११३ इत्यनेन षच्प्रत्ययमुक्त्वा अप्प्रत्ययविधायके द्वे सूत्रे विनिर्दिष्टे। इत्थं समासान्तभागेऽधोलिखिताः समासान्त-प्रत्ययाः प्रतिपादिताः।

| | | | |
|---|---|---|---|
| १- अच् | ऋक्पूरब्धू० | ५/४/७४ | अर्द्धर्चः |
| २- टच् | राजाहःसखिभ्यष्टच् | ५/४/९१ | महाराजः |
| ३- षच् | बहुब्रीहौ सक्थ्यक्ष्णोः | ५/३/११३ | दीर्घसक्थः |
| ४-अप् | अप्पूरणीप्रमाण्योः | ५/४/११३ | कल्याणीपञ्चमा रात्रयः |
| ५- असिच् | नित्यमसिच् प्रजामेधयोः | ५/४/१२२ | अप्रजाः |
| ६- अनिच् | धर्मादनिच् केवलात् | ५/४/११४ | प्रियधर्मा |
| ७- कप् | उरःप्रभृतिभ्यःकप् | ५/४/१५१ | व्यूढोरस्कः |

**एकशेषभागः -**

"पुमान् स्त्रिया" (१/२/६७) इत्यनेन स्त्रिया सह द्वन्द्वे पुमान् शिष्यते, स्त्री लुप्यते यथा ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। एवमेव "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्, "श्वसुरः श्वस्रू वा" पिता मात्रा, त्यदादीनि सर्वैर्नित्यम्" इति पञ्च सूत्राणि व्याख्यातानि। मध्ये यथावसरं "मात-रावुदीचाम्" इति अरङादेशविधायकसूत्रमपि व्याख्यातम्।

**समासाश्रयविधिः -**

समासाश्रयविधौ हि पूर्वं "अपरस्पराः क्रियासातत्ये, गोष्पदं सेवितप्रमाणेषु, पास्क-रप्रभृतीनि च संज्ञायाम् पृषोदरादीनि यथोपदिष्टम्" इत्यादिभिः सूत्रैः "अपरस्पराः, अगोष्पदा-दयः निपातनप्रयोगाः संसाधिताः। ततः, अम्भसा सिक्तम्, अरण्येतिलकाः, कण्ठेकालः सरसिजम्, दासस्यपुत्रः होतुः शिष्यः, मातुः स्वसा" इत्यादिषु समस्त प्रयोगेषु विभक्तेरलुग् निदर्शनाय अलुक्प्रकरणमुक्तम्। तत्र "ओजः सहोम्भस्तमसस्तृतीयायाः, हलदन्तात्सप्तम्याः संज्ञायामित्यदीनि अलुग्विधायकानि सूत्राणि विवृतानि। समासे षत्वविधायके "मातृपितृभ्यां स्वसा, मातुःपितुभ्यामन्यतरस्याम्" इति सूत्रेऽप्यत्रैव व्याख्याते। "होतापोतारावि" त्यादिषु प्रयोगेषु आनङादेशविधायकं "आनङ्ऋतोद्वन्द्वे" "देवताद्वन्द्वे चे त्यादिसूत्राणि प्रदर्शितानि। अनन्तरं समस्तप्रयोगेषु यथोपेक्षं इदीत् द्यावादेशात्व-त्रयसादेशोदादेशदुदागमविधायकानि सूत्राणि व्याख्यातानि अत्रैवाष्टाध्यायीक्रमेण" स्त्रियापुंवद्० ६/३/३४ इति सूत्रादारभ्य "पुव-त्कर्मधारय जातीयदेशीयेषु" ६/३/४२ इतिसूत्रपर्यन्तं पुंवद्भावतन्निषेधसूत्राणि प्रतिपादि-तानि। अन्ते च अतिशयेन ब्राह्मणी ब्राहमणितरा इत्यादिषु ह्रस्वविधानाय "घरूप-कल्प०, इत्यादीनि अष्टसूत्राण्युपन्यस्तानि।

**द्विरुक्ताः -**

समग्रपदस्य द्वित्वविधायकानि अष्टाध्याय्याः प्रथमाध्यायस्य चतुर्थपादस्थषट्सूत्राण्यिहोपन्यस्तानि। यथा - पचतिपचति, भुक्त्वा याति, भोजं भोजं याति इत्यत्र द्वित्वविधायकं नित्यवीप्सयोरिति सूत्रमुक्तम्।

**षत्वसत्वणत्वमाला -**

षत्वादिमालायां प्रथमं "पूर्वपदात्संज्ञायामगः" इत्यादिभिर्दशसूत्रैः णत्वविधानमुपदर्शितम्। "पदव्यवायेऽपि" इति णत्वनिषेधोऽप्यत्रैवोपपादितः। तेन रोषभीममुखेनेत्यत्र णत्वं न भवति। अनन्तरम् "सोऽपदादौ, नमस् पुरसोर्गत्योः, तिरसोऽन्यतरस्याम्" इति त्रिभिर्सूत्रैः विसर्गस्य सत्वविधानं प्रतिपादितम्। ततः "इणःषः" ८/३/३९ इत्यादिभिः चतुर्भिः सूत्रैः षत्वप्रकरणमुपन्यस्तम्। अष्टमाध्यायस्य तृतीयपादस्थरुत्वप्रकरणमपि "पुनः खय्यम्परेः, नृन्पे" इत्यादिभिः सूत्रैरत्रैवोपन्यस्तम्। अन्ते च "षत्वतुकोरसिद्धः" इतिसूत्रेण एकादेशशास्त्रस्याऽसिद्धत्वम् "अणिञोरनार्षयो॰" इत्यनेन स्त्रियां ष्यङादेशम्" यङश्चाप्प्रत्ययमभिधाय"ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे, बन्धुनि बहुव्रीहौ" इतिसूत्राभ्यां सम्प्रसारणविधानमुपदर्शितमिति शम्।

# प्रक्रियाग्रन्थैः सह रूपमालायाः तुलनात्मकं समीक्षणम्

## शैलीगतं वैलक्षण्यम्

रूपमालायाः निर्माणे विचारणीया दुरूहा च समस्या आसीत् यत्कथमत्र शास्त्रे संक्षेपः करणीयः केन प्रकारेण प्रकरणरचना कर्तव्या, कथं सूत्राणि संघटनी यानि, कानि सूत्राणि स्वीकरणीयानि कानि च परित्यजनीयानि ? ग्राह्येष्वपि सूत्रेषु कः क्रमः सङ्घटने आश्रयणीय इति ? इत्यादिसर्वमतीव सूक्ष्मेक्षिकया विवेचितव्यमासीत्। अत एवैतत् सम्यग् विचार्य आचार्यचरणैः बालानामुपकाराय ग्रन्थेऽस्मिन् या हि विषयप्रतिपादनपद्धतिः, सूत्राणां संघटन-शैली चाङ्गीकृता सा नूनं प्रशंसावहेति।

रूपमालायां ग्रन्थसङ्क्षेपविधौ विमलसरस्वतीमहाभागाः सर्वथा प्रयतमाना एव दृश्यन्ते। अत्र महाभाष्यं काशिकावृत्तिं चाङ्गीकृत्य विषय प्रतिपादनं कृतं वर्तते। कुत्रचित् स्वपूर्ववर्तिनः रूपावतारस्यापि प्रभावो दृश्यते। प्रक्रियाकौमुद्यादिवदस्य ग्रन्थस्य पूर्वार्द्धोत्तरा-र्द्धरूपेण विभाजनं न दृश्यते। "वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः"[१] इति भूष-णसारकारिकोक्त्या भाषायामर्थबोधकत्वाद् वाक्यस्फोट एव ज्यायान्। तत्र सुबन्तं तिङन्तं चोभयं समान रूपेणापेक्षेते। अतः "सुप्तिङन्तचयोवाक्यम्" इत्यमरोक्तिं[२] सम्यगवधार्य पूर्वं संज्ञा-सन्धि-स्वादिस्त्रीप्रत्यय-कारकमालदयो निरूपिताः। ततः तिङन्तकृदन्त-तद्धितसमासमा-लादयः संस्थापिताः।

ग्रन्थेऽस्मिन् विमलसर स्वतीमहाभागैर्लौकिकानां शब्दांनां साधुत्व प्रसङ्गोऽनुसृतः। सम्पूर्णेऽस्मिन् ग्रन्थे वैदिकप्रयोगगान् व्युत्पादयितुं छान्दसमालाख्यमेकमेव प्रकरणमुपनिब-द्धम्। तत्र हि-आज्जसेरसुक् ७/१/५०, सुपां सुलक् पूर्वसवर्णाच्छेयाडाड्याजालः ७/१/३९ इति सूत्रद्वयमेव व्याख्यातम्। अन्येषु प्रकरणेषु वैदिकप्रयोगविशेषान् साधयितुं प्रायेण कुत्रापि यत्नो नैव विहितः। परन्तु क्वचिद् बोपदेवादिवैयाकरणानां मतेन तथा-विधानां प्रयोगाणां लोकेऽपि दृष्टत्वात् तन्मतसंग्रहार्थं केषाञ्चन वैदिकसूत्राणां वार्तिकानाञ्चोपन्यासः छान्दसमा-लाया अन्यत्रापि रूपमालाकृता कृतः। तथाहि -

---

१. वैयाकरणभूषणसारः (स्फोटनिर्णयः) का० - ६१ पृ० ४५०

२. अमरकोषः (शब्दादिवर्गः) १/२

| रूपमाला पृ० सं० | सूत्राणि |
| --- | --- |
| सन्धि मा० पृ० १६ | ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि (वार्तिक) |
| हलन्तमा० पृ० ८० | वाहः ४/१/६१ |
| हलन्तामा० पृ० ८२ | टावृचि ४/१/९ |
| कृदन्तमा० पृ० ५५ | लिटःकानज्वा ३/२/१०६ |
| कृदन्तामा० पृ० ५५ | क्वसुश्च ३/२/१०७ |
| कृदन्तामा० पृ० ११२ | भुवश्च ३/२/१३८ |

महाभाष्ये १७१३ सूत्राणि यथास्थलं व्याख्यातानि। रूपावतारे २६६४ सूत्राणि, प्रक्रियाकौमुद्यां २४७० सूत्राणि सिद्धान्तकौमुद्यां च सर्वाण्येव पाणिनिसूत्राणि व्याख्यातानि। परं रूपमालायामाचार्यचरणै ग्रन्थसंक्षेपहेतुना केवलं २०४६ सूत्राण्येव व्याख्यातानि।

प्रक्रियाग्रन्थेषु सूत्राणां परित्यागविषयेऽपि वैमत्यं दृश्यते। यतो हि-यान्यधिकार-सूत्राणि अष्टाध्याय्यां केवलमुत्तरसूत्रेऽनुवृत्यर्थं पठितानि। यथा - "एकः पूर्वपरयोः" ६/१/८४ "कारके" १/४/२३, स्त्रियाम् ४/१/३ "अङ्गस्य" ६/४/१ "अनभिहिते" २/३/१, "अव्ययी-भावः" २/१/५ "तत्पुरुषः" २/१/२२ इत्यादीनि, तानि रूपावतारे तु व्याकृतानि। परं रूपमा-लायां तु ग्रन्थकारेण केवलम् "ङ्याप्प्रातिपादिकात्" ४/१/१, "स्त्रियाम्" ४/१/३, कारके १/४/२३, "धांतोः" ३/१/९१, "ताद्धिताः" ४/१/७६, "अव्ययीभावः २/१/५, तत्पुरुषः" २/१/२२ इत्यादीन्येव कानिचिदधिकारसूत्राणि पठितानि। एवं प्रक्रियाकौमुद्यामपि "ङ्याप्प्रा-तिपदिकात्" ४/१/१ "समर्थानां प्रथमाद्वा" ४/१/१ "धातोः" ३/१/९१, "भूते" ३/२/८२ "लस्य" ३/४/७७ इति कतिपयान्येवाधिकारसूत्राणि दृश्यन्ते। परं सिद्धान्तकौमुद्यां कस्यापि सूत्रस्य परित्यागः न कृतः।

एवञ्च कानिचिदन्यान्यपि सूत्राणि रूपमालायां परित्यक्तानि। तद्यथा सन्धिमा-लायाम् "नादिन्याक्रोशे पुत्रस्य, त्रिप्रभृतिषु शाकटायनस्य, "उञि च पदे" इत्यादिसूत्राणि परित्यक्तानि। एवं स्त्रीप्रत्ययमालायामपि प्रयोग विशेषनिष्पादकानां षट्सूत्राणामुल्लेखो नैव कृतः। तथा हि -

| | सूत्राणि | उदाहरणानि |
| --- | --- | --- |
| १- | सर्वत्रलोहितादिकतन्तेभ्यः (४/१/१८) | लौहित्यायनी इत्यादि |
| २- | कौरव्यमाण्डूकाभ्यां च (४/१/१९) | कौरव्यायणी, माण्डूकायनी |
| ३- | संख्याऽव्ययादेर्ङीप् (४/१/२६) | घूहनी, अत्यूहनी |
| ४- | दिक्पूर्वपदात् ङीप् (४/१/६०) | प्राङ्मुखी, प्राङ्मुखा |
| ५- | संज्ञायाम् (४/१/७२) | कद्रूः कमण्डलूः |
| ६- | आवट्याच्च (४/१/७५) | आवट्या |

एवं सर्वेषु प्रकरणेषु रूपमालाकारेण सूत्राणि परित्यक्तानि। जिज्ञासूनां व्याकरण-शास्त्रे सारल्येन प्रवेशाय विमलसरस्वतीभिः स्वकीये ग्रन्थे केवलं २०४६ सूत्राणामेव समावेशो विहित इति पूर्वमेव मयोक्तम्।

प्रक्रियाग्रन्थेषु प्रयोगाणां साधुत्वप्रदर्शनाय तत्तल्लक्ष्यविषयकाणि सूत्राणि यानि पाणिनीयाष्टाध्याय्यां विभिन्नेषु स्थलेषु प्रसृतानि सन्ति तान्येकत्र संग्रह्य व्याख्यातानि वर्तन्ते। एतदर्थं रूपमालायां तादृशानि बहूनि सूत्राण्यवलोक्यन्ते येषां व्याख्या आचार्येण वारद्वयं कृता। यथा हि -

| | | |
|---|---|---|
| १- एत्येधत्यूठ्सु ६/१/८९ | - सन्धिमालायाम् - | उपैति, प्रैधते इति प्रयोगेषु |
| | - हलन्तमालायाम् - | "भारौहः" इति प्रयोगे |
| २- ष्टुना ष्टुः ८/४/४१ | - सन्धिमालायाम् - | "तट्टीकते" इत्यादिप्रयोगेषु |
| | - हलन्तमालायाम् - | "सजूष्षु" इति प्रयोगे |
| ३- ङ्णोः कुक् टुक् शरि | -सन्धिमालायम् - | "प्रत्यङ्क् शेते" इति प्रयोगे, |
| | - हलन्तमालायम् - | "प्रत्यङ्क्षु" इति प्रयोगे |
| ४- वोतो गुणवचनात् ४/१/४४ | - अजन्तमालायाम् - | "मृदवी- इति प्रयोगे |
| | - स्त्रीप्रत्ययमालायाम् | पट्वी" इति प्रयोगे |
| ५- ऋन्नेभ्यो ङीप् ४/१/५ | - अजन्तमालायम् - | "दात्री" इति प्रयोगे |
| | - स्त्रीप्रत्ययमालायाम्- | |

"क्रोष्ट्री" इति प्रयोग सिद्ध्यवसरे।

एवं प्रक्रियाप्रतिपादनाय सूत्राणां पुनः पुनः पाठस्य परम्परा रूपावताराात्प्रादुर्भुता, विमलसरस्वतीभिश्चाङ्गीकृता। यतो हि रूपावतारेऽपि बहूनि सूत्राणि सन्ति येषां व्याख्या धर्मकीर्तिना तत्तल्लक्ष्यसंस्कारत्वं दर्शयितुं नैकवारं विहिता। यथा हि -

| | | |
|---|---|---|
| १- अनेकाल्शित्सर्वस्य १/१/५२ | संहितावारे - | स्वरसन्धौ |
| | विभक्त्यवतारे - | अजन्तपुल्लिङ्गे |
| २- अव्ययादाप्सुपः २/१/८२ | संहितावतारे | स्वादिसन्धौ |
| | अव्ययावतारे | समासावतारे च |
| ३- अचो ञ्णिति ७/२/११५ | अजन्तपुल्लिङ्गे | "सखायौ" इति प्रयोगे |
| | " " | "गोः" इति प्रयोगे |
| ४- आदेः परस्य १/१/५४ | विभक्त्यवतारे - | अजन्तपुल्लिङ्गे हलन्तपुल्लिङ्गे च |

| | | |
|---|---|---|
| ५- अजाद्यतष्टाप् ४/१/४ | अजन्तस्त्रीलिङ्गे | स्त्रीप्रत्यये च |
| ६- "आङ् ऋतो" द्वन्द्वे ७/३/४५ | समासावतारे अलुगादिसमासाश्रय विधौ | द्वन्द्वसमासे |

रूपावतारे एतादृशानि स्थलानि बहूनि सन्ति। परं श्री-राम-चन्द्राचार्यप्रणीतायां प्रक्रियाकौमुद्यामपि रूपावतारस्य रूपमालायाश्च प्रभावो वर्तते एव। यतो हि प्रक्रियाकौमुदी-कारेणापि बहूनां सूत्राणां व्याख्यानं वारद्वयं विहितम्। तथा हि-

| | | |
|---|---|---|
| १- अनेकाल्शित्सर्वस्य १/१/५५ | संज्ञाप्रकरणे | अजन्ते चे। |
| २- कुप्वो क पौच ८/३/१५ | हल्सन्धौ | विसर्गसन्धौ च। |
| ३- विसर्जनीयस्य सः ८/३/१५ | हल्सन्धौ | विसर्गसन्धौ च। |
| ४- आदेः परस्य १/ ।/५४ | हल्सन्धौ | हलन्ते च। |
| ५- वर्षाभ्वश्च ६/४/८४ | अजन्तपुल्लिङ्गे | स्त्रीलिङ्गे च। |
| ६- धातोः ३/१/९१ | भ्वादौ कृदन्ते च। | |

इत्थं रूपावतारादारभ्य प्रक्रियाकौमुदीपर्यन्तमेकैकस्य सूत्रस्य पुनः पुनः व्याख्यान-परम्परा विद्यते;परं सिद्धान्तकौमुद्यां कुत्रापि एकस्मिन् स्थले व्याख्यातसूत्रस्य पुनर्व्याख्यानं नोपलभ्यते।

अत्र रूपमालाकारः सूत्रार्थं संक्षिप्ततया व्याख्याति। रूपमालायां सूत्रव्याख्यानाव-सरे केषुचित्स्थलेषु काशिकायाः क्वचित् रूपावतारस्य प्रभावो दृश्यते। अत्र ग्रन्थकारः बहुषु स्थलेषु पूर्वां सूत्र व्याख्यानपद्धतिं विहाय नूतनं सूत्रार्थं प्रतिपादयतीति सर्वं यथा स्थलं वक्ष्यामः।

यथा काशिकावृत्तौ बहुत्र सूत्रस्यैकैकस्य पदस्य वृत्तौ पर्यायत्वेनोपन्यासः कृतः, न तथा रूपमालादिप्रक्रियाक्रमग्रन्थेषु। यथा काशिकायां "प्राघ्राध्मास्थाम्ना०" (७/३/७८) इत्यस्य-पा घ्राध्मा स्था-म्ना-दाण् दर्शिसर्ति-शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ सीय सीद इत्येते आदेशा भवन्ति शिति परतः। "इत्यर्थः प्रतिपादितः। स एव धर्मकीर्तिना रूपावतरे भिन्नां शब्दावलीमाश्रित्य विशदीकृतः। परं तदनन्तरं संक्षेपरुचयो वैयाकरणाः विमलसरस्वत्यादयः। तथा हि रूपमालायां "पाघ्राध्मा०" इत्यस्य वृत्तौ "शिति स्युः" इत्येव व्याख्यानं वर्तते। प्रक्रियाकौमुद्यान्तु - "पाघ्रादीनां क्रमात् पिबादयः आदेशा स्युः शिति" इति रूपमालामनुसृत्य व्याख्यानं वर्तते। सिद्धान्तकौमुद्यां पादीनां पिबादयः स्युरित्सं-ज्ञकशकारादौ प्रत्यये परे इत्यर्थो विहितः। यद्यप्यत्र प्रक्रियाग्रन्थेषु सूत्रार्थकरणे कोऽपि भेदो नास्ति परं प्रक्रियाकौमुदीतः पूर्ववर्तिषु ग्रन्थेषु "इत्संज्ञकशकारादौ प्रत्येय परे" इति सूत्रार्थ-भागो न दृश्यते।

पाणिनेरष्टाध्याय्यां तादृशान्यपि सूत्राणि सन्ति, येषां स्वरूपेणैवार्थबोधो जायते। अतस्तेषां सूत्राणां विमलसरस्वतीभिः वृत्तिर्नैव लिखिता। केवलमुदाहरणमात्रमेव तैः प्रदत्तम्। तेषु कानिचिदत्र लिख्यन्ते-

| (रूपमाला प्र० भाग) | | |
|---|---|---|
| अजन्त मा० पृ० ६९ | ऋन्नेभ्यो ङीप् | ४/१/५ |
| संख्या मा० पृ० ११७ | रोः सुपि | ८/३/१६ |
| (द्वि० भागे) | | |
| कृ० मा० पृ० ८५ | ल्वादिभ्यः | ८/२/२४ |
| " " " | ओदितश्च | ८/२/४५ |
| कृ० मा० पृ० ११२ | भियः कुक्लुकनौ | ३/२/१७४ |
| त० मा० पृ० १४३ | दध्नष्ठक् | ४/२/१८ |
| त० भा० पृ० १४३ | क्षीराड्ढञ् | ४/२/२० |
| त० मा० पृ० १४४ | शुक्राद् घन् | ४/२/२६ |
| " " " | सोमाट्ट्यण् | ४/२/३० |
| (चतुर्थ भागे) | | |
| त० मा० पृ० २ | नद्यादिभ्यो ढक् | ४/२/९७ |
| " " पृ० ३६ | परिषदोण्यः | ४/४/१०१ |
| " " पृ० ३७ | सभाया यः | ४/४/१०५ |

सूत्राणामेतादृशी व्याख्यानपरम्परा रूपावतारे नावलोक्यते। तत्र हि 'गोधाया ढ्रक्' (१/१/१२९) 'शिवादिभ्योऽण्' (४/१/११५), उत्सादिभ्योऽञ् (४/१/८६) इत्यादीनि सूत्राणि पूर्णरूपेण व्याख्यातानि। परं सिद्धान्तकौमुद्यां रूपमाला अनुसृता। तत्र बहूनां सूत्राणां वृत्तिमनुक्त्वैवोपन्यासो वर्तते। एतादृशस्थलेषु कुत्रचित् "स्पष्टम्" इति पदस्योल्लेखो दृश्यते। यथा -

| | | |
|---|---|---|
| १- झलां जश् झशि | (८/४/५३) | स्पष्टम्। |
| २- युष्मदस्मद्भ्यांङसोऽश् | (७/१/२७) | स्पष्टम्। |
| ३- उत्सादिभ्योऽञ् | (४/१/८६) | औत्सः |
| ४- गोधयाढ्रक् | (४/१/१२९) | गौधेरः |
| ५- क्षत्रादघः | (४/१/१३८) | क्षत्रियः |
| ६- श्वसुरश्छः | (४/१/१४३) | स्वस्रीयः |

एवमन्यान्यपि सूत्राण्यवधेयानि। प्रक्रियाक्रमग्रन्थेषु एतादृशी सूत्राणां व्याख्यानपरम्परा मूलगामिनी नास्ति। यतो हि - अष्टाध्यायीक्रमग्रन्थेषु भाषावृत्तौ व्याकरणमिताक्षरायामपि क्वचित् एतादृशी व्याख्यानपद्धतिरवलोक्यते। यथा -

१- भक्ष्येण मिश्रीकरणम् [1] (२/१/३५) समस्यते। गुडेन मिश्रा धाना गुडधाना।

२- शोणात् प्राचाम् (४/१/४३) शोणी। प्राचां किम्-शोणा।

रूपमालायां प्रायेण काशिकानुसारि व्याख्यानमुपलभ्यते। तथा हि १/१/११ इति सूत्रस्य वृत्तौ "मणीवादौ सन्धिरिष्यते" इति वचनं दृश्यते। तथैव काशिकायामपि - "मणीवा-

---

१. भाषावृत्तिः २/१/३५, ४/१/४३

दीनां प्रतिषेधो वक्तव्यः" इति वचनम् "मणी इव" इति सन्धिविच्छेदं कृत्वा "ईदूदेद्द्विवचनं प्रगृह्यम्(१/१/११) इति विहितायाः प्रगृह्यसंज्ञाया प्रतिषेधो भवतीत्याशयः। इदं काशिकोक्तं वचनं रूपावतारे व्याकरणमिताक्षरायां प्रक्रियाकौमुद्याञ्च स्वीकृतम्। परं कैयट भट्टोजिदीक्षितनागेशप्रभृतयो विद्वांसः भाष्येऽनुक्तत्वादस्य वचनस्याप्रामण्यमेवाङ्गीकुर्वन्ति। यथा सिद्धान्तकौमुद्यादौ[1] "मणीवोष्ट्रस्य" इत्यस्य 'मणीव' इति रूपेण अथवा मणी + वा + उष्ट्रस्य इत्येवं रूपेण सन्धिविच्छेदं कृत्वा "इवार्थे व शब्दो वा शब्दो वा बोध्यः" इत्युक्तम्। अर्थात् कोशग्रन्थाधारेण एवं वक्तुं शक्यते यदत्र इवपदं नास्ति अपितु व अथवा वापदमेव। अतः तेषां मतेनेदं काशिकोक्तं वार्तिकमनुपयुक्तम्।

अत्रेदमपि वक्तव्यम् यत्कुत्रचित् धर्मकीर्तिकृतरूपावतारे प्रकरणस्थापनशैली दृश्यते। तत्र हि प्रकरणसंस्थानात् सूत्रोपस्थानाद् वा पूर्वं तद्विषये प्रश्नः शङ्का वा क्रियते। अनन्तरं च तद्विषयकं सूत्रमुच्यते। यथा कारकावतारस्य प्रारम्भे - अथ विभक्त्यर्थाः प्रदर्श्यन्ते। काः पुनर्विभक्तयः सु-औ-जस् इति प्रथमेत्येवमादयः। कस्मिन्नर्थे प्रथमा ? प्रातिपादिकार्थलिङ्ग परिमाणवचनेमात्रे प्रथमा (१/२/४५) अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते (म० भा०) "कृत्तद्धितसमासाश्च" इति एवमेव स्त्रीप्रत्ययावतारस्यारम्भे - अथ स्त्रीप्रत्ययान्ता निर्दिश्यन्ते। के पुनः स्त्रीप्रत्ययाः ? "टाप-डाप्-चाप्-ङीप्-ङीष् ङीन्- उङ्ति" इत्येते स्त्रीप्रत्ययाः। प्रथमं तावत् टाप्। अजाद्यतष्टाप् (४/४/४) इति। परं रूपावतारानन्तरं ग्रन्थसङ्क्षेपहेतुना रूपमालायामेतादृशी शैली न दृश्यते। उत्तरवर्तिषु कौमुद्यादि-प्रक्रियाक्रमग्रन्थेष्वप्येतादृशी शैली न वर्तते। अतस्तेषु रूपमालाया प्रभाव इति वक्तुं शक्यते।

रूपमालायां सूत्राणां वृत्या सहैव गणपाठलेखनस्य रीतिरवलोक्यते न तथाऽन्येषु प्रक्रियाग्रन्थेषु। यथा -

शे मुचादीनाम् (नुम्) स्यात्। "मुचिः - सिचिलिपिलुपी कृती विद्लृ-खिदः पिशिः" इति।

ग्रन्थेऽस्मिन् शाकटायन[2] - भागुरि[3] - चान्द्र[4] - वररुचि[5] - प्रभृतीनां वैयाकरणानामुल्लेखोऽपि विमलसरस्वतीभिः कृतः।

---

१. सि० कौ० सू० १०० (अत्र प्रौ० म० अपि द्रष्टव्या)

२. रु० मा० ( अ०मा०पृ०६० ) "शाक्टायनास्त्वभिधेयलिङ्गेभ्योऽपि ह्रस्वेदुदन्तेभ्यः परेषां ङितां वैल्पिकमाटं साटश्च ङेरामदेशमिच्छन्ति।"

३. रुपमा० ( स्त्री०मा०पृ०२ ) "हलन्तादपि वागादेष्टापमिच्छति भागुरिः।"
प्रोपावापाङ्परानिव्यध्यभिप्रत्यतिपर्यपि।
स्वनूत्संनिर्दुरल्लोपस्त्ववाप्योर्भागुरेर्मते॥"

४. रु० मा० ( ति०मा०स० भाग पृ० २३ ) "भाषामात्रविषयेऽपि, चान्द्रे प्रोक्तत्वात्।"

५. रु० मा० ( कृदन्तमा० पृ० ११७ ) उणादिस्फुटीकरणाय वररुचिना प्रथगेव सूत्राणि प्रणीतानि।"

एतदतिरिक्तं रूपमालायां प्रसङ्गवशेन व्यास-कालिदास-माघ-भारवि-श्रीकृष्ण मिश्र-भोजादिप्रणीतभ्यो महाभारत-रघुवंश-शिशुपालबध-किरातार्जुनीय-प्रबोधचन्द्रोदय-सरस्वतीकण्ठाभरणामरकाषादिग्रन्थेभ्यश्चोदाहरणान्युपन्यस्तानि ।

किं बहुना, भाष्यवार्तिककाशिकारूपावतारादिग्रन्थसारांशसङ्कलनेन मतान्तरप्रदर्शनेन नेकेषां व्यवहारोपयोगिनां शब्दानां सङ्ग्रहेण परमोपकारिणी, अन्वर्थसंज्ञिका रूपमालानाम्नी विमलसरस्वतीविरचितकृतिरियम् ।

अथास्मिन्नध्याये चतुर्षु भागेष्वधो-लिखितरीत्या प्रक्रियाग्रन्थैः सह रूपमालायाः तुलनात्मकमध्ययनं विधास्यामः । तद्यथा -

(क) रूपमालाया प्रतिपाद्यविषयस्य प्रकरणक्रमानुसारि सङ्क्षेपेण विवेचनम् ।

(ख) वार्तिकानां विवेचनम् ।

(ग) श्लोकवार्तिकानां कारिकाणां च समीक्षणम् ।

(घ) परिभाषाणां समालोचनम् ।

## (क) रूपमालायाः प्रतिपाद्यविषयस्य प्रकरणक्रमानुसारि विवेचनम्

तत्रादौ प्रक्रियाग्रन्थैः सह रूपमालायाः प्रतिपाद्यविषस्य प्रकरणक्रममनुसृत्य सङ्क्षेपेण तुलनात्मकं विवेचनं प्रस्तूयते । -



### संज्ञामाला

कस्मिंश्चिदपि शास्त्रे पारिभाषिकशब्दानां ज्ञानाभावे तस्मिन् प्रवेशो नितरां दुरूह इति तेषां परिज्ञानाय ग्रन्थादौ संज्ञामालेति प्रकरणमुपन्यस्तम् । "संज्ञासूत्रत्वञ्च साक्षाच्छक्तिग्राहकत्वमि"ति पं० सभापतिशर्मोपाध्यायमहाभागैः सिद्धान्तकौमुदीटीकायामुक्तम्[१] ।

रूपमालायां संज्ञामालाख्य-प्रकरणे चतुर्दशसूत्रैः वर्णोपदेशं विधाय आचार्यप्रवरैः प्रत्याहारसाधनाय "आदिरन्त्येन सहेता" इति सूत्रमुक्तम् । ततः हलन्त्यम् "तस्यलोपः" इति सूत्रे विनिर्दिश्य एकचत्वारिशंत्प्रत्याहाराणां परिगणनं कृतम् यथा-

**एकस्त्रयः पुनश्चैको वेदा एकस्त्रयस्त्रयः ।**
**एको द्वौ षट् तथेत्येकश्चत्वारः पञ्च षट् च ते ॥**

परं प्रक्रियाकौमुद्यां सर्वप्रथमं "उपदेशेऽजनुनासिक इत्" हलन्त्यम् "इति सूत्राभ्यामित्संज्ञां विनिर्दिश्य" "आदिरन्त्येन सहेता " "इतिसूत्रेण प्रत्याहाराःसंसाधिताः । सिद्धान्तकौमुद्यां श्रीमता दीक्षितेन हलन्त्यम्, अदर्शनं लोपः तस्य लोपः, आदिरन्त्येन सहेता" इतिसूत्रक्रमः महाभाष्यं प्रमाणीकृत्य स्वीकृतः । क्रमश्चायं वैज्ञानिकः प्रामाणिकश्चास्ति । अनन्तरं रूपमालायां सवर्ण ग्राहक-सवर्ण-संज्ञा-ह्रस्वदीर्घप्लुत-लघु-गुरु-संयोग-गुण वृद्धिसंज्ञाविधायकानि सूत्राणि पठितानि । अत्र सवर्णसंज्ञायाः प्रागेव सवर्णग्राहकताविधायकं सूत्र पठितम् । प्रक्रियाकौमुद्यामपि एवमेव सूत्रसंघटनं स्वीकृतम् । यथा -

---

१. सि० कौ० (लक्ष्मीव्याख्या) भाग - १ पृ० ७५

कार्यकालपक्षं वर्णयता महाभाष्यकृता ईदृशः संकेतो महाभाष्ये विहितः। रूपावतारे "दीर्घादीनां ग्रहणाय अणुदिदिति सूत्रमुक्तम्। एवं किं पुनः सवर्णम् ? इत्याकाङ्क्षायां "तुल्यास्यप्रयत्नं सवर्णमि"त्युक्तम्। तथैव रूपमालाकृतामाप्याशयोऽवधेयः। अत्र संक्षेपेण अचां भेदप्रदर्शनाय तिस्रः कारिका उपन्यस्ताः। सिद्धान्तकौमुद्यादिवदत्र उच्चैरुदान्तः, नीचैरनुदात्तः, समाहारः स्वरितः, इत्यादि सूत्राणां विवेचनं नैव विद्यते। वर्णानां स्थानानि निरूप्य केवलमाभ्यन्तरप्रत्यत्न एवात्र निरूपिता। वाह्यप्रयत्नानां चर्चा नैवावलोक्यते। संज्ञामालायां ता एव संज्ञाः प्रदिर्शताः या प्रत्याहारोपयोगिन्यः सावर्ण्यज्ञापिकाश्च सन्ति। रूपमालायां रूपाणां प्रामुख्यात् लक्ष्यसाधनवेलायां विधिसूत्रैः सहैव संज्ञापरिभाषामुपस्थतिस्वभावात् परिभाषा-माला नाम प्रकरणमत्र कृतं न वर्तते। एवमेव रूपावतारे प्रक्रियाकौमुद्यां च पृथक्प्रकरणं नैव दृश्यते परं सिद्धान्तकौमुद्यां परिभाषाप्रकरणं स्वतन्त्ररूपेणोपनिबद्धं दीक्षितेन।

प्रक्रियाकौमुद्याः प्रथमप्रकरणं सन्ध्युपयोगिसंज्ञाप्रकरणमिति[1] नाम्ना ख्यातं दृश्यते। तत्र च कानिचित् संज्ञासूत्राणि कानिचिच्च परिभाषासूत्राणि संकलितानि सन्ति। एवं सिद्धान्तकौमुद्याः प्रथमप्रकरणस्य रूपमालायाः संज्ञामालायाः नामकरणमनुचितमयथार्थं चानुभूयते - तत्र तत्र सर्वासां संज्ञानां समावेशादर्शनात् संज्ञेतरसूत्राणां समावेशकरणाच्च। अतएव नागेशभट्टेन लघुशब्देन्देशेखरे संज्ञाप्रकरणान्ते संज्ञाप्रकरणमिति सिद्धान्तकौमुद्युद्धरणमाधृत्य "प्रथमाध्यायस्थितानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणमिति समाप्तमित्यर्थः। तेनाम्रेडितप्रगृह्यभसंज्ञालोपसंज्ञाद्यनुपन्यासेऽपि न क्षतिः। अ अ इत्याद्युपन्यासस्तु प्रांसंगिकः।" इत्युक्तम्[2]। परं नारायणभट्टमहाभागेन प्रक्रियासर्वस्वस्य संज्ञाखण्डेऽष्टाध्याय्याः सर्वाणि संज्ञासूत्राणि व्याख्यातानि। तथैव परिभाषाखण्डे अखिलानि परिभाषासूत्राणि विवृतानि।

## सन्धिमाला

सन्धिरिति संज्ञायाः व्यवहारो व्याकरणशास्त्रे समुपलभ्यमानेषु ग्रन्थेषु सर्वप्रथमं रूपावतारे ततः रूपमालायामुपलभ्यते। पणिनेरष्टाध्याय्यां कुत्रापि सन्धिशब्दस्य प्रयोगो नैव दृश्यते। पाणिनिना तु "परःसन्निकर्षः संहिता" (१/४/१०९) इतिसूत्रं संहिताधिकारत्वेन पठितम्। तत्र हि सन्धेः स्थानापन्नः शब्दः संहिता अस्ति। अतएव धर्मकीर्तिना स्वीयद्वितीयप्रकरणस्य नाम" संहितावतारः" इति कृतः।

प्रक्रियाग्रन्थेभ्यः पूर्वमष्टाध्यायीक्रमानुसारिणां काशिकादिवृत्तिग्रन्थानां क्रमे कश्चन ईदृगुपायो नासीद् येनैवंविधसन्धीनां ज्ञानमेकत्रैव भवेत्। यतो ह्यष्टाध्याय्यां स्वरसन्धेः सूत्राणि षष्ठाध्यायस्य प्रथमे पादे व्यञ्जनसन्धेः कानिचित्सूत्राणि अष्टमाध्यायस्य तृतीये पादे, कानिचिच्च चतुर्थे पादे, विसर्गसन्धेश्च कतिपयसूत्राण्यष्टमाध्यायस्य द्वितीये तृतीये च पादे, कानिचिच्च पुनः षष्ठाध्यायस्य प्रथमे पाद इति विभिन्नेषु स्थेलेषु प्रसृतानि सन्ति। एकस्य सन्धेर्परिज्ञाने बहूनां स्थलानामवलोकनात् सा पद्धतिः नितरां गौरवाहेति अस्यां प्रक्रियापद्धत्यामिदमेव सौकर्यं विद्यते यदेकत्रैव समेषां सन्धीनां ज्ञानाय यत्नो विहितो वर्तते।

---

१. प्र० कौ० द्र० संज्ञाप्रकरणस्यान्ते - "इति सन्ध्युपयोगि संज्ञा प्रकरणम्।"

२. ल० श०शे० (संज्ञाप्रकरणम्) पृ० ५४

रूपमालायां स्वरसन्धिः, प्रकृतिभावः, व्यञ्जनसन्धिः, विसर्गसन्धिश्चेति यथाक्रमं चत्वार एव सन्ध्यः स्वीकृता। प्रक्रियाकौमुद्यामपि अच् सन्धिः,हल्सन्धिः,विसर्गसन्धिः स्वादि-सन्धिश्चेति चत्वार एव सन्धयः संसाधिताः।

इह सुबन्तादिपदानां सिद्धये सन्ध्यपेक्षत्वात् सन्धिमालायमक्षरसमाम्नायक्रमेण स्वरव्यञ्जनसन्धी प्रदर्श्येते। यद्यपि तत्र कार्यित्वाद् विसर्जनीयस्याप्यट्सु पाठाद्धल्त्वाविशेषाद् विसर्गसन्धिरपि हल्सन्धिरेव, तथापि विसर्गसन्धेर्विसर्गस्थानिकत्वेन च हल्त्वविशेषमादाय प्रवृत्तत्वात् विसर्गसन्धेर्पृथगुपन्यासः।

एवं सन्धेरभावः प्रकृतिभावोऽप्यत्र सन्धिप्रकरणत्वेन स्वीकृतः। धर्मकीर्तिनापि रूपावतारे प्रकृतिभावसन्धिः स्वीकृतः। सिद्धान्तकौमुदीकारेणापि अचसन्धिप्रकरणस्यान्ते प्रकृतिभावस्योल्लेखः प्रथक् प्रकरणरूपेण कृतः।

पञ्चसन्धिप्रवादस्तु संज्ञाप्रकरणेऽपि सन्धित्वमङ्गीकृत्येतिप्रक्रिया कौमुद्याः प्रकाशटीकाकाराणां श्रीकृष्णपण्डितानां मतम्।[१]

धर्मकीर्तिना तु संहितावतारस्यावान्तरभेदत्वेन षट्सन्धयः स्वीकृताः। यथोक्तं रूपावतारे -

**"तुक्स्वरः प्रकृतिश्चैव व्यञ्जनं च ततः परम्।**
**ततो विसर्जनीयश्च स्वादिः षट्सन्धिरुच्यते।"** इति।

सन्धीनां पञ्चविभागाः अन्यत्र प्रक्रियाग्रन्थेषूपलभ्यन्ते, परन्तु तुक्सन्धीति विभागोऽत्र सर्वथा नूतनः। तुग् वस्तुतः नास्ति स्वरसन्धिः, स्वरस्थानेऽजायमानत्वात्। नासौ व्यञ्जनसन्धिः व्यञ्जनस्य स्थानेऽविहितत्वात्। न च नासावेव हल्सन्धिः (व्यञ्जनसन्धिः) यद्धलः स्थाने विधीयते, किन्तु सोऽपि हल् सन्धिः यत्र हल् विधीयते, एवञ्च तकाररूपव्यञ्जनविधानात् तुक्सन्धिः हल्सन्धिरेवेति वाच्यम् एवं सति यण्सन्धेरपि व्यञ्जनसन्धित्वापत्तेः। तत्रापि यवरलानां हलां विधीयमानत्वात्। अतो हलो विधीयमानत्वे न हल्सन्धिः,किन्तु हलः स्थाने विधाने सत्येवेति नियमः। तथा च तुक्सन्धेः स्वरव्यञ्जनविसर्गादिविभागेऽन्तर्भावासंभवात् पृथग् विभागः स्वीकरणीय एव। ह्रस्वस्य पिति कृति तुक्, छे च" इत्यादि पञ्च सूत्रीविहितः तुक्सन्धिः स्वरप्रकृतिभावव्यञ्जनविसर्गस्वादिसन्धिषु नैवान्तर्भावार्हः। अत एव रूपमालाकारेण तुक्सन्धि नाम पृथक् प्रकरणं विहितम्। नारायणभट्टमहाभागेन प्रक्रियासर्वस्वस्य संहिताखण्डे सन्धेर्सप्त-विभागाः स्वीकृताः। यथा-तुक् सन्धिः सुट्सन्धिः, अच् सन्धिः, प्रकृतिसन्धिः, हल् सन्धिः, विसर्गसन्धिः स्वादिसन्धिश्चेति।

अत्र सन्धिमालायां पूर्वं वर्णसमाम्नायक्रमेण स्वरसन्धेर्विवेचनं विद्यते। तत्र हि यणादिसप्तविधस्वरसन्धयः विविधोदाहरणपुरः सरं विवेचिताः। यथायथमपेक्षितानां सूत्राणां व्याख्यानं चाप्यत्रैव वर्तते। यथा "मध्वरिः" इत्यस्य सिद्धये "इकोयणचि" इत्यस्य व्याख्यानेन सह "अनचिच", अचो रहाभ्यां द्वे, झलां जश् झशि इत्यादिसत्राण्यपि व्याख्यातानि। रूपमालायां स्वरसन्धीनां व्याख्यानस्य क्रमः, उदाहरणादि कौमुद्यादिप्रक्रियाग्रन्थेभ्यः भिन्न एव। यथा-

---

१. प्र० कौ० प्रकाशः पृ० ६३

## स्वरसन्धिः

### (रूपमालायाम्)

| | | |
|---|---|---|
| १- यण्सन्धिः | - | (लृ + आकृतिः = लाकृतिः) |
| २- दीर्घसन्धिः | - | (विप्र + आज्ञा = विप्राज्ञा) |
| ३- गुणसन्धिः | - | खट्वा + इह = खट्वेह |
| ४- वृद्धिसन्धिः | - | गङ्गा + एषा = गङ्गैषा |
| ५- पररूपसन्धिः | - | उप + ओषणम् = उपोषणम् |
| ६- अयादिसन्धिः | - | ते + आगताः = तयागताः |
| ७- पूर्वरूपसन्धिः | - | अग्ने + अत्र = अग्नेऽत्र |

## अच् सन्धिः

### (प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यांप्रक्रियासर्वस्वे च)

| | | |
|---|---|---|
| १- यणसन्धिः - सुधी + उपास्यः | = | सुद्ध्युपास्यः |
| २- अयादिसन्धिः हरे + ए | = | हरये |
| ३- गुणसन्धिः - उप + इन्द्रः | = | उपेन्द्रः |
| ४- वृद्धिसन्धिः कृष्ण + एकत्वम् | = | कृष्णैकत्वम् |
| ५- पररूपसन्धिः शिवाय + ओनमः | = | शिवायोंनमः |
| ६- दीर्धसन्धिः दैत्य + अरिः | = | दैत्यारिः |
| ७- पूर्वरुपसन्धिः हरे + अव | = | हरेऽव। |

स्वराणामेव सन्निधाने प्रकृतिभावसम्भवात् स्वरसन्धेरनन्तरमेव रूपमालायां प्रकृतिभावसन्धिप्रकरणमुपन्यस्तम्। अत्र "प्लुप्तप्रगृह्या अचि नित्यम्" इतिसूत्रेण अचि परे प्लुप्तसंज्ञकाः प्रगृह्यसंज्ञकाश्च स्वरवर्णाः प्रकृत्या स्थिताः भवन्ति। अर्थात् सन्धिर्नभवतीत्यर्थः। यथा - "देवदत्त ३ एहि" इत्यत्र दूराद्धूते च" इत्यनेन टिसंज्ञकवर्णस्याकारस्य प्लुप्तसंज्ञायाम्" प्लुत प्रगृह्या० " इत्यादिसूत्रेण प्रकृतिभावान्न वृद्धिसन्धिः। एवञ्चात्र ग्रन्थकृता पूर्वं प्लुप्तसंज्ञायाः सूत्राणि व्याख्याय प्रगृह्यसंज्ञायाः सूत्राणि व्याख्यातानि। क्रमोऽयं सर्वत्र प्रक्रियाग्रन्थेषूपलभ्यते। अस्मिन्नेव प्रकरणे "अम् आगतै, अमी आगताः, इत्युदाहरणे प्रदर्श्य ग्रन्थकारेण " अदसो मादि"ति सूत्रस्य अद्विवचनमपीदूदेत्प्रगृह्यसंज्ञं स्यादि"त्यर्थः कृतः। मादित्युक्तेः। "अमुकेऽत्र" इति प्रत्युदाहरणमपि दत्तम्। अत्र व्याख्याने एदित्यस्यानुर्वतनं नास्ति समीचीनम्, अदश्शब्दे मकारात्परस्य एकारस्यासंभवात्। अत एव सिद्धान्तकौमुद्यादिग्रन्थेषु "अस्मात्परावीदूतौ प्रगृह्यौ स्तः" इत्यर्थो विद्यते।

**व्यञ्जनसन्धिः -**

विगता अञ्जना अभिव्यक्तिर्यत्र तत् व्यञ्जनम् अर्थात् हल्वर्णः। अत एव प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यां प्रक्रियासर्वस्वे चायं सन्धिः हल्सन्धिपदेनोच्यते। रूपमालायां

जश्त्वानुनासिकचर्त्व-छत्व-श्चुत्व-तुक्-ष्टुत्वानुस्वारादयः सन्धयः क्रमशः विवेचिताः सन्ति। सूत्राणां संघटनस्य क्रमोऽप्यत्र भिन्न एवावलोक्यते।

**रूपमालायाम्**

| सूत्रम् | उदाहरणम् | कार्यम् |
|---|---|---|
| १- झलां जशोऽन्ते | (वागियम्, अजादि) | जश्त्वम् |
| २- यरोऽनुनासिकेऽनुनासिको वा। | (वाङ्नाम,अज्मिश्रम्) | अनुनासिकः |
| ३- खरिच | वाग्घरिः, अज्झलौ | चर्त्वम् |
| ४- शश्छोऽटि | (वाक्छुभा, षट्छ्यामाः) | छत्वम् |
| ५- स्तोःश्चुना श्चुः | (तच्चित्रम्, तज्जयः) | श्चुत्वम् |
| ६- छेच | (देवच्छत्र) | तुक् |
| ७- ष्टुनाष्टुः | (तट्टीकते, तुष्ष्षते) | ष्टुत्वम् |
| ८- मोऽनुस्वारः | (त्वं राजा, किं शेषे) | अनुस्वारः |
| ९- अनुस्वारस्ययथि परसवर्णः, वा पदान्तस्य | (त्वङ्कुरु., त्वं कुरु) | परसवर्णः |
| १०- ङमोह्रस्वादचिङमुण् नित्यम् | (प्रत्यङ्ङास्ते, सुगण्णिह) पठन्निह | ङमुडागमः |
| ११- डः सिधुट् | (भवानत् साधुः) | धुडागमः |
| १२- नश्छव्यप्रशान् | (भवाँश्छन्नः,महाँश्चौरः | रुत्वम् |

**सिद्धान्तकौमुद्याम् -**

| सूत्रम् | उदाहरणम् | कार्यम् |
|---|---|---|
| १- स्तोःश्चुनाः श्चुः | (हरिश्शेते, रामश्चिनोति) | श्चुत्वम् |
| २- ष्टुना ष्टुः | (रामष्षठः, रामष्टीकते) | ष्टुत्वम् |
| ३- झलां जशोऽन्ते | (वागीशः, चिद्रूपम्) | जश्त्वम् |
| ४- यरोऽनुनासिके० | (एतन्मुरारिः, एतद्मुरारिः) | अनुनासिकः |
| ५- शश्छोऽटि | (तच्छिवः) | छत्वम् |
| ६- खरिच | (तच्छिवः) | चर्त्वम् |
| ७- मोऽनुस्वारः | (हरिं वन्दे) | अनुस्वारः |
| ८- अनुस्वारस्ययथि० | (आंङ्कितः, कुण्ठितः) | परसवर्णः |
| ९- डःसिधुट् | (षटत्सन्तः, षट्सन्तः) | धुट् |
| १०- शि तुक् | (सत्छम्भुः) | तुक् |
| ११- ङमोह्रस्वा० | (प्रत्यङ्ङात्मा, सुगण्णीशः) | ङमुट् |
| १२- नश्छव्यप्रशान् | (शार्ङ्गिश्छिन्धिः) | रुत्वम् |

एवममुक्तविवरणेनेदं सुस्पष्टं भवति यत् रूपमालायां विषयप्रतिपादनपद्धतिः प्रक्रियाकौमुद्याद्यपेक्षया सर्वथा भिन्नैव वर्तते। ग्रन्थविस्तारभियाऽत्रोदः स्थास्तम्भोः पूर्वस्य,

(८/४/६१) झयो होऽन्यतरस्याम्,८/४/६२ इत्यादीनि पूर्वसवर्णविधायकानि 'पुमः खय्यम्परे' (८/४/६१) इत्यादिरुत्वविधायकानि सूत्राणि परित्यक्तानि। "ङणोः कुक्टुक् शरि (८/३/२८) इति सूत्रव्याख्यानावसरे ग्रन्थकृता "प्रत्यङ्ख्शेते, प्रत्यङ्क् शेते, प्रत्यङ्शेते, सुगणठ सीदति, सुगणट् सीदति, सुगण् सीदति" इत्युदाहरणानि प्रदर्शितानि परं "चयोद्वितीया शंरि पौष्करसा-देरिति वाच्यम्" इति द्वितीयाक्षरविधायकस्य वार्तिकस्योल्लेखो न कृतः। अतोऽत्र ग्रन्थकारस्य प्रमादः परिलक्ष्यते।

प्रक्रियासर्वस्वकारेण संहिताखण्डे पूर्वं तुकसन्धिरुक्तः। ततः "सुट्कात्पूर्वः" (६/१/१३५) इत्यस्याधिकारत्वे सुट्सन्धिः प्रदर्शितः। सन्धिरयमन्येषु प्रक्रियाग्रन्थेषु कुत्रापि नैव व्याख्यातं वर्तते। अतः[1] सुट्सन्धीति विभागोऽत्र नूतनः।

## विसर्ग सन्धिः -

विसर्गसन्धौ पूर्वरयोर्व्यञ्जनविसर्गवर्णयोः सतोः विसर्गस्थनिका-देशरूपः सन्धि-र्भवति। यथा "कः + छत्रः इत्यादौ "विसर्जनीयस्य सः" ८/३/३४ इत्यनेन विसर्गस्य सत्वे श्चुत्वे च कृते कश्छन्नः" इति सिद्धयति। रूपमालाकारेणात्र "शर्परे विसर्जनीयः, वा शरि, कुप्वोकपौच" इत्यादिसूत्राणि अष्टाध्यायीक्रमेण व्याख्यातानि। प्रक्रियासर्वस्वेऽ-प्ययमेव क्रमः। परं सिद्धान्तकौमुद्यादिषु "कुप्वोकपौ च" (८/३/३७) इति सूत्रं हल्सन्धौ पठितम्।

स्वादिविभक्त्यन्तर्गतसकारस्थानिकस्वादिसन्धिरस्मिन्नेव प्रकरणे रूपमालायामुप-पादितः। स्वादिसन्धेः तथा विवेचनमत्र नैव प्राप्यते यथाऽन्येषु। अत्र हि 'हशि च',(८/३/३७) इति सूत्रं हलसन्धौ पठितम्।

स्वादिविभक्त्यन्तर्गतसकारस्थानिकस्वादिसन्धिरस्मिन्नेव प्रकारणे रूपमालायामु-पपादितः। स्वादिसन्धेः तथा विवेचनमत्र नैव प्राप्यते यथाऽन्येषु प्रक्रियाग्रन्थेषु। अत्र हि 'हशि च' (६/१/११४) एतत्तदोसुलोपोऽकोरनञ् समासेहलि (६/१/१३२) सोऽचि लोपे चेत्पादपू-रणम् (६/१/१३४) इत्यादि सूत्राणि सोदोहरणं व्याख्यातानि। रुत्वप्रकरणमवधार्य रेफादेश-स्यापवादभूतमपि "रोऽसुपि" इति सूत्रमप्युक्तम्। रूपावतारे स्वादिसन्धौ सूत्रमिदं नैवव्याख्यातम्। परं प्रक्रियाकौमुद्यां, सिद्धान्तकौमुद्यां प्रक्रियासर्वस्वे चेदं स्वादिसन्धावेव पठितमति।

## अजन्तादि माला -

रूपमालायाम् "सुप्तङन्तं पदमिति" सूत्रे प्राथम्येन सुप्प्रत्ययानामुपात्तत्वेन तस्य प्रथमादिसप्तभेदानुपवर्ण्य एताः सप्तविभक्त्यः प्रातिपदिकात्परे भवन्तीति समुल्लिख्य प्राति-पादिकस्याजन्तहलन्तत्वेन भेदद्वयं वर्णितम्। प्रत्येकं पुल्लिङ्गस्त्रीलिङगनपुंसकलङ्गिति त्रैवि-ध्यमुक्तम्।

वर्णसमाम्नायक्रमेण पूर्वमजन्तमाला निरूपिता। अत्र हि विशेषणशब्दानां भेदान्प्र-दर्श्य शुक्लादिशब्दानां क्रमशः त्रिषु लिङ्गेषु रूपाणि प्रदर्शितानि। "शुक्लः शुक्लौ, शुक्लाः" इत्यादिरूपाणां निष्पत्येऽत्र रूपमालाकारेण" अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१/२/४५)

---

१. द्र० प्र सर्व० भाग - १ पृ० ३६-४२

स्वौजस्मौट्० (४/१/२) न विभक्तौ तुस्माः (१/३/४) सुसजुषो रुः (१/४/१४) इति सूत्राणां व्याख्यानं कृतम्। एवं चात्रोक्तरूपाणां संसिद्धयेऽपेक्षितानि। सुपः (३/४/१०३) द्वयेकयोर्द्विवचनैकवचने (१/४/२२) बहुषु बहुवचनम् (१/४/२१) "सरूपाणामेकशेष एकविभक्तौ" इत्यादिसूत्राणि परित्यक्तानि। सिद्धान्तकौमुद्यादिषु समेषामेषां सूत्राणां समावेशः ग्रन्थकृद्भिः कृतः।

अजन्तमालायां प्रायेणानियतलिङ्गाः विशेषणशब्दाः संज्ञाशब्दाश्च त्रिषु लिङ्गेषु अकारान्ता इकारान्तादयश्च क्रमेणोदाहृताः। अत्राधिकृते वर्णसमाम्नाये सामान्यविशेषक्रमोऽपि दृश्यत एव। तत्रादौ शुक्लशब्दस्य सर्वेषां रूपाणामन्वाख्यानेनेदं विज्ञायते यदन्येषामप्यजन्तपुलिंङ्गशब्दानामाकारान्तस्त्रीलिङ्गशब्दानाम्, अकारान्तनपुंसकलिंगशब्दानांच रूपाणीत्थमेव ज्ञेयम्। एवंविधमन्वाख्यानमन्येषु प्रक्रियाग्रन्थेषु नैव दृश्यते। रूपावतारे प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यादिषु सर्वत्र लिङ्गानां त्रैविध्ये अजन्तहलन्तशब्दयोस्तदाधारेण षड्विधत्वमेव दृश्यते। तत्र रूपावतारे प्रक्रियाकौमुद्यादिग्रन्थेषु अजन्तपुल्लिङ्गे क्रमशः वृक्षशब्दः रामशब्दश्चोदाहृतः। प्रक्रियाकौमुद्यादिषु अजन्तस्त्रीलिङ्गे रमाशब्दः, नपुंसकलिङ्गे ज्ञानशब्दश्चाकारान्तः प्रदर्शितः। प्रक्रियाकौमुद्यादौ अजन्तपुल्लिङ्गाजन्तस्त्रीलिङ्गाजन्तनपुंसकलिङ्गेतिभेदत्रयमजन्तशब्दप्रयुक्तमेव, हलन्तपुल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गेति भेदत्रयं हलन्तप्रातिपदिकप्रयुक्तमिति सङ्कलनेन षड्लिङ्गप्रकरणानि दृश्यन्ते। रूपावतारे तु षड्लिङ्गेभ्यः पृथक् हलन्तेष्वलिङ्गप्रकरणकं नामैकं प्रकरणमपि वर्तते। एवं हलन्तप्रातिपदिकानि द्विधाविभक्तानि प्रथमतस्तेन लिङ्गविशिष्टानि हलन्तप्रातिपदिकानि आलिङ्गानि च। तत्र प्रथमस्य षड्भेदास्सन्ति, द्वितीयन्तु एकधैव।

अजन्तमालायामेव रूपमालाकारेण "शुक्लानामि" त्यत्र "सुपि चे" त्यनेन सूत्रेण दीर्घो विहितः, तदसाधुरेव "नामि" इति पृथक्सूत्रसत्वात्। यथा शुचीनामित्यत्र रूपमालायां "नामी" त्यनेन दीर्थः कृतः, तथैवात्रापि नामीत्यननैव दीर्घो भविष्यति। अत एव "रामाणाम्" इति प्रयोगसाधुत्वावसरे सिद्धान्तकौमुद्यां दीक्षितमहाभागेनोक्तम्- "सुपि चे"ति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते, सन्निपातपरिभाषाविरोधात्। "नामि" इत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते।"[१]

## हलन्तमाला-

हलन्तमालायाम् वर्णसमाम्नायक्रमेण मधुलिहित्यादयः व्यञ्जनान्तशब्दाः त्रिषु लिङ्गेषु व्युत्पादिताः। अत्र केवलं संज्ञाशब्दानामेव रूपाणि प्रदर्शितानि। प्रयोग साधुत्वार्थमपेक्षितानि "एत्येधत्यूठ्सु, ङणोः कुक्टुक् शरि, ष्टुना ष्टुः" इत्यादिसन्धिविधायकसूत्राणि, वनो रच, पादोऽन्यतरस्याम्, टाबृचि, "इत्यादिस्त्रीप्रत्ययसूत्राण्यप्यत्रैव पठितानि। परं प्रक्रियाकौमुद्यादौ वर्णसमाम्नायक्रमेण हलन्तशब्दाः लिङ्गभेदेन पृथक् पृथक् प्रकरणेषु व्युत्पादिताः। अत एव तत्र लिह्-उपानह्-अनुडुहित्यादयो हकारान्ता अपि शब्दाः लिङ्गभेदेन भिन्नस्थलेषु पठिताः सन्ति। एवं हलन्त-पुल्लिङ्गप्रकरण एव दकारान्तां शब्दानां व्युत्पादनोपक्रमे युष्मदस्मदी निष्पादिते। रूपावतारे तु युष्मदस्मद्शब्दावलिङ्गत्वान्नात्र निरूपितावित्युक्तम्। तत्र ह्येतदर्थं प्रकरणं कल्पितम्।

१. सि० कौ० सू० २०९

## सर्वनाममाला -

रूपमालाकरेण "सर्वादीनि सर्वनामनि" इतिसूत्रेण सर्वादीनां सर्वनामसंज्ञां विधाय सर्वनाममालाख्यप्रकरणे सर्वादयः शब्दाः त्रिषुलिङ्गेषु व्युत्पादिताः। अत्र सर्व-नेम-पूर्व-त्वत्य-दिकमिदम्-इत्यादि सर्वनामशब्दाः त्रिषु लिङ्गे व्युत्पाद्य, अलिङ्गयोः युष्मदस्मदोरपि व्युत्पादनं कृतम्, तयोरपि सर्वनामत्वात्। प्रक्रियाकौमुद्यादौ युष्मदस्मद्शब्दौ हलन्तपुल्लिङ्ग एव पठिता-विति पूर्वमेवोक्तम्।

रूपावतारे तु- हलन्तेष्वलिङ्गप्रकरणे युष्मदस्मदोः रूपावतारः प्रदर्शितः। वस्तुतस्तु युष्मदस्मच्छब्दावलिङ्गौ। तयोः पुल्लिङ्गे स्त्रीलिङ्गे नपुसकालिङ्गे वा निरूपणं न समीचीनम्। अतस्तयोर्निरूपणं यत्र कर्तव्यम् तत्प्रकरणं पुल्लिङ्गादिपदविरहितेनालिङ्गशब्दसम्पृक्तेन नाम्ना भवितव्यम्। महाभाष्ये भगवता पतञ्जलिनापि "त्वं ब्राह्मणी" इति समाधानं प्रयच्छता तयोः लिङ्गराहित्यं स्वीकृतमेव। न च "शिशीलुङ्नुम्विधभ्यो युष्मदस्मदोर्विभक्त्यादेशः पूर्वविप्रति-षेधेन" इति वार्तिकेन तत्र लिङ्गत्वं प्रतीयत इति वाच्यम्, एतेन पुंस्त्वस्य नपुंसकत्वस्य च प्रतीतावपि पुंल्लिङ्गे पाठस्यानुपयुक्तत्वात्। न च युष्मदस्मदोः निरूपणाय अलिङ्गप्रकरणमु-पयुक्तमेव। सारस्वतव्याकरणेऽपि युष्मदस्मद्प्रक्रिया पृथक-प्रकरणरूपेणोपन्यस्ता। युष्मद-स्मदोः सर्वनामत्वात् सर्वनाममालायामपि तायोर्पाठोऽप्युचितमेव।

## संख्यामाला -

रूपमालायां संख्यावाचकशब्दानां व्युत्पादनार्थं संख्यामालाख्यं पृथक् प्रकरणमु-पन्यस्तम्। अत्र त्रि-चतुर-पञ्चन्-षट्-अष्टन्-शब्दानां क्रमेण रूपनिष्पादनं वर्तते। अन्ते च कतिशब्दस्य रूपाणि प्रदर्शितानि। परं प्रक्रियाकौमुद्यादौ संख्याशब्दानां रूपनिष्पादनार्थं पृथक् प्रकरणं नास्ति। तत्र तु-अजन्त-पुल्लिङ्गे कतिशब्दस्य त्रिशब्दस्य च अजन्तस्त्रीलिङ्गे नपुंस-कलिङ्गे च त्रिशब्दस्य, हलन्तपुल्लिङ्गस्त्रीलिङ्गनपुसकलिङ्गेषु चतुरपञ्चन्षट्-अष्टन् शब्दानां रूपाणि संसाधितानि।

## नियतलिङ्गमाला -

व्याकरणशास्त्रे प्रविविक्षूणां बालानां सुखबोधाय संख्यामालामभिधाय नियत-लिङ्गानां शब्दानां रूपाणां साधुत्वार्थं नियतलिङ्गमाला संग्रथिता। मालेयं त्रिषु भागेषु विभक्ता दृश्यते-पुलिङ्गाः, स्त्रीलिङ्गाः नपुंसकलिङ्गाश्च। अत्र हि पूर्वं सखि-पति-क्रोष्टु वर्षाभू-नृ-इत्या-दिशब्दानां रूपाणि संसाधितानि। अन्येषु प्रक्रियाग्रन्थेषु रूपाणीमानि अजन्तपुल्लिङ्गप्रकरणे प्रदर्शितानि। ततः अनडुह-तुरासाह्-अर्वन्-मघवन्-श्वन्-पथिन्-ऋभुक्षिन्नित्यादयः हलन्त-पुल्लिङ्गशब्दाः प्रदर्शिताः। प्रक्रियाकौमुद्यादाविमेशब्दाः हलन्तपुल्लिङ्गे व्युत्पादिताः।

एवं स्त्रीलिङ्गेष्वपि जरा-बुद्धि-श्री-स्त्री-लक्ष्मी-तरी-तन्त्री-भूस्वसृ इत्याद्यजन्तश-ब्दानां, सीमन्-अप्-आशिष्प्रभृतीनां हलन्तशब्दानां रूपाणि संसाधितानि। एवं नपुंस-कलिङ्गेऽपि वारिमधु-अस्थि-अहन्-हविष् धनुष् प्रभृतीनामजन्तहलन्तानां शब्दानां रूपाणि प्रदर्शितानि। नियतलिङ्गशब्दानामेवंविधरूपनिष्पादनं प्रक्रियाकौमुद्यादौ न दृश्यते। तत्र हि षड्लिङ्गप्रकरणेषु एव पूर्वोक्तशब्दानां समावेशः।

## छान्दसमाला -

छान्दसमालायां "देवासः" इत्यादि सुबन्तपद सिद्धयर्थं "आज्जसेरसुक् (७/१/३९) इति सूत्रं व्याख्याय" सुपां सुलक् पूर्वसवर्णाच्छेयाडाड्याजालः (७/१/३९) इति सूत्रं व्याख्यातम्। एतदतिरिक्तं रूपमालायां अन्येष्वपि प्रकरणेषु वैदिकप्रयोगाणां संसिद्धिर्दृश्यते। प्रक्रियाकौमुद्यान्तु ग्रन्थान्ते "वैदिकीप्रक्रिया" उपनिबद्धा। तत्र "प्रकृत्यान्तः पादमव्यपरे" इत्यारभ्य लितीत्यन्तं चतुश्चत्वारिशंत् सूत्राणि व्याख्यातानि। भट्टोजिदीक्षितेन तु वैदिकप्रयोगनिष्पत्तये स्वरपरिज्ञानाय च वैदिकीप्रक्रिया, स्वरप्रक्रिया च पृथक्तया उपन्यस्ते।

## अव्ययमाला -

अव्ययमालायां कानिचिदव्ययानि स्वरूपतो निपातितानि, कानिचिल्लक्षणलब्धानि। तत्र पूर्वं स्वरूपतो निपतितानामव्ययानामन्वाख्यानाय निपातसंज्ञाधिकारे "चादयोऽसत्वे, प्रादयः" इतिसूत्रद्वयं व्याख्याय स्वरादिनिपातमव्ययम् (१/१/३७) कृन्मेजन्तः (१/१/३९) क्त्वातोसुन्कसुनः (१/१/४०) तद्धितश्चासर्वविभक्तिः (१/१/३८) इत्यव्ययसंज्ञाविधायकानि सूत्राणि व्याख्यातानि। ततः तद्धितकृदन्ताव्ययीभावभेदेन त्रिविधानांलक्षणलब्धानामव्ययपदानां साधुत्वं प्रदर्शितम्। अन्ते च अव्ययादाप्सुपः" इतिसूत्रं व्याख्यातम्। विमलसरस्वतीभिरत्र अव्ययलक्षणस्य स्पष्टरूपेण प्रतिपादनं न कृतम्। प्रक्रियाकौमुद्यां तु रामचन्द्राचार्येण भाष्योक्तमव्ययलक्षणमत्रोद्धृतम्। तद्यथा -

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥**[1]

किन्तु धर्मकीर्तिना रूपावतारे - "अलिङ्गान्यसंख्यान्यविभक्ति-भेदान्यव्ययानि सुबन्तानीनि लक्षणं कृतम्। सिद्धान्तकौमुद्यामपि अव्ययप्रकरणान्ते भाष्योक्तमव्ययलक्षणमुक्त्वा "अव्ययादाप्सुपः" इतिसूत्रं रूपमालावद् व्याख्यातम्। प्रक्रियाकौमुद्यान्तु "उपसर्गविभक्तिस्वरप्रतिरूपकाश्च" इति गणसूत्रमुक्त्वा विभक्ति-प्रतिरूपकाः स्वरप्रतिरूपकाश्च निपाताः प्रदर्शिताः। परमुपसर्गपतिरूपका निपाता अत्रानुक्ता एव। धर्मकीर्तिना रूपावतार एतेऽप्युदाहृताः। यथा -

**"अवदत्तं विदत्तं च प्रदत्तं च चादिकर्मणि।**
**सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥"**[2]

रूपावतारेऽ व्ययेषु केचिच्छब्दा सिद्धान्तकौमुद्याः अव्ययमध्ये मध्येऽपठिताः, समुपलभ्यन्ते। तद्यथा तक, हाहा हाहौ हैहा, ईहा इत्यादयः। एपु आधुनिकभाषासु बहवः यथावदविकलमुपलभ्यन्ते। "तक" इत्यस्य पर्यन्तार्थे सर्वत्राधुनिकभाषासु व्यवहारो दृश्यते। एवं हाहाप्रभृतयः हर्षोद्गाररूपेण प्रयुज्यन्ते। ईहाशब्दोऽपि दशरूपकेषु अन्यतमपर्यायत्वेन प्रयुक्तः। एवं रूपावतारेऽस्य प्रकरणस्य विशिष्टं महत्वं वर्तते।

---

१. प्र०कौ० भाग - १

२. रूपावतारः (पूर्वार्द्धः) पृ० - १३०

**स्त्रीप्रत्ययमाला -**

स्त्रीप्रत्ययमालायां "स्त्रियाः" (४/१/३) इत्यस्याधिकारे टाप् चाप् डाप्-ङीन्" इति-स्त्रीत्वबोधकाः प्रत्ययाः तद्विधायकसूत्राणि च परित्यक्तानि; परं प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यां प्रक्रियासर्वस्वे चेमानि सर्वाण्यपि सूत्राणि विवृतानि। अत्र स्त्रीप्रत्यये कृते सति तथाविधानां प्रयोगाणां साधुत्वार्थं सत्यामपेक्षयामन्येषामपि सूत्राणां संग्रहस्य परम्परा दृश्यत एव। रूपमालाकारेणात्र "अजाद्यतष्टाप्" इति सूत्रव्याख्यावसरे भागुरेराचार्यस्य मतमुद्धृतम्। यथा - "हलन्तादपि वागादेष्टापमिच्छति भागुरिः।" सिद्धान्तकौमुद्यामपि दीक्षितमहाभागेनाव्यय प्रकरणान्ते एवमुक्तम्-

**वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः।**
**आपं चैव हलन्तानां यथा वाचा निशा दिशा॥**

रूपमालायां "इन्द्रवरुणभवशर्व०" इतिसूत्रव्याख्यायां "हिमारण्ययोमर्हत्वे, यवाद्दोषः,यवनाल्लिप्याम्" इति त्रीणि वार्तिकान्यनुक्त्वा निजनिर्मितं "संघे महत्वे दोषे च लिपौ चार्थे हिमादिकात्" इत्येकमेव वार्तिकं विलिख्य हिमानी, अरण्यानी, यवानीत्यादीनां प्रयोगाणां सिद्धिः प्रदर्शिता। एवमन्यान्यपि वार्तिकानि विमलसरस्वतीभिः स्वकीयगिरा परिवर्त्य पठितानिएवंविधानि कतिपयवार्तिकान्यत्र प्रस्तूयन्ते -

| | **(रूपमालायाम्)** | **(सिद्धान्तकोमुद्याम्)** |
|---|---|---|
| १- | ननस्नञीकक्तरुणतलुनानामुप संख्यानम् | नञ्स्नञीकक्ख्युस्तरूणतलुनानामुपसंख्यानम् |
| २- | मातुलस्य वेति | मातुलोपाध्याययोरानुग्वा उपाध्यायस्यानुग्वेति |
| ३- | आचार्यादानुको णत्वनिषेधो वक्तव्यः | आचार्यादणत्वं च |
| ४- | उपाध्यायात्ङीषो विकल्पोक्तिः | या तु स्वमेवाध्यापिका तत्र वा ङीप् वाच्यः। |

एवञ्चात्र स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् (४/१/५४) इति सूत्रे स्वाङ्गलक्षणमुक्तम्। यथा "अप्राणिस्थममूर्तञ्च द्रवं रोगञ्च वर्जयेत्।" अत्र हि भाष्ये निरुक्तं पारिभाषिकं स्वाङ्गं शब्दान्तरैः संयोज्य पठितम्। यथा चोक्तं महाभाष्ये "अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्। अतस्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम्॥"

सिद्धान्तकौमुद्यान्तु-प्रथमार्धं प्रथमं स्वाङ्गलक्षणमित्यभिप्रेत्य विच्छद्य "अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।"[1] इत्येव पठितम्। क्वचित् सूत्रमनुक्त्वा कार्यमेवोक्तं रूपमालाकृता - यथा-चण्डकल्याणपुराणादौ च डीषो विकल्पोक्तिः चण्डी, चण्डा। अत्र "वह्वादिभ्यश्च" इति सूत्रं नैव व्याख्यातम्। एवमेव कतिपयकारिकासु स्त्रीप्रत्ययान्तप्रयोगाणां साधुत्वमुपदर्शितं रूपमालाकारेण यथा - "पिशङ्गी शवली काली कल्माषी नित्यमिष्यते।

---

१. सि० कौ० सूत्र ५१०

शोणी शोणेति वा नीली चौषधिर्प्राणिनोर्मता ॥" इत्यादि । कारिकायामस्याम् - "पिशङ्गत्वव-र्णविशिष्टा स्त्री, पिशङ्गी" इत्यत्र "पिशङ्गादुपसंख्यानम्" इति वार्तिककारोक्त्या नित्यं ङीब् भवतीति रूपमालाकाराशयः । परं दीक्षितमहाभागैस्तु विभाषयाऽत्र ङीबिति स्वीकृतम् । यतो हि-वार्तिकमिदं "वर्णानुदात्तातोपधात्तो नः" (४/१/३९) इति सूत्रे पठितम् । अत एव सूत्रे अनुवृत्ते "वा ङीप्" इतिपदेऽत्राप्यनुवर्तेते । परं रूपमालाकाराः केवलं ङीप्पदस्यैवानुवर्तनं स्वीकुर्वन्ति । अत एवोक्तकारिकायां "नित्यं ङीप् इष्यते" इत्युक्तम् ।

## कारकमाला -

कारके (१/४/२३) इत्यधिकारस्थसूत्राणां विवेचनमत्र रूपमालाकारेण कृतम् । भाष्यकृता "करोतीति कारकमि[1]त्युक्त्वा कारकपदार्थः स्पष्टीकृतः ।

अस्याशयः कैयटेन प्रदीपे एवं वर्णितः - "विषयत्वेन चायमधिकारः क्रियायां विषये यद् ध्रुवमित्यादि वस्तु सम्पद्यते ।" इति । कारकपदेन क्रियासिद्ध्यर्थः कथं गृह्यंत इति तत्रैव कैयटेनोक्तम् - "यथा करोतीति कारकमिति साध्यत्वेन क्रियैव शब्दात् प्रतीयत इति क्रियायाः निर्वर्तकस्य कारकसंज्ञाऽपादानसंज्ञा च प्रवर्तते ।

क्रियानिमित्तं कारकमिति भोजदेवेन[2] निगदितम् । "क्रियानिष्पादकत्वं कारक-त्वम्[3], इति नागेशेन कारकार्थनिरूपणे मञ्जूषायामुक्तम् । जीवगोस्वामिना हरिनामामृतव्या-करणे सुस्पष्टतयाऽभिहितम् - क्रियासम्बन्धविशेषिकारकम्"[4] इति । न्याय भाष्यकारस्य वात्स्यायनस्य विचारोऽत्र स्पष्टतरः प्रतीयते । यथा - "एवं च सति न द्रव्यमात्रं कारकम्, न क्रियामात्रम्, किं तर्हि क्रियासाधनम्, क्रियाविशेषयुक्तं कारकम् । यत्क्रियासाधनं स्वतन्त्रं स कर्ता, न द्रव्यमात्रम्, न क्रियामात्रम् । क्रियया व्याप्तुमिष्यमाणतमं कर्म, न द्रव्यमात्रम् क्रियामा-त्रम् । एवं साधकतमादिष्वपि ।[5] एवंरीत्या चात्र रूपमालायां प्राति पदिकार्थे, कर्मणि कर्तरि करणे सम्प्रदाने ऽपादानेऽधिकरणे वा यस्मिन्नर्थे प्रथमाद्वितीयातृतीयेत्यादयः विभक्तयो भव-न्तीति तएवात्र क्रमेण प्रदर्शिताः । रूपावतारे प्रक्रियाकौमुद्यां च कारकाणां व्याख्यानस्यैषा रीतिरवलोक्यते तत्रेदं प्रकरणं कारकावतारः, विभक्त्यर्थाः" इति च नाम्ना प्रसिद्धम् । अत्र विभक्तिविधानमेव प्रमुखमुद्देश्यम्, कर्मादिकारकसंज्ञानान्तु तत्साधनत्वेनैवोपन्यासः ।

कारकमालायां कतिपयकारिकासु नियमस्योदाहरणानाञ्च समावेशः कृतः । यत्र स्मरणसौकर्यं काव्यानन्दश्च वर्तते । यथा -

**"कृषादिषु प्रधाने स्युरप्रधाने दुहादिषु ।**
**ण्यन्तेष्वण्यन्तकर्त्राख्ये कर्मण्यर्थे तङादयः ॥**

---

१. व्या० म० भा० ( १-४-२३ )

२. भोज-स० क० १/१/३२

३. प० ल० म०, पृ० १८१

४. हरि ना० व्या०, ४/१०

५. द्र० न्याय भाष्य २/१/१६

**पन्थानं पृच्छ्यते पान्थः पुष्पाण्युच्चीयते तरुः ।**
**ग्राममाकृष्यते शाखा पाठ्यन्ते वटवः स्मृतिम् ।"[१]**

एतादृशं व्याख्यानं सिद्धान्तकौमुद्यादिषु नोपलभ्यते। कारकमालायां "आधारोऽधिकरणम्" (१/४/४५) इति सूत्रं व्याख्याय "चर्मणि द्वीपिनं हन्ति सीम्नि पुष्कलको हतः।" इत्यत्र "निमित्तात्कर्मयोगे सप्तमी" इति वार्तिककारवचनेन सप्तम्याः साधुत्वं विहितम्। अत्रैव पुष्कलको नाम कश्चित्पुरूषः" इति रूपमालाकरेणोक्तम्। परं सिद्धान्तकौमुद्यां दीक्षित महाभागेन "पुष्कलको गन्धमृगः" इत्युक्तम् अत्र "पुष्कलको गन्धमृगे क्षेपणकीलयोः" इति मेदिनीकारः। सीमा चात्र ग्रामादिमर्यादा तस्याः ज्ञानार्थं पुष्कलकः शङ्कुर्हतः निखात इति हरदत्तस्य मतं तत्वबोधिनीकारेणोद्धतम्। यथा "हरदत्तस्तु पुष्कलकः शङ्कुः सीम्नि सीमज्ञानार्थं हतो निहतः निखात इत्याह।"[२] एवं पुरुषविशेषार्थकस्य पुष्कलकपदस्य सर्वत्रानुपलब्धत्वात् रूपमालाकृतः भ्रान्तिरेवात्र प्रतीयत इति।

## तिङन्तमाला

"सिद्धे शब्दार्थसम्बन्धे" इति वार्तिककृतार्थे प्रयुक्तानां शब्दानामिदमनुशासनमित्युक्तम्। प्रयोगश्च पदस्यैव। अपदं न प्रयुञ्जीत "इति भाष्य निषेधात्। पदञ्च द्विविधम् सुप्तिङन्तं पदमिति वचनात्। तत्र सूत्रक्रमानुरोधेन सुबन्तानां विवेचनानन्तरं रूपमालाकृता तिङन्तमाला व्यवस्थापिता। द्विविधा हि तिङन्ता दृश्यन्ते-शुद्धाः सप्रत्ययाश्च। शुद्धास्तावद्-भवति, श्रयति इत्यादिषु। सप्रत्ययास्तु सन् णिच् यङादिप्रत्यययुक्तेभ्यो धातुभ्य विहितास्तिङः तद्यथा- चिकित्सति, भावयति, पापच्यत इत्यादयः। तिङान्तमालायां प्राथम्येन शुद्धा एव तिङन्ता उपन्यस्ताः। धातोः(३/१/९१)इत्यधिकारात् तिङप्रत्ययः धातुभ्यो भवन्तीति पूर्वं "भूवादयो धातवः" (१/३/१) इति सूत्रं व्याख्यातम्। ततः कर्तृवाच्ये सकर्मभ्योऽकर्मकेभ्यश्च तिङप्रत्ययाः विधीयन्ते, कर्मवाच्ये तु तेभ्य एव धातुभ्यः प्रत्ययाः क्रियन्ते ये सकर्मकाः सन्ति। भाववाच्ये केवलेभ्य अकर्मकेभ्यो धातुभ्यः तिङ्प्रत्ययाः भवन्ति।" इति "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति सूत्रवृत्तौ निगदितम्। परं धातूनां सकर्मकाकर्मकत्वलक्षणमत्र ग्रन्थकृता न कृतम्। रूपावतारे तु - धातु-रूपावतरणात् प्राग् उपर्युक्तं ज्ञानं छात्रेभ्योऽवश्यं देयम्" इति विचारयातावतरणमर्मज्ञेन धर्मकीर्तिना धातूनां भेदद्वयं प्रथममुपन्यस्य सकर्मकाऽकर्मलक्षणमुल्लिखितम्। यथा - "तत्र सकर्मका धातवः कर्मापेक्षक्रियामाहुः। यथा कटं करोति, ग्रामं गच्छति, ओदनं पचति इत्येवमादयः। अकर्मका धातवः कर्मनिरपेक्षां क्रियामाहुः, यथा आस्ते, शेते, तिष्ठति, भवति इत्यादयः। यद्यपि लक्षणमिदमात्माश्रयदोषग्रस्तं तथापि बलानां बोधोपयोगीति"।[३]

रूपमालायां धातुरूपनिरूपणक्रमोऽतीव वैज्ञानिकः हृद्यः सरलश्च वर्तते। धातुरूपभेदस्य कारणत्वेन शप्लुग्श्लुश्यन्शश्नु-उ-श्नम्श्नास्वार्थण्ज्भेदात् दशविकरणः यथाक्रमं निरूपिताः। रूपावतारे तिङन्तानां निरूपणमभिनवपद्धत्या कृतं विलोक्यते। पद्धतिरियं लडादिप्रधानेति वक्तुं शक्यते। तत्र हि- दशविकरणेषु कृतेषु लट्लकारे यानि रूपाणि समुपलभ्यन्ते, तेषामेकस्मिन् प्रकरणे निरूपणं कृत्वा कस्मिन् विकरणे कीदृशं परिवर्तनं जायते,

---

१. रु० मा० भाग: २ पृ० - २७

२. सि० कौ० त० बो० सूत्र २/३/३६

३. रूपावतारः (उत्तरार्द्धः)

इत्यस्य तथाविवेचनं दृश्यते यथा छात्रैः साम्यवैषम्यपर्यालोचनं कृत्वा तानि बुद्धिपूर्वकं परिज्ञातुं पार्यते ।

परमत्र रूपमालायां लकाराणां विन्यासेऽपि सिद्धान्तकौमुद्यादितो भिन्नक्रमः। सिद्धान्तकौमुद्यां प्रक्रियाकौमुद्यां चाकाराद्यनुबन्धक्रममादाय टितां ततश्च ङितामभिधानम् । तथा-लट् लिट्, लुट्, लृट्, लोट्, लङ्, लिङ्लुङ् लृङ् ।[1] परं रूपावतारे रूपमालायाञ्च भिन्न-क्रमः । तथा हि पूर्वलट् ततो लङ्, लोट्, लिङ् ।तत आशीर्लिङ् लुट् लेडिति एवं ग्रन्थेद्वयेऽपि सार्वधातुकार्धधातुकभेदेन निषपन्नो यः क्रमः स एवापेक्षितो वर्तते । अत एवात्र पूर्व लट् लिङ् लोट लिङ्लकाराणां रूपाणि व्युत्पादितानि । एवमेषां चतुर्ण्णां लकाराणां विवेचनप्रसङ्ग एव भ्वाद्यदादयो दशगणाः प्रदर्शिताः । इमे भ्वाद्यदादयो गणाः विकरणभेदाद् भिद्यन्ते । ग्रन्थेऽस्मिन् व्युत्क्रमप्रणाल्या गणाः निर्दिष्टाः परं मध्येऽक्रमप्रणाल्यापिगणाः निर्दिष्टाः वर्तन्ते । गणानां क्रमः विभिन्नेषु प्रक्रियाग्रन्थेष्वित्थं वर्तते ।

**गणाः**

| **रूपमालायाम्** | **रूपावतारे** | **प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यादौ च** |
|---|---|---|
| १- भ्वादिः | भ्वादिः | भ्वादिः |
| २- अदादिः | अदादिः | अदादिः |
| ३- जुहोत्यादिः | जुहात्यादिः | ह्वादिः, जुहोत्यादिः |
| ४- दिवादिः | दिवादिः | दिवादिः |
| ५- तुदादिः | तुदादिः | तुदादिः |
| ६- स्वादिः | . स्वादिः | स्वादिः |
| ७- तनादिः | तनादिः | तनादिः |
| ८- रुधादिः | रुधादिः | रुधादिः |
| ९- क्र्यादिः | क्र्यादिः | क्र्यादिः |
| १० -चुरादिः | चुरादिः | चुरादिः |

परं सार्वधातुकमालायां विमलसरस्वतीभिः स एव गणानां क्रमोऽङ्गीकृतः, यः रूपा-वतारे प्रक्रियाकौमुद्यादौ च स्वीकृतो वर्तते ।

रूपावतोरऽपि धातुप्रत्ययपञ्चिकाख्यं प्रकरणं सामान्यतः परिच्छेदत्रये विभक्तम् । तत्र प्रथमं परिच्छेदः सार्वधातुकपरिच्छेदः, द्वितीयमार्धधातुकपरिच्छेदः, तृतीयश्च कृदन्तपरि-च्छेदः । तेषु सार्वधातुकपरिच्छेदे पञ्चप्रकरणानि सन्ति । १- लट् प्रकरणम् २- लङ्प्रकरणम्, ३- लोट्प्रकरणम् ४- लिङ्प्रकरणम् ५- यक् प्रकरणम्, । तत्र प्रथमं लटमधिकृत्य तत्तच्छबादि-विकरणे परस्मैपदे आत्मनेपदे च यानि रूपाणि भवन्ति तानि सर्वाणि प्रदर्शितानि । लङादिप्र-करणे च सर्वविकरणीयानि रूपाणि साधनपद्धतिमनुसृत्य समुल्लिखितानि ।

एवमेव रूपमालायां प्रथमं परस्मैपदिनः भूधातोः लट्, लङ् लोट् लिङ्लकारेषु रूपाणि संसाधितानि । तत उभयपदिन "श्रिञ् सेवायामि" त्यस्य धातोः, अन्येषामपि धातूनां रूपाणि दशसु गणेषु सार्वधातुकलकारेषु च यथाक्रमं व्युत्पादितानि । रूपावतारवदत्रापि

---

१. प्र० कौ० भाग - ३ पृ० २

सार्वधातुकलकाराणां विवेचनान्ते "भाव कर्मणोः" (१/३/९३) इति सूत्रं व्याख्याय "सार्वधातुके यक्" इत्यनेन यक् प्रकरणमभिहितम्। ततः कर्मकर्तृप्रक्रियाप्यत्रैव व्यवस्थापिता।[१] प्रक्रियाकौमुद्यान्तु भावकर्मप्रक्रिया पृथक्प्रकरणत्वेनोपन्यस्ता। तत्र हि - "सार्वधातुके यक्" इत्यनेन धातोर्यक् प्रत्ययो विधीयते भावकर्मवाचिनि सार्वधातुके परे। भावो धात्वर्थः। तस्यैकत्वात् तङाद्येकवचनं सर्वत्र। कर्तुस्तिङाऽनभिधानात् कर्तरि तृतीया मया भूयते। भूयेत इत्यादि। अस्मिन्नेव प्रकरणेऽत्र कर्मकर्तृप्रक्रियाया अपि निरूपणं वर्तते। उक्तं च -

**"क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति।**
**सुकरैः स्वगुणैर्यस्मात् कर्मकर्तेति तद्विदुः॥"**[२]

यथा भिद्यते काष्ठं स्वयमेव। अत्र कर्तुस्तङोक्तत्वात् प्रथमा। परं सिद्धान्तकौमुद्यां भावकर्मतिङ्कर्मकर्तृतिङप्रकरणञ्चद्वे प्रकरणे निरूपिते।

एवंरीत्याऽत्र सार्वधातुकलकारेषु धातुरूपनिरूपणानन्तरमाशीर्लिङ्, लुट् लृट् लृङ् लिट् लकारेषु धातुरूपाणि संसाधितानि। अत्रैवाशीर्लिङ् मालायावेवाचार्यैः विमलसरस्वतीभिः चतुर्दशकारिकासु अनिटधातूनां संग्रहः कृतः। स च मया रूपमालादिशा विषयस्य प्रस्तुतीकरणविमर्शेऽविकलेनोद्धृतः। प्रक्रिया कौमुद्यां सप्तकारिकासु अनिट्धातुसङ्ग्रहो विहितः। सिद्धान्तकौमुद्यान्तु पूर्वमुदात्तधातवः संग्रह्य पठिताः। तद्यथा -

**"ऊदृदन्तैर्यौति रुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः।**
**वृङ्वृञ्भ्याञ्च विनैकाचोऽजन्तेषु निहिताः स्मृताः॥"**[३]

एभ्य अजन्तेभ्यो धातुभ्योऽतिरिक्ताः धातव अनुदात्ताः सन्तीति भावः। ततः "हलन्तेषु द्व्यधिकं शतं धातव अनुदात्ता" इति तेषां दशकारिकासु परिगणनं कृतम्।

परं रूपावतारे "एकाच उपदेशऽनुदात्तात्" इति सूत्रे के पुनरूपदेशेऽनुदात्ताः ? इति प्रश्ने समुदिते त एव अनुदात्ताः विस्पष्टार्थमनिट्कारिकासु विभज्य प्रदर्शिताः। धर्मकीर्तेः कारिकासु काव्यमिव लालित्यं वर्तते। यथा -

**अनिट्स्वरान्तो भवतीति दृश्यताम्**
**इमास्तु सेटः प्रवदन्ति तद्विदः।**
**अदन्तमृदन्तमृताञ्च वृङ्वृञौ**
**श्विडीडिवणोष्वथ शीङ्श्रिञावपि॥ १॥**

तिङन्तमालायां सर्वतः पश्चात् पंचमलकारभागे वैदिकस्य लेट्लकारस्योपस्थिरित्येवं क्रमो लकाराणाम्। अत्र "लिङर्थे लेट् (३/४/७) इत्येकमेव सूत्रं व्याख्याय" बहुप्रकाराण्यस्य रूपाणि तानि तु भाषायामस्यानुपयोगादिह न प्रदर्श्यन्ते" इत्युक्तम्। प्रक्रियाकौमुद्यां तु केषांचिद वैदिकप्रयोगाणां सिद्ध्यर्थं "वैदिकी प्रक्रिया" इति पृथक् प्रकरणमुपनिबद्धम्। तत्रादावुक्तम् -[४] वैदिकशब्देष्वप्येषैव प्रक्रिया, य एव वैदिकास्त एव लौकिका इति न्यायात्।

---

१. द्र० प्र० कौ० भा० - ३ पृ० ४०८

२. द्र० तत्रैव पृ० ४२१

३. द्र०- सि० कौ० ( भ्वादिप्रकरणम्) सू० २२५८

४. प्र० कौ० तृतीय भागः पृ० ५९९ - ६१३

अत्रैव "लिङर्थे लेट्" इत्यारभ्य कतिपयसूत्रैः लेट्लकारस्य रूपाणि व्युत्पादितानि। सिद्धान्त कौमुद्यामपि -[१] वैदिकीप्रकरणे लेट्लकारो विवेचितः। एवं प्रक्रियासर्वस्वेऽपि छान्दसखण्ड एव लेट्लकारस्य रूपाणि साधितानि।

**सनादिभागः -**

तिङन्तमालायाः सनादिभागेऽस्मिन् ग्रन्थकृता सन्नन्ताः क्यजाद्यन्ताः, यङन्ताः, यङ्लुगन्ताः,ण्यन्ताः, यगन्ताश्च धातवः क्रमेण व्युत्पादिताः। अत्र रूपनिष्पत्तये अष्टाध्यायीक्रम एवाङ्गीकृतो वर्तते। तेषु सन्क्यच् काम्यच्-क्यङ्क्यष्-यङ्-लुक्-णिच्-स्वार्थक्यच्-यगादि प्रत्ययानां विवेचनं सूत्रोदाहरणपुरः सरमत्र दृश्यते। सुस्पष्टयेऽत्र प्रत्ययविधायकसूत्राणि क्रमश्च निर्दिश्यते -

**रूपमालायाम्**

| सूत्राणि | प्रत्ययाः | प्रयोगाः |
|---|---|---|
| १- गुप्तिज्किद्भ्यःसन् ३/१/५ | सन् | जुगुप्सते, तितिक्षते |
| २- धातोः कर्मणः समानकर्तृका दिच्छायां वा ३/१/७ | " | पिपठिषति, पिपक्षति |
| ३- सुप आत्मनः क्यच् ३/१/८ | क्यच् | पुत्रीयति |
| ४- काम्यच्च ३/१/९ | काम्यच् | पुत्रकाम्यति |
| ५- उपमानादाचारे ३/१/११ | क्यच् | पुत्रीयति शिष्यम् |
| ६- कर्तुःक्यङ्सलोपश्च ३/१/११ | क्यङ् | सूर्यायते चन्द्रमा विद्वायते वा मूर्खः |
| ७- भृशादिभ्यो० ३/१/१२ | " | उन्मनायते बधूः। |
| ८- लोहितादिडाज्भ्यः ३/१/१३ | क्यष् | लोहतायति लोहतायते |
| ९- कर्मणोः रोमन्थ० ३/१/१५ | क्यङ् | रोमन्थायते |
| १०- शब्दवैर० ३/१/१७ | " | शब्दायते |
| ११- धातोरेकाचोहलादे० ३/१/२२ | यङ् | बोभूयते, ऊर्णोनूयते |
| १२- यङोऽचि च २/४/७४ | यङ्लुक् | वर्ततीति, वरिवृतीति वरीवृतीति |
| १३- सत्यापपाश० ३/१/२५ | (णिच् स्वार्थे) | सात्यापयति, विपाशयति |
| १४- हेतुमति व ३/१/२६ | (प्रेरणायाम्) | भावयति,पाचयति |
| १५- नमोवरिवशचित्रङः ३/१/१९ क्यच् | क्यच् (स्वार्थे) | नमस्यति, चित्रीयते |
| १६- कण्ड्वादिभ्यो यक् ३/१/२७ | यक् | कण्डूयति, कण्डूयते, वा चित्रायते, महीयते। |

---

१. सि० कौ० ( वैदिकीप्रकरणम् ) सू० ३४२४

इत्यमेकस्मिन्नेव सनादिभागाख्यप्रकरणे उपर्युक्ताः सर्वे प्रत्ययाः रूपमालाकृता विवेचिताः।

प्रक्रियाकौमुद्यान्तु तिङन्तप्रकरणे पूर्वं ण्यन्ताः, सन्नन्ताः यङन्ताः यङ्लुगन्ताश्च धातवः पृथक् पृथक् प्रकरणेषु क्रमेण व्युत्पादिताः। तत्र "हेतुमति च" इति णिच्, धातोः कर्मणः इति सन् "धातोरेकाचो हलादे क्रिया समभिव्याहारे यङ् "इति यङ्प्रत्ययः "यङोऽचि" इति यङो लुक् च विहितः। पुनश्च आत्मसम्बन्धिन इषिकर्मणः सुबन्तादिच्छायां क्यङ्क्यजादि प्रत्ययान् विधाय तदन्तेभ्योऽपि तिङप्रत्यया भवन्तीति प्रतिपादितम्। तदर्थं सुब्धातुप्रक्रियेति नामधातुप्रक्रिया चेति प्रकरणद्वयमुपनिबद्धम्।

रूपावतारे धातुप्रत्ययपञ्चिकायाम् सन्नन्तपरिच्छेद प्रकरणम्, यङन्तप्रकरणम्, यङ्लुक्परिच्छेदप्रकरणम्, हेतुमण्णिच्-प्रकरणम्, प्रत्ययमालाप्रकरणम्, सुब्धातुप्रकरणञ्च क्रमेणोपन्यस्तानि। एवं सिद्धान्तकौमुद्यामपि णिच्-सन्-यङ् यङ्लुक् नामधातुकण्ड्वादिप्रत्ययमालादिप्रकरणानि यथाक्रमं प्रतिपादितानि।

प्रक्रियादृष्ट्या सूक्ष्मान्वेषणे कृते सति धातूनां पञ्च प्रकाराः दृष्टिपथमायान्ति। ते च यथा -

१- भूवादिधातवः (दशगणेषु पठिताः धातवः) यथा भवति इत्यादि

२- अनुमितपाठाः धातवः(तेधातवः य इदानीं तत्तद्गणेषु नोपलभ्यन्ते किन्तु सूत्रेषु पाणिनिप्रयोगात् येषां पाठः कदाप्यवश्यं स्युरित्यनुमीयते। यथा-जॄस्तम्भु० (३/१/५८) इति सूत्रप्रयोगादनुमित-स्तम्भुधातुः।

३- धातुजधातवः- (सनादिप्रत्ययान्ताः धातवः) यथा पिपठिषति, पाचयतीत्यादौ प्रकृतिभूतः।

४- नामधातवः (प्रातिपदिकाच्छब्दात्प्रत्यये कृते यत्र धातुत्वमङ्गीक्रियते) यथा कृष्णति, दधिस्यति, दधीयति।

५- सुब्धातवः (सुबन्तात्प्रत्यये कृते यत्र धातुत्वम्) यथा पुत्रीयति, मालीयति।

धर्मकीर्तिना रूपावतारस्योत्तरार्द्धभागे नामधातुप्रकरणस्य सुब्धातप्रकरणमिति प्रमाणसम्मतं नाम कृतम्। यतः "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इत्यनेन णिजादि प्रत्यये कृते यत्र नामानिधातवो भवन्ति तस्य प्रकरणस्य नामधातुप्रकरणमिति नाम युक्तं प्रतिभाति, किन्तु "सुपः आत्मनः क्यच्" इतिसूत्रेण क्यजादिप्रत्यये विहिते ये सुबन्ताः धातवो भवन्ति तेषा संघटनं यत्र क्रियते तस्य प्रकरणस्य सुब्धातुप्रकरणमित्येव नामकरणं युज्यते न तु नामधातुप्रकरणमिति। एवञ्च "सर्वप्रातिपदिकेभ्यः क्विब्बा वक्तव्यः" इति वार्तिकेन यत्र नाम्नः क्विब् विधीयते। तत्प्रकरणस्य नाम नामधात्वित्यस्ति चेदस्तु, परं सुबन्ताद् विधीयमानप्रत्ययाध्ययास्य नाम नामधातुप्रकरणमिति सिद्धान्तकौमुद्यादौ विहितमयुक्तं प्रतिभाति। तत्र हि प्रातिपदिकसुबन्तोभयोद्देश्यकविधानानां प्रत्ययानामध्यायः नामधातु-प्रकरणमिति नाम्ना विनिर्दिष्टः। सिद्धान्तकौमुद्यादौ सुब्धातुनामधात्वोः प्रकरणसाङ्कर्यं दृश्यते। पाणिनिना नाम-

धातु इति नाम क्वापि नोल्लिखितम् । वार्तिकारेण नामधात-सुब्धातुइतिद्वयमपि नाम गृहीतम् । यथा "यथेष्टं नामधातुषु, सुब्धातुष्टिवुष्वष्कादीनां सत्वप्रतिषेधो वक्तव्यः" इत्यादौ । नामधातु-सुब्धातुपार्थक्यविषये वार्तिकारस्य कात्यानस्य सुस्पष्टं मतं नोपलभ्यते । अत एव तेन सन्यङो-रिति सूत्रमुपक्रम्य कण्ड्वादेस्तृतीयस्येतिवाच्यम्, यथेष्टंनामधातुषु इति वार्तिकयोरुदाहरणेषु कण्डूयियिषति, पुपुत्रीयिषति पुतित्रीयिषति-पुत्रीयियिषति इति सुब्धातुनामधात्वोरुभयोरुदाह-रणानि प्रदर्शितानि ।

एवं वार्तिककारमाधारीकृत्येव तत्वबोधिनीकारेण "सुब्धातोरुदाहणानि-षड्दन्ता अस्य इति षोडन् तमाचष्टे णिचि टिलोपो षोडयति एव षण्ढं करोत्याचष्टे वा "षण्ढयति, षण्ढीयति" इत्यत्र षण्ढशब्दात् क्यचि ईत्वे षण्ढीयति इत्यत्र सर्वत्र "धात्वदेः षः सः" इति सत्वं नेत्युक्तम् ।[१]

यद्यपि सूत्रकृता नामधात्विति सुब्धात्विति वा नाम कण्ठरवेण कुत्रापि न गृहीतम् तथापि "प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्चे"ति गणसूत्रेण "सुपः आत्मनः क्यच्, इतिसूत्रेण च क्रमशः नाम्नः सुबन्ताच्च प्रत्ययविधानस्य महार्षिणा पाणिनिना विहितत्वात् सुस्पष्टं परिज्ञा-यते यत्पाणिनेः विभागद्वयमिदमपरिचितं नासीदति । अतः प्रक्रियाकौमुद्यां रामचन्द्राचार्यस्य सुब्धातुप्रक्रिया नामधातुप्रक्रियेति प्रकरणविभागः सर्वथोपयुक्तं प्रतीयते । प्रक्रियासर्वस्वे तु सुब्धातुखण्डः" इति पृथक् प्रकरणं विद्यते ।

**लकारार्थभागः -**

हेतुविशेषाद् भूते लट् उत वा भविष्यति लट् वर्तमाने लिट् अथवा परोक्षे लडित्या-दिलकारव्यत्यासोपबृहंणाय रूपमाला कृता लकारार्थभागो निरूपितः । यथा - 'वसन्तीह पुरा छात्राः' इत्यत्र अनद्यतनभूतेऽपि लट्वहितः । एवं भविष्यति कालेऽपि "यावत्पुरानिपातयोर्लट्" इत्यनेन लड् विधीयते । एवमन्यत्रापि यत्र भिन्नलकारो भवति तस्मिन्प्रकरणे संक्षिप्तरूपेण षोडशसूत्राणां व्याख्यानं प्रतिपादितम् । रूपावतारे एतत्सर्वं विषयजातं तिङ्विभक्त्यर्थप्रकरणे निरूपितम् । प्रक्रियाकौमुद्यां रामचन्द्राचार्येण लकारार्थप्रक्रिया निरूपिता । तत्राष्टाध्याय्याः तृतीयाध्यायस्य चतुःचत्वारिंशत्सूत्राणि उपन्यस्तानि । लकारार्थप्रकरणे सिद्धान्तकौमुद्यादौ यत्र "स्मरसि कृष्ण गोकुलेवत्स्यामः" इत्यत्र "अभिज्ञावचने लृट्" इत्यनेन अनद्यतनभूतेऽपि लृड् भवतीति दर्शितम् । तत्रैव रूपमालायां "अभिज्ञावचने लृडित्यस्योदाहरणप्रदर्शनाय माघ्रकवे-रयं श्लोक उद्धृतः -

**"स्मरस्यदो दाशरथिर्भवन्भवा ।**
**नमुं वनान्ताद् वनितापहारिणम् ।**
**पयोधिमाविद्धचलज्जलाविलं**
**विलङ्घ्य लकां निकषा हनिष्यति ।।**[२]"

---

१. द्र० तत्वबाधिनी सि० कौ० सू० २२८९ पृ० ८८

२. शिशुपालबधम् ( सर्ग - श्लोकः ६८ )

**परस्मैपदात्मनेपदभागः -**

परस्मैपदात्मनेपदविधायकविशेषशास्त्राणामत्र रूपमालाकारेण निरूपणं कृतम्। बहव परस्मैपदिनो धातवः कारणविशेषादात्मनेपदिनो भवन्ति। हेत्वन्तराच्च केचन आत्मनेपदिनोऽपि धातवः परस्मैपदिषु परिवर्तन्ते। इदमेव वैचित्र्यमत्र पाणिनिसूत्रदिशा भागेऽस्मिन् क्रमशः व्यवस्थापितम्। यथा जिधातुः परस्मैपदी परं "विपराभ्यां जेः" १/३/१९ इति सूत्रेणात्मनेपदं भवति तेन विजयते पराजयते इत्यादीनां सिद्धिः। तथा च सामान्येन क्रीडार्थकरमुधातुरात्मने पदं भवति परं व्याङ्पर्युपसर्गेभ्यः परस्मात् रम्धातोः "व्याङ्परिभ्यो रमः" इतिसूत्रेण पस्स्मैपदं भवति तेन विरमतीत्यादि सिध्यन्ति। अनेनैव क्रमेण तत्र भवता रामचन्द्राचार्येण प्रक्रियाकौमुद्यां पदव्यवस्थाप्रक्रिया व्यवस्थापिता।

सिद्धान्तकौमुद्यान्तु दीक्षितमहाभागेन प्रथमम् आत्मनेपद-प्रकरणम् ततश्च परस्मैपदप्रकरणं निरूपितम्। आत्मनेपदपरस्मै पदव्यवस्थापिकानि सूत्राणि प्रथमाध्यायस्य तृतीये पादे पठितानि तान्यनयोः प्रकरणयोः क्रमशः विस्तरेण व्याख्यातानि। रूपमालायामत्र "प्रकाशनस्थेयाख्ययोश्च" (१/३/२३) इतिसूत्रवृत्तौ" संशय्यकर्णादिषु तिष्ठते यः "आस्थः प्रतिज्ञाने" (वा०) इत्यत्र च "शब्दंनित्यमातिष्ठते" इत्याद्युदाहरणान्युलभ्यन्ते प्रक्रियाकौमुद्यां[1] सिद्धान्तकौमुद्यां[2] चेमान्युदाहरणानि उद्धृतानि वर्तन्ते। एतेन परिज्ञायते यदुत्तरवर्तिप्रक्रिया कौमुद्यादौ रूपमालायाः प्रभावो वर्तत एवेति।

**अथ कृदन्तमाला -**

तिङन्तमालायाः निरूपणानन्तरं रूपमालाकृता पाणिनेः "कृत्तद्धिसमासाश्च" इति प्रातिपदिकसंज्ञाविधायकसूत्रक्रममनुसृत्य कृदन्तमाला, तद्धितमाला समासमाला च क्रमेण निरूपिता। कृदन्तमालायामत्र 'धातोः' (३/१/९१) इत्यस्याधिकारे तृतीयाध्यायस्थाः प्रत्ययाः विवेचिताः। "कृदतिङ् (३/१/९३) इतिं सूत्रेण पूर्वं कृत्संज्ञां विधाय लट् लृट् लकाराणां स्थाने जायमानाः शतृशानच्कानच्क्वस्वादयः कृत्प्रत्यया निरूपिताः। मध्ये चात्रैव "ताच्छील्यवयोवचनशक्तिषु चानश्" (२/२/१२९) इति सूत्रेण चानश् प्रत्ययोऽप्युक्तः। तेन "पतमानो भल्लः, भाषमाणो कुमारः, निघ्नानो धन्वी" इत्यादीनां सिद्धिर्भवति। ततः "कर्तरि कृत्" इत्यस्यापवादसूत्रेण "तयोरेव कृत्यक्तखलर्थाः" (३/४/७०) इत्यनेन अकर्मकेभ्यो भावमात्रे सकर्मकेभ्य उभयत्र कृत्यप्रत्यया भवन्तीत्युक्त्वा "तव्यत्, तव्य, अनीयर, केलिमर् यत् क्यप् ण्यत्, इति सप्तविधाः कृत्यप्रत्यया निरूपिताः।

आचार्याणां विमलसरस्वतीनां विषयविभाजनमेतत् धर्मकीर्तेः रूपावतारमनुसरति। तत्र हि- "कृदन्ताः प्रदर्श्यन्ते इत्युक्त्वा पूर्वं शत्रादिप्रकरणमभिधाय कृत्यप्रकरणं निरूपितम्। प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्याञ्च कृदन्ते कृत्य प्रकरणं पृथक्तया उपन्यस्तम्। श्रीमता नारायण भट्टेनापि प्रक्रियासर्वस्वस्य कृत्खण्डे पूर्वं कृत्यप्रत्ययान् व्याख्याय कृत्संज्ञकाः प्रत्ययाः व्याख्याताः।[3]

---

१. द्र० प्र०कौ० भाग - ३ पृ० ३८४

२. द्र० प्र०कौ० (आत्मनेपदप्रकरणम्) सूत्र २६८९, ९०

३. द्र० प्र० सर्व० भाग - १, पृ० -७८- १०१

अत्रैव रूपमालाकारेण कर्मकर्तरि "केलिमरः कृत्युपसंख्यानम्" इत्युक्त्वा "स्वयं भिद्यन्ते भिदेलिमानि काष्ठानि, पचेलिमा माषाः।" इत्युदाहृतम्। व्याख्यानमिदं काशिकावृत्तिसम्मतं वर्तते। एवं रूपावतारेऽपि काशिकानुसारि व्याख्यानं दृश्यते[1]। प्रक्रियासर्वस्वेऽपि रूपमालावद्व्याख्यानम्। किन्तु तत्र स्वयं भिद्यन्त इत्यर्थे -

**"भिदेलिमानि काष्ठानि शालयोऽमी पचेलिमाः।**
**छिदेलिमा जीर्णरज्जुस्तृणजालं दहेलिमम्॥"**

इति कारिकायामुदाहरणानि प्रदर्श्य एष कर्मण्येवेति भाष्ये, इत्यप्यभिहितम्।

सिद्धान्तकौमुद्यां दीक्षित-महाभागैस्तु "भावकर्मणोरेव केलिमर् भवतीति" व्याख्याय "वृत्तिकारस्तु कर्मकर्तरि चायमिष्यते" इत्याह। तद्भाष्यविरुद्धम्।" इत्युक्तम्[2]। अत एव भाष्यविरुद्धत्वादुक्त रूपावतार-रूपमालादिग्रन्थोक्त व्याख्यानमप्रामाणिकमेवेति।

इत्थं कृत्यप्रत्ययनिरूपणानन्तरं कृदन्तमालायां बहुषु कृत्प्रत्ययेषु शतृ शानच् चानश् - अतृन्-कानच्-क्वसु-खल्-युच्-ल्युट्-ण्वुल्- तृच्- तृन्- ष्वुन्-तुमुन्-ल्युणिनि-अच्-क्त्वा-ल्यप्-णमुल्-खमुञ्-क्त्-क्तवतु-घञ्-अप् कि-अशुच्-क्त्रि-इनुण्-णच्-मप् - अञ् क्तिन्-अ-अङ्-क्यप्-श-अनि-क-अण्- खश्-खच्-ट-टक्-कप्-ख्युन्-खिष्णुच् - खुकञ् क्विप् मनिन्-क्वनिप्-वनिप्-क्विन्-इष्णुच् क्नु-आरु-कुक्-लुकन्-आलुच्-घुरच्-कुरच् उकञ्,ऊक्-उ-षाकन्-वरच्-क्वरप्-क्मरच्-र-नाजिङ् इति सप्तसप्ततिप्रत्यया एव निरूपिता। प्रक्रियाकौमुद्यां चतुरशीतिप्रत्ययानां निरूपणं विद्यते। परं सिद्धान्तकौमुद्यां प्रक्रियासर्वस्वे च समेषां कृत्प्रत्ययानां विवेचनं वर्तते। रूपमालायां रूपावतारे चास्य प्रकरणस्य पूर्वार्द्धोत्तरार्द्ध-रूपेण विभागो न दृश्यते, किन्तु प्रक्रियाकौमुद्यादौ पूर्वकृदन्तोत्तरकृदन्तरूपेण विषयविभागो वर्तत एव।

रूपमालामत्र "समानकर्तृकयोः पूर्वकाले" (३/४/२१)। इतिसूत्रे समानकर्तृकयो-रिक्त्युक्तत्वात् तत्र च द्विवचनसत्वात् समानः कर्ता ययो धात्वर्थयोस्तत्र पूर्वकाले वर्तमानात् धातोःक्त्वास्यादित्यर्थे यत्र क्रियाद्वयमस्ति तत्रैव पूर्वस्मात् क्रियावाचकपदात् (धातोः)क्त्वा सम्भाव्यते यथा "स्नात्वा भुङ्क्ते।" मत्प्रसूतिमनाराध्य प्रजा ते न भविष्यति[3], इत्यादौ तु वर्तनानस्येत्यध्याहारेण समानकर्तृकता। मुखं व्यादाय स्वपिति। नेत्रे निमील्य हसति इत्यादे-रुपपत्तिरिति व्याख्यानं दृश्यते।

एवमुक्तव्याख्यानेन "देवदत्तः स्नात्वा भुक्त्वा पीत्वा व्रजति" इत्यादौ क्त्वाप्रत्ययः न सम्भाव्यते परमिष्यते च तत्रापि, तथाविधप्रयोगस्य लोके शास्त्रे च सर्वत्र दर्शनात्। अत एव पाणिनीयैर्वैयाकरणैः व्याकरणशास्त्रे त्रुटिशङ्कापरिहाराय अत्रत्यं द्विवचनमतन्त्रमित्युक्तम्। तेन "स्नात्वा भुक्त्वा पीत्वा व्रजति" इत्यादौ व्रजनापेक्षया स्नानादीनां बहूनां पूर्वकालिकत्वेऽपि

---

१. द्र० रूपावतारः भाग २, पृ० २४८

२. सि० कौ० (कृदन्ते कृत्यप्रकरणम्) सू० २८३४

३. रघुवंशम् सर्ग - १ श्लोक - ७७

डॉ० रेवाप्रप्रसादद्विवेदसम्पादित-कालिदासग्रन्थावल्याः रघुवंशभागे श्लोकोऽयंइत्थमुपलभ्यते -

अवजानासि मां यस्मादतस्ते न भविष्यति।

मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाम सा॥

क्त्वेति भावः। एवच्च भाष्ये स्पष्टम्[१]। अत एव प्रक्रियासर्वस्वेऽपि "क्रियाबहुत्वेऽपि स्यादि-त्यभिधाय स्नात्वा भुक्त्वा भूषित्वा व्रजती" त्युदाहृतम्।[२]

एतस्य सर्वस्य चिन्त्यविषयस्य प्रामाण्यसंधानाय स्मरणसौकर्याय च धर्मकीर्तिना रूपावतारे पद्यमेकमुदाहृतम्-

**"गत्वा स्नात्वा च दध्यन्नं भुक्त्वा पीत्वाऽम्बु शीतलम्।**
**वटे शयित्वा क्रीडित्वा यातो मन्दातपे सुखी॥"**[३]

अत्रैव कृदन्तमालायां "कर्मणि हनः"(३/२/८६) इत्यस्य वृत्तौ "कुत्सायामेवेष्यते" इति विवेचनमुपलभ्यते। तेन मित्रघाती गोधातीत्यादीनां सिद्धिः। तथैव प्रक्रियाकौमुद्यां[४] निन्दायामेवेत्युक्तम् "चौरं हतवान्" इत्यत्र गोधाती मातृधाती।" इति व्याख्यानं दृश्यते[५]। परं सिद्धान्तकौमुद्यामस्यानुपलब्धिः। तंत्र तत्वबोधिनीकारेण काशिकोक्तं वचनमुद्धृतम्। यथा- "अत्र काशिका- "कुत्सितग्रहणं कर्तव्यमिह मा भूत्- चोरं हतवान्" इति[६]। यद्यपीदं भाष्ये नास्ति तथापि शब्दशक्तिस्वाभावादिदं लभ्यत इत्याहुः। एवं कातन्त्रेऽपि "कर्मणि हनः कुत्सा-यामि"ति (४/२/८२) स्पष्टमेवोक्तवचनपुष्टिकरं सूत्रं विद्यते।

एवं "भुवश्च" ३/२/१३८ इत्यत्र रूपमालाकारस्य "छन्दसीष्णुच् स्यात्। भाषा-यामन्येभ्योऽपि चेष्यते। भविष्णुः। भ्राजिष्णुः" इति व्याख्यानं दृश्यते। एवं प्रक्रियाकौमुद्यामपि "चादननुक्तेऽपि भ्राजिष्णुरि"त्युक्तम्।[७] सिद्धान्तकौमुद्यान्तु[८] - चकारोऽनुक्त समुच्चयार्थः। भ्राजिष्णु रिति वृत्तिः। एवं क्षयिष्णुः। नैतद् भाष्ये दृष्टमिति निर्दिष्टम्। एवं व्याकरणमिताक्ष-रायां[९] शब्दकौस्तुभेऽपि[१०] चास्य भाष्यानुक्तत्वमङ्गीकृतम्। किन्तु कातन्त्रव्याकरणे "भ्राज्यलङ्कृञ०" (४/४/१६) इत्यादिना भ्राजिष्णुरिति प्रयोगो निष्पद्यते।

एवमनेकत्र स्थलेषु रूपमालायामीदृशं व्याख्यानमुपलभ्यते यत्र महाभाष्यविरोध स्पष्ट एव। अन्येषु प्रक्रियाग्रन्थेष्वपि व्याख्यानस्य वैभिन्यमवलोक्यते।

कृदन्तमालाख्यप्रकरणस्यान्ते "उणादयो बहुलम्" ३/३/१ इति सूत्रं व्याख्याय केवलं पञ्चोणादिसूत्राण्येव व्याख्यातानि। तथा चात्रैवैषा कारिका अप्युपन्स्ता -

---

१. द्र० म० भा० सू० ३/४/२१
२. प्र० सर्व० भाग - २ पृ० १४८
३. रू० भाग- २ पृ० ३००
४. प्र० कौ० भाग - ३ पृ० ५१५
५. प्र० सर्व० भाग - २ पृ० ५
६. सि० कौ० त० बो० सूत्र २९२७
७. प्र० कौ० भाग - ३ पृ० ५५१
८. सि० कौ० सू० ३११८
९. व्या० मि० ३/२/१३८
१०. द्र० शब्दकौस्तुभः ३/२/१३८

"लक्ष्यानुसारेणोन्नेया अनुबन्धा उणादिषु ।
बहुलोक्त्या प्रसाध्यानि तेषु कार्यान्तराणि च ॥"
प्रक्रियाकौमुद्यादौ तु भाष्यस्यैषा कारिका दृश्यते -
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

एवञ्चात्र रूपमालायां - "उणादि -स्फुटीकरणाय वररुचिना पृथगेव सूत्राणि प्रणीतानि,[१] इत्युक्तम् तत्तु चिन्त्यमेव । यतो हि उणादि-सूत्राणि शाकटायनमुनिप्रणीतानि सन्ति,[२] न तु पाणिनिना प्रणीतानीति । "उणादयो बहुलमि" ति सूत्रे भाष्ये "नाम च धातुजमाह च निरुक्ते व्याकरणे शकटस्य च तोकमिति वार्तिक-व्याख्यावसरेऽभिहितम् । "उणादीनां शास्त्रान्तर पठितानां साधुत्वाभ्यनुज्ञानार्थं बहुलग्रहणमि"ति प्रदीपे कैयटेनोक्तम्[३] । तत्र शास्त्रान्तरेति व्याकरणान्तरेत्यर्थ इति नागेशेन व्याख्यातम् । उणादिसूत्राणां पाठद्वयमधुना उपलभ्यते पञ्चपदी दशपदी चेति । तत्र शास्त्रकारैः प्रायेण पञ्चपदीपाठस्यैवाश्रयणं विहितम्[४] कातन्त्र-व्याकरणस्य दुर्गसिंहप्रणीतवृत्तावपि "कात्यायनेन ते स्रष्टाः" इत्युल्लिखितं वर्तते । अनेन ज्ञायते यत् रूपमालाकारेण दुर्गसिंहकृतवृत्तिमनुसृत्यैव वररुचिना उणादिसूत्राणि प्रणीतानी" त्युक्तम् । वररुचिः कात्यायनस्यैवापरनाम विद्यते । प्रक्रियासर्वस्वे नारायणभट्टमहाभागेन"

"पाणिनरेवोणादिसूत्राणां कर्ता" इति स्वीकृतम्[५] । नागेशमहाभागः[६] श्वेतवनवासिनमहोदयश्च[७] शाकटायनमुनिप्रणीतानीमानि सूत्राणीति मन्येते । बालमनोरमाकाराणामप्ययमेवाशयः । परं व्याकरणशास्त्रमर्मज्ञैः पं० युधिष्ठिरमीमांसकमहोदयैः स्वीकृतम् यदुणादिसूत्राणां पञ्चपदीपाठस्य प्रणेता आपिशालिः, दशपदीपाठस्य च कर्ता पाणिनिरासीत् ।[८]

---

१. द्र० वा० म० उणादि सूत्र १/१ पृ० ५२७ ( सि० कौ० स० गोपालशास्त्रीनेने ११९५८

२. म० भा० (-प्रदीपः) ३/३/१

३. "Of the two recensions of the Unadipath, namely the Dasapadi and panchapadi, p.s. has adopted the panchapadi But vitthala has adopted the Dasapadi"

४. See - Belvalkar S.K. - Systems of Sanskrit grammar. op.cit (p.27.No.2)

५. "अकारं मुवस्यादावुकारं दर्दुस्य च ।
बभान पाणिनिस्तौ व्यत्यायेनाह भोजराट् ॥"
प्रक्रियसर्वस्वम् ( उणादिखण्डः ) पृ० १०

६. म० भा० उद्योतः ( सू० ३-३-१ )

७. "येयं शाकटायनादिभिः पञ्चपदी रचिता
(Unadivrtti of svetvan, Madras pp. 1-2)

८. द्र० - सं० व्या० शास्त्र का इतिहास भाग - २ पृ० १९१-१९९

## तद्धितमाला -

"कृभ्वस्तियोगे सम्पद्य कर्तरि च्विः" (५/४/५०) "क्त्रेर्मम्नित्यम्" (४/४/२०) इत्यादिसूत्राणि तद्धितस्य तिङन्त कृदन्तोत्तरस्थितिं ज्ञापयन्ति। "कृत्तद्धिसमासाश्च" इति पूर्वोक्तक्रममनुसृत्य च रूपमालाकरेण तद्धितमालाप्रकरणमुपन्यस्तम्। इदमेवाभिप्रेत्य वरदराजाचार्येण लघुकौमुद्यां कृदन्त प्रकरणानन्तरं तद्धितप्रकरणमारब्धम्। संज्ञासर्वनामविशेषणादिपदेभ्यः एते तद्धितप्रत्यया व्युत्पाद्यन्ते। द्विविधाश्चात्र तद्धितप्रत्ययाः - प्रकृत्यर्थभिन्नार्थाः, स्वार्थिकाश्च। तत्र प्रकृत्यर्थभिन्नार्थाः यथा - उपगोरपत्यम् औपगव इति। स्वार्थिकाः यथा प्रज्ञ एव प्राज्ञः "प्रज्ञादिभ्यश्चे" त्यण्।

अत्रापत्य-रक्ताद्यर्थ-चातुरर्थिक-शैषिक-ठगाधि-कार-प्राग्धितीयछयतोरधिकार-आर्हीय- कालाधिकार भवनाधिकार-मतुबर्थीय स्वार्थिकावान्तरप्रकरणानि क्रमेण निरूपितानि। प्रायेणात्र अष्टाध्यायीक्रमानुसारेणैव तद्धित-प्रत्ययाःव्याख्याताः। प्रक्रियाकैमुद्यां तु प्राग्दीव्यतीयचातुरर्थिक-शैषिक-प्राक्क्रीतीय- प्राग्वतीय-स्वार्थिक-प्राग्दिशीयेत्यादिक्रमेण तद्धितप्रत्ययाः निरूपिता। किन्तु सिद्धान्तकौमुद्यां ततोऽपि भिन्नक्रमेण प्रकरणानां निरूपणं वर्तते। तत्र हि अपत्याधिकार- चातुरर्थिक शैषिक- प्राग्दीव्यतीय- प्राग्वतीय- प्राग्धितीय-छयद्विधिआर्हीय-कालाधिकार- ठञ्विधि- भावकर्मार्थ - पाञ्चमिक- मत्वर्थीय- प्राग्दिशीय-प्रागिवीय- स्वार्थिक- द्विरुक्तावान्तरप्रकरणानि क्रमेण व्यवस्था- पितानि। अत्र सिद्धान्तकौमुद्यां रूपमालायाः प्रभावोऽशेनानुमातं शक्यते। ग्रन्थसंक्षेपाभिप्रायेणात्र विमलसरस्वतीभिः बहूनि सूत्राणि परित्यक्तानि। १०२२ तद्धितसूत्रेषु केवलमत्र ४१२ सूत्राणि एव व्याख्यातानि। प्रक्रियाकौमुद्यां ६२९ सूत्राणि, सिद्धान्तकौमुद्यां प्रक्रियासर्वस्वे च सर्वाण्येव सूत्राणि व्याख्यातानि।

रूपमालायामत्र "कुलात्खः (४/१/१३९) इतिसूत्रेण खप्रत्यये कृते "कुलीनः", आढ्यकुलीनः" इति रूपद्वयं संसाधितम्। परमष्टाध्याय्या अनेन सूत्रेण "कुलीनः" इत्येकमेव रूपं निष्पद्यते। भट्टोजिदीक्षितेन शब्दकौस्तुभे सिद्धान्तकौमुद्यां [1] च रूपमालामनुसृत्य उपर्युक्तं रूपद्वयं निष्पादितम्। तत्र हि सूत्रव्याख्यावसरे "उत्तरसूत्रे अपूर्वपदादियुक्तम्। तत्र हि सूत्रव्याख्यावसरे "उत्तर सूत्रे अपूर्वपदादिति लिङ्गात्। आढ्यकुलीनः।" इति व्याख्यानं दृश्यते।

एवञ्च "दित्यदित्यादित्युत्तरपदाण्ण्यः" (१/४/८५) इत्यस्य व्याख्याने रूपमालायां - यमाच्चेति। सिद्धान्तकौमुद्यां - [2] यमाच्चेति वचनं काशिकाकारस्येति स्वीकृतम्। परं चान्द्रव्याकरणे "दित्यदित्यादित्ययमाण्ण्यः" इत्यनेन "याम्यः" इति प्रयोगो निष्पद्यते। अतस्तस्यैव काशिकायां प्रक्रियाग्रन्थेष्वपि प्रभावो वर्तते।

एवमन्येष्वपि प्रक्रियाग्रन्थेषु प्रायेण रूपमालादर्शितमार्गोऽनुसृत एवेति।

---

१. सि० कौ० (अपत्याधिकारे) सू० ११६२

२. सि० कौ० (अपत्याधिकारे) सू० १०७७

**समासमाला -**

सुबन्ततिङन्तोद्देश्यकत्वेन समाससतद्धितयोरुभयोः निरूपणार्हत्वेऽपि एकसुबन्तोद्देश्यकत्वेन पूर्वं तद्धितप्रत्ययान् निरूप्य ततोऽनेकसुबन्तोद्देश्यकत्वेन समासनिरूपणाय रूपमालाकृता ग्रन्थान्ते समासमाला संग्रथिता।

समसनं समासः, स चानेकेषु पदेष्वैक्यसम्पादनम् यथा रूपावतारे धर्मकीर्तिना निगदितम् - "ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजन्।"[1] एवं च प्रक्रियाकौमुद्याः प्रसादटीकायां श्रीमता विठ्ठलाचार्येणाऽप्युक्तम् - "एकपद्यमित्युपलक्षणमैकस्वर्यमेकविभक्तिकत्वं चेति।" "यः कश्चित् पदसम्बन्धी विधिः सः सम्बद्धार्थपदविषयो ज्ञेयः तेन क्षेत्रं राज्ञो वित्तं ममेति, अत्र राजवित्तयोर्न समासः।" इति च "समर्थः पदविधि" इतिसूत्रं समासमालादावुक्तम्। अष्टाध्यायीक्रमनुसृत्यात्र समासाश्चुर्धा विभज्यन्ते। तद्यथा अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः द्वन्द्वश्च।

**अव्ययीभावः -**

प्रायेण पूर्वपदार्थप्रधानोऽ व्ययीभावः। द्विविधोऽयं समासः- अव्ययपूर्वपदो नामपूर्वपदश्चेति। तत्र रूपमालायां प्रक्रियाकौमुद्यादौ चाव्ययपूर्व-पदमव्ययं प्रथममुपन्यस्तम्। अत एव अव्ययं विभक्ति० "इत्यादि सूत्रं" अधिस्त्रि कथां श्रृणु, सुमगधम्, दुर्यवनम्" इत्याद्युदाहरणपूर्वकं व्याख्यातम्। प्रक्रियाकौमुद्यादौ च अधिहरि उपकृष्णमित्युदाहृतम्। पश्चान्नामपूर्वपदाव्ययीभावसमासप्रदर्शनाय रूपमालाकारेण - "सुप्प्रतिना मात्रार्थे" इत्यादिसूत्रं प्रतिपादितम् "लाभ प्रति" इत्याद्युदाहृतञ्च। प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यां च समासनिरूपणस्यैषैव रीतिरवलाक्यते। परं तत्र कारकप्रकरणानन्तरम् पूर्वार्द्ध एव समासप्रकरणुपन्यस्तम्।

**तत्पुरुषः -**

प्रायेणोत्तरपदार्थप्रधानस्तत्पुरूषः। अत्र रूपमालायां त्रिविधस्तत्पुरुष - व्यधिकरणतत्पुरुषः, समानाधिकरणपदः संख्यापूर्वपदश्चेति। तत्र प्रथमं व्यधिकरणपदसमासप्रतिपादनाय समासमालायामाचार्यवर्यैः यत्नो विहितः। तेन द्वितीयातृतीया चतुर्थीपञ्चमीषष्ठीसप्तमीतत्पुरुषास्तत्तत्सूत्रैः क्रमेण विवेचिताः। प्रक्रियाकौमुद्यादावप्येषैव क्रमोऽङ्गीकृतः व्याधिकरणपदसमासप्रदर्शनाय।

अनन्तरं रूपमालाकारेण समानाधिकरण पदस्तत्पुरुषः निरूपितः। "तत्पुरुषः समानाधिकरणः कर्मधारयः" (१/२/४२) इति वचनेनायं समासः "कर्मधारय" इति पदेनाभिधीयते। अत्र "विशेषणं विशेष्येण बहुलम्, कुत्सितनि कुत्सनैः, पापाणके कुत्सितैः, पोटा युवतिस्तोक०, कुमारः श्रमणादिभिः, उपमितं व्याघ्रादिभिः कृतादिभिरि" त्यादिकर्मधारयसमासविधायकानि सूत्राणि व्याख्यातानि। तद्यथा -

१- पूर्वकालैकसर्वजरत्पुराणनवकेवलाः सामानाधिकरणेन (२/१/४९)

---

१. रूपावतारः (पूर्वार्द्धः) - समासावतारः

२- उपमानानि सामान्यवचनैः (२/१/५५)

३- उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (२/१/५६)

४- विशेषणं विशेष्येण बहुलम् (२/१२५७)

पश्चाच्च "तद्धितार्थोत्तरपदसमाहारेच" इतिसूत्रेण संख्यापूर्वपदः तत्पुरुष-समासो व्युत्पादितः। स च द्विगुसंज्ञको भवति। एतदर्थं "संख्यापूर्वो द्विगुरिति सूत्रमुक्तम्। यथा - पञ्चसु कपालेषु संस्कृतः पञ्चकपालः। द्वौ वेदावधीते द्विवेद इति।

एतदुत्तरं 'नञ्' (२/२/६) इति सूत्रेण नञ्समासः "उपपदमतिङ्" इति सूत्रेण चोप-पदसमासश्च सोदहरणं प्रतिपादितौ। अत्रैव रूपमालाकृता" इवेन समासो विभक्त्य लोप-श्चेति वार्तिकमुक्तम्। तदुदाहरणप्रदर्शनाय च

**विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम्।**
**श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः॥**[1]

परं सिद्धान्तकौमुद्यां[2] पूर्वोक्तं वार्तिकमव्ययीभावसमासप्रकरणे विलिख्य जीमूत-स्येवेत्युदाहरणं प्रदत्तम्। एवं प्रक्रियाकौमुद्यादौ नञ्समासोऽपि कर्मधारयसमासनिरूपणानन्तरं प्रतिपादितः।

## बहुव्रीहिः -

प्रायेणान्यपदार्थो बहुंव्रीहिः। रूपमालायां "शेषो बहुव्रीहिः" (२/२/२३) इतिसूत्रे-णाव्ययीभावतत्पुरुषाभ्यामन्यःबहुव्रीहिः। द्वन्द्वस्य वर्जनमकेसंज्ञाधिकारात्" इत्युक्तम्। "अनेकमन्यपदार्थे" (२/२/२४) इत्यनेन प्रथमाभिन्नविभक्त्यर्थेष्वयं समासो भवतीति तत्रैवो-क्तम् प्रथमान्तस्यार्थे तु नायमिष्यते" इति। तत्रभवता रामचन्द्राचार्येणापि प्रक्रियाकौमुद्याम् "अप्रथमाविभक्त्यर्थेष्वयमि" त्युक्तम्। रूपावतारे धर्मकीर्तिरप्याह- प्रथमावर्जमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। दीक्षितेनापि सिद्धान्तकौमुद्यामुक्तम् -

"अप्रथेमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितम्। प्राप्तमु-दकं यं सः प्राप्तोदकः ग्रामः। तेन प्रथमार्थे तु न "वृष्टे देवे गतः" इति।

रूपमालायां त्रिविधो बहुव्रीहिः दर्शितः। समानाधिकरणबहुव्रीहिः,सहार्थकबहु-व्रीहिः व्यधिकरणबहुव्रीहिश्च। तत्र पूर्व षड्विधानां बहुव्रीहिसमानाधिकरणाभामुदाहरणानि क्रमेण समासमालायामुपदर्शितानि। अनन्तरं "तेन सहेति तुल्ययोगे" (२/२/२८) इत्यनेन सहार्थकबहुव्रीहिसमासो निरूपितः। तत्र "सह पुत्रेणागत इति सुपुत्रः" इत्युदाहरणमप्युपन्य-स्तम्। पश्चात् कण्ठे कालो यस्य सः" कण्ठेकालः" इत्यादौ व्याधिरणबहुव्रीहिरपि प्रतिपा-दितः। पुनश्च तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानभेदेनायं बहुब्रीहिः द्विवधः" इत्यपि विमलसर स्वतीभिरत्र कण्ठरवेणोक्तम्। प्रक्रियाकौमुद्यादिग्रन्थेष्वपि रूपमालावद् विषयप्रतिपादनं विद्यते।

---

१. प्रबोध चन्द्रोदयः प्रस्तावना पृ० १

२. द्र० सि० कौ०, (अव्ययीभाव प्र०) सूत्र - ६५०

**द्वन्द्वः -**

प्रायेणोभयपदार्थप्रधानो द्वन्द्व इति। रूपमालायां ग्रन्थकृता "चार्थे द्वन्द्वः" (२/२/२९) इति सूत्रेण द्वन्द्वसमासं विधाय समाहारार्थः इतरेतरयोगार्थश्चेति तस्य द्वैविध्यमुक्तम्। तद्यथा - समुदायप्रधानोऽन्योऽयं सम्बन्धः समाहारः - यथा - संज्ञा च परिभाषा च अनयोः समाहारः संज्ञापरिभाषमित्यादौ। अवयवप्रधान इतरेतरयोगसस्तत्र स्यात्। यथा - रामश्च कृष्णचेति रामकृष्णावित्यादौ। अनन्तर यथापेक्षितानि एकवद्भावादिविधायकानि सूत्राणि व्याख्यातानि।

प्रक्रियाकौमुद्यां रूपमालावद् द्विविधः द्वन्द्व उक्तः। किन्तु सिद्धान्तकौमुद्यां दीक्षितेन उक्ते सूत्रे चार्थस्य चातुर्विध्यं प्रदर्श्य त्रिविध एवायं समासः स्वीकृतः तद्यथा -[१] समुच्चायार्थः,- इतरेतरयोगः समाहारश्चार्थाः। परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः। मिलितानामन्वये इतरेरयोगः। समूहःसमाहारः। "इति परं तत्रेश्वरं गुरुं च भजस्व इति समुच्चये, भिक्षामटगां चानय इत्यन्वाचये च न समासोऽसामर्थ्यात्। धवखदिरौ। संज्ञापरिभाषम् इति।

द्वन्द्वसमासान्ते रूपमालायां एकवद्भावसूत्राणां विवेचनावसरे - "सर्वो द्वन्द्वो विभाषयैकवदित्येके" इत्युक्त्वा मतान्तरं दर्शितम्[२]। परमीदृशं वचनं सिद्धान्तकौमुद्यादिप्रक्रियाग्रन्थेषु कुत्रापि नोपलभ्यते। परं काशिकायां "तिष्यपुनर्वस्वो०" (१/२/६३) इत्यस्य वृत्तौ "बहुवचनस्येति किम् ? एकवचनस्य मा भूत्। तिष्यपुनर्वसु इदमिति।" सर्वो द्वन्द्वो विभाषा एकवद्भवति "इत्यस्यैतदेव ज्ञापकमि"त्युक्तम्।

इत्थं समासविधानमुपदर्श्य समासान्ते लिङ्गवैचित्र्यप्रदर्शनाय रूपमालाकारेण "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" २/४/२६ रात्राह्नाहाः पुंसि (२/४/२९) इत्यादि षट्सूत्राण्युपन्यस्तानि। कौमुद्यादिषु अव्ययीभावादिसमासव्याख्यानकाल एव लिङ्गविशेषविधायकानि सूत्राण्युक्तानीति।

**समासान्तभागः -**

अथ सर्वसमाससाधारणसमासान्ताः प्रत्ययाः रूपमालायाम् "ऋक्पूरब्धूःपथामानक्षे" (५/४/७४) "राजाहः सखिभ्यष्ट च् (५/४/९१) इत्यादिसूत्राणि व्याख्याय विनिर्दिष्टाः। अत्र हि "अच्-टच्-षच्-अप्-असिच्-अनिच्-कप्"इत्येते सप्तप्रत्ययाः क्रमेण प्रतिपादिताः। प्रक्रियाकौमुद्यामपिऋक्पूरब्धू० " इत्यादिनाच्,द्वयन्तरूपसर्गेभ्योऽप ईत्, "ऊदूनोर्देशे" इत्यनेन ऊच्चेत्यादयः समासान्ताः प्रत्यया प्रोक्ताः। सिद्धान्तकौमुद्यान्तु[३] सर्व साधारण समासान्तप्रत्ययनिरूपणाय रूपमालावत् पृथक् प्रकरणमेकमुपन्यस्तम्। तत्र सर्व एव समासान्तप्रत्ययाः विवेचिताः।

---

१. सि० कौ० ( द्वन्द्वसमास प्र० ) सू० ९०१

२. द्र० सि० कौ० ( सर्वस० प्र० ) पृ० ६२८-६३६

३. द्र० सि० कौ० ( अलुक्समास प्र०) सू० ९५८-९८४

**एकशेषभागः -**

एकशेषभागे रूपमालाकृता "पुमान् स्त्रिया" (१/२/६७) भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (१/२/६८), श्वसुरः श्वश्रू वा (१/२/७१) पितामात्रा (१/२/७०), त्यदादीनि सर्वैर्नित्यम्, (१/२/७२) इतिपञ्चसूत्राणि क्रमेण व्याख्यातानि। किन्तु सिद्धान्तकौमुद्यां एकशेषप्रकरणे नवसूत्राणि सोदाहरणमुपन्यस्तानि।

**समासाश्रयविधिः**

समासाश्रयविधिभागे रूपमालाकारेण कतिपयसूत्रैः अपरस्पराः, अगोष्पदादयः प्रयोगाः निपातनत्वेन संसाधिताः। ततः "अम्भसा सिक्तम्, अरण्ये तिलकाः" इत्यादिषु प्रयोगेषु विभक्तेरलुग् निदर्शनाय ओजः सहोम्भसस्० (६/३/३), हलदन्तात् सप्तम्याः संज्ञायाम् (६/३/९) इत्यादीन्यष्टसूत्राण्युपन्यस्तानि। प्रक्रियाकौमुद्यादौ तु अलुक्प्रकरणं पृथगुपन्यस्तम्।

ततश्च रूपमालायामत्र षत्वानङ् उगागम-पुंवद्भावह्रस्वादि-विधानमपि तत्तत्सूत्रैरुपपादितम्। प्रक्रियाकौमुद्यादिषु च व्याख्यानस्यैव क्रमोऽवलोक्यते।

**द्विरुक्तमाला -**

इत्थं समासप्रकरणमभिधाय रूपमालाकारेण द्विरुक्तमालायां "पचति पचति, भुक्त्वा भुक्त्वा याति, भोजं भोजं याति" इत्यादिषु द्वित्वविधायकानि "नित्यवीप्सयोः" ८/१/४ इत्यादिषट्सूत्राण्युक्तानि। परं सिद्धान्तकौमुद्यां[1] तद्धिते स्वार्थिकप्रकरणानन्तरं द्विरुक्तप्रकरणमुपन्यस्तम्।

**षत्वणत्वमाला -**

अत्र प्रथमं पूर्वपदात्संज्ञायामगः (८/४/३) इत्यादिभिः दशसूत्रैः णत्विधानमुदर्शितम्। ततः सोऽपदादौ (८/३/३८) नमस्पुरसोर्गत्योः (८/३/४०) इत्यादित्रिभिः सूत्रैः विसर्गस्य सत्वविधानमुक्तम्। अनन्तरं च "इणः षः (८/३/३९) इत्यादिभिः सूत्रैः षत्वविधानमुक्तम्। अन्ते च "ष्यङः सम्प्रसारणम्' (६/१/१३) 'बन्धुनि बहुव्रीहौ' (६/१/१४) इति सूत्राभ्यां सम्प्रसारण विधानमप्युपदर्शितम्।

परं प्रक्रियाकौमुद्यादौ सर्वत्र यथापेक्षं तत्तत्प्रयोगेषु तत्तत्सूत्रैः णत्वादि दर्शितम्। षत्वणत्वाद्यर्थं प्रथक् प्रकरणं रूपमालामृते प्रक्रियाग्रन्थेषु न दृश्यत इति।

## (ख) वार्तिकानां विवेचनम्

वार्तिकानां किं स्वरूपं किञ्च तेषां प्रयोजनमित्यादिनिर्धारणार्थं वार्तिकानामुपलब्धलक्षणेषु विचारः परमावश्यकः। वार्तिकलक्षणविषये संस्कृतवाङ्मयेऽधोलिखिता उक्तयः प्राप्यन्ते। यथा पाराशरोपुराणे -

---

१. द्र० सि० कौ० (द्विरुक्त प्र०) सू० २१३९-२१५०

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।**
**तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः ।।**[१]

सम्बन्धवार्तिके -

**उक्तानुक्तदुरुक्तादि चिन्ता यत्र प्रवर्तते ।**
**तद्वार्तिकमिति प्राहुः वार्तिकज्ञा विपश्चितः ।।**[२]

हेमशब्दानुशासने -

**उक्तानुक्तदुरुक्तानां व्यक्तकारी तु वार्तिकम् ।।**[३]

काव्यमीमांसायाम् -

**उक्तानुक्तदुरुक्तचिन्ता वार्तिकम् ।।**[४]

उद्द्योते -

**सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्तिकत्वम् ।**[५]

पदमञ्जर्याम् -

**यद्विस्मृतमदृष्टं सूत्रकारेण तत् स्फुटम् ।**
**वाक्यकारो ब्रवीत्येवं तेनादृष्टं च भाष्यकृत् ।।**[६]

एषु उपरिलिखितेषु वार्तिकलक्षणेषु केवलं नागेशेनैव उक्तप्रयोगो न विहितः । हरदत्तस्योक्तलक्षणे दुरुक्तचिन्तायाः स्थानं नास्ति । तथा च उपर्युक्तेषु लक्षणेषु चिन्तापदं वर्तते । अत्रेदमपि सम्भाव्यते-यत्प्रमाण वार्तिकादिबौद्धग्रन्थानां लक्षणधिया उक्तप्रथमे वार्तिकलक्षणस्य निर्माणं भवेत् । यथा प्रथमवार्तिकलक्षणे ग्रन्थशब्दोऽपि पठितः ।

पाश्चात्यैर्भारतीयैश्च विद्वद्भिः महाभाष्ययमनुसृत्य वार्तिकानां स्वरूपविषये महान् प्रयासः कृतः । पाश्चात्येषु प्रो० गोल्डस्टूकरमहोदयेन[७] महता परिश्रमेण महाभाष्यालोडनं विधाय नागोजिभट्टस्य "अनुक्तदुरुक्तचिन्ता करत्वं वार्तिकत्वमि"त्येव वार्तिकलक्षणं स्वीकृतम् । परं नागेशाभिप्रायमविचार्य कात्यायनः पाणिनेर्प्रतिपक्षी दोषद्रष्टा चासीदित्यपि तेन स्वीकृतम् ।

शर्मण्यदेशवासिना डॉ० कीलंहार्नमहोदयेन[८] महाभाष्याधारेण वार्तिकानां स्वरूपपरिज्ञाने पूर्ववर्तीनां गोल्डस्टूकर बेवर-बर्नेलप्रभृतीनां मतानि साकल्येनालोड्य विमृश्य च

---

१. पराशरोपपुराणम् पृ० ७

२. सम्बन्ध वार्तिक - पृ० ७

३. हेमचन्द्र - हेमशब्दानुशासनम्

४. राजेशेखर - काव्यमीमांसा

५. नागेश-उद्योत सू -१-१-१

६. हरदत्त-पदमञ्जरी भाग - १ सू- १/१/५ पृ० ५१

७. Prof. Goldstucker "panini His place in the Sankrit literature" pp-91-92

८. F.KIELHORN - "Kalayan and patanjali" pp 1-7 and 47-48

वार्तिकलक्षणविषये नूतनसिद्धान्तोऽस्मत्पुरतः संस्थापितः। तेन नागोजिभट्टोक्तलक्षणं स्वीकृत्योक्तम्-यत्तदेव वार्तिकम् यत्र सूत्रे कापि न्यूनता भवेत् अथवा तत्र दोषान्वेषणं भवेत्। प्रो० कोलब्रुकमहाशयेनापि[१] वार्तिकानां परिभाषाविषये स्वाभिप्रायः प्रकटितः।

अथेदानीं वार्तिकस्य परिभाषाविषये शास्त्रीयरीत्या विचारःप्रस्तूयते -

"वार्तिकमि"ति वृत्तिपदान्निष्पद्यते। महाभाष्यकारमतेन शास्त्रप्रवृतिरेव वृत्तेरभिप्रायः। तद्यथा - का पुनर्वृत्तिः ? शास्त्रवृत्तिः।[२] कात्यायनेनापि वृत्तिपदस्यायमेवार्थः स्वीकृतः - "तत्रानुवृत्तिनिर्देशे सर्वणग्रहणमनण्त्वात्।[३] अत्र कैयटेनोक्तम् - "वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिस्तदनुगतो निर्देशोऽनुवृत्तिनिर्देशः।[४]

एवंच कैयटेन "वृत्तौ साधु वार्तिकमि"[५]ति व्युत्पत्तिः दर्शिता। अर्थात शास्त्रप्रवृत्तये यत्साधु उपयुक्तं भवेत्तदेव वार्तिकम्। लक्षणया वृत्तेर्व्याख्यानं वार्तिकमिति फलितं भवति। व्याख्यानपदस्यार्थो भगवता भाष्यकृता स्पष्टीकृतः-

"न केवलानि चर्चापदानि व्याख्यानंम् - 'वृद्धिः, आत् ऐजिति। किं तर्हि ? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति।"[६]

तत्र वाक्याध्याहारविषये नागेशमहाभागेनोक्तम् - "वाक्यघटकानां सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाध्याहारकल्पनमित्यर्थः। यदवावाक्याध्याहारइत्यनेन वार्तिक व्याख्यानानां सूत्रतात्पर्यविषयता वाक्यैकदेश न्यायेन सूचिता।"[७]

अतो व्याख्यानार्थं प्रदर्शयता भगवता भाष्यकृता अन्येष्वेव शब्देषु वार्तिकार्थः निर्दिष्टः। तेनानेकत्र स्थलेषु आख्यानपदेन सह अन्वाद्युपसर्गाणां योगेनार्थभेदः स्वीकृतः। यथा व्याख्यानान्वाख्यानप्रत्याख्यानेषु उपसर्गभेदादर्थभेदः।

एवं संक्षेपेण भाष्यकारमतेन व्याख्यानान्वाख्यानप्रत्याख्यानात्मकवचनान्येव वार्तिकानीति डा० वेदपतिमिश्रेण[८] स्वकीये "व्याकरणवार्तिक, एक समीक्षात्मक अध्ययन" नामके ग्रन्थे वार्तिकानां परिभाषाविवेचानावसरे विस्तरेण प्रपञ्चितम्।

महाभाष्ये समुपलब्धेषु वार्तिकेषु आचार्यकात्यायनविरचितवार्तिकानां भूयसी संख्या वर्तते। परं समालोचकानां पुरस्तात् एषा विषमा समास्या विद्यते यत्कात्यायनप्रणीत-

---

१. Prof. colebrooke's - "Misellenceous Essays" Vol-2 p.6

२. म० भा० (पश्पशाह्निक) वैद्यनाथकृत छायासंकलितः पृ० ५९

३. भा० वार्तिक-तत्रैव (अइउण् सूत्रे)

४. कैयट-म० भा० प्रदीप-तत्रैव

५. कैयट-प्रदीप सू- ४/२/६०

६. म० भा० सू० वृद्धिरादैच् १/१/१

७. नागेश-प्रदीपोद्द्योत (चौ० स०) नवाह्निक पृ० ६०

८. डा० वेदपति मिश्र-व्या०वा० ए० अ०-पृ० २२-३७

वार्तिकानां विशिष्य स्वरूपं कथं निर्धारणीयम् ? डा० कीलहार्नसम्पादिते महाभाष्ये १२४५ सूत्रेषु कात्यायनवातिकान्युपलभ्यन्ते । ४६८ सूत्रेषु कात्यायनविरचितवार्तिकानि नोपलभ्यन्ते, परं तत्र पतञ्जलेर्भाष्यमुपलभ्यते । तत्र भगवता कात्यानेन कं सूत्रमवलम्ब्य स्वीय-वार्तिकं प्रणीतमिति ज्ञानाय प्रायः आचार्येण वार्तिकेषु सूत्रगतपदानां प्रतीकात्मको भागो विनिर्दिष्टः । बहुत्र वार्तिकेषु क्वचित् प्रथमं, मध्यमं क्वचिच्चान्तिमं च पदं प्रतीकरूपेण वर्तते । अनेन हेतुना तद्वार्तिकं केन सूत्रेण सम्बद्धमित्यवगन्तुं शक्यत इति डा० रामसुरेश त्रिपाठिना [1] स्वकीये शोधपत्रे निर्णीतम् । एवञ्च "इति वक्तव्यम्, इतिकर्तव्यमि"-त्येवं रूपेण यदां तस्यैव वचनस्य महाभाष्ये आवृत्तिरुच्यते तदा तद्कात्यायनप्रणीतवार्तिकमिति डा० कीलहार्नमहोदयैः[2] विवेचनं कृतम् । साम्प्रतञ्च केषांचिद् वार्तिकानां स्वरूपान्वेषणे श्री-सरस्वतीप्रसाद चतुर्वेदिभिः,[3] डा० रामसुरेशत्रिपाठिभिः-डा० वेदपतिमिश्रमहाभागैश्च[4] महान् प्रयासो विहितः ।

महाभाष्ये पतञ्जलिप्रणीतानि वातिकान्यपि सन्ति । तानि प्रायेण "वक्तव्यम्" इतिपदेन संयुक्तानि वतन्ते । परं तेषु पतञ्जलेर्भाष्यं न विद्यते । यथा महाभाष्ये "वाष्पोष्मभ्यामुद्वमने" (३/१/१६) इत्यत्र फेनाच्चेति वक्तव्यम् । इति वार्तिकं व्याख्याभाष्याभावात् पतञ्जलिप्रणीत एवास्ति । एतदतिरिक्तं "अत्यल्पमिदमुच्यते" इत्यादिनापि महाभाष्यकृता केषांचिद् वार्तिकानां विस्तरः कृतः ।

एवं रीत्या पुराकालोदव विद्वद्भिः महाभाष्यमाधारीकृत्य वार्तिकानां स्वरूपविवेचेन महान् प्रयासो विहितः परमुत्तरकालिकेषु रूपावतार - रूपमाला - कौमुद्यादिनव्यव्याकरणग्रन्थेषु वार्तिकानां का स्थितिरासीदिति विवेचनं नाद्यावधि विहितम् । अतस्तदधिकृत्येदानीं विचार्यते -

महाभाष्य उद्धृतानां वार्तिकानामुत्तरवर्तिव्याकरणशास्त्र - ग्रन्थोद्धृतवार्तिकैः सह तुलनायां सत्यामेतद् दृष्टिगोचरो भवति यद् वार्तिकानां संख्योत्तरोत्तरं न्यूनतामुपैति । महाभाष्यापेक्षया काशिकायां काशिकापेक्षया च प्रक्रिया ग्रन्थेषु (रूपमाला-रूपावतार-प्राक्रि याकौमुदीसिद्धान्तकौमुद्यादिषु ) वार्तिकानां संख्या ह्रासोन्मुखी वर्तते । अत्रायं हेतुः - यन्नव्यव्याकरणग्रन्थेषु प्रायः प्रयोगव्युत्पादकानि प्रक्रियाविषयकाणि वार्तिकान्येव संगृहीतानि सन्ति । दार्शनिकसिद्धान्तविषयदर्शकानि यानि वार्तिकानि महाभाष्ये वर्तन्ते, तेषां प्रक्रियादृष्ट्या अनुपयोगादुत्तरवर्तिषु प्रक्रियाग्रन्थेषु तेषां संग्रहः नावलोक्यते । एषु ग्रन्थेषु प्रयोगसाधकत्वस्यैव मूलहेतुत्वेन भाष्यातिरिक्तानामपि वार्तिकानां संग्रहः साधुशब्दनिष्पादनार्थं प्रक्रियाग्रन्थकारैः कृतः । एतदर्थं नैकेषु स्थलेषु अपाणिनीयव्याकरणेभ्योऽपि वार्तिकानि स्वीकृतानि । यथा वामनजयादित्ययोः काशिकायां चान्द्रादिव्याकरणानां प्रभावस्तथैव रूपमालादिप्रक्रिया-ग्रन्थेष्वपि मुग्धबोधद्यपाणिनीयव्याकरणानां प्रभावो दृश्यते । एवं

---

१. डा० रामसुरेश त्रिपाठी - "वार्तिक का स्वरूप" अभि० भा० वर्ष-३ अंक - १ पृ० १२-२१

२. F.KIELHORN - 'Notes on the Mahabhasya' Vol XV pp. 203-211

३. S.P.Chaturvedi - Notes on a vartika and its misplaced occrance in the mahabhasya' p.82

४. डा० वेदपतिमिश्र-व्या० वा० एक स० अध्ययन पृ० ७१-११३

पाणिनीयप्रक्रियाक्रमग्रन्थेषु भाष्यादिग्रन्थोक्तवार्तिकानि न संगृहीतानि। अपितु सर्वत्र अर्थत एवाशयो गृहीतः इति नारायणभट्टमहाभागेन[१] - सुस्पष्टमुक्तम्।

रूपमालादौ नैकेषु स्थलेषु मूलवार्तिकापेक्षया पतञ्जलिप्रणीतवार्तिकव्याख्यापरं भाष्यमेव गृहीतम्। अतएवात्र वार्तिकानि प्रायः इति वक्तव्यम् इति वाच्यम्, उपसंख्यानमित्यादिपदैः सन्नाद्धानि वर्तन्ते। अत्रेदमपि कारणं यत्कात्यायनप्रणीतवार्तिकानां स्वतन्त्रो ग्रन्थ कुत्रापि नोपलभ्यते। अतः वार्तिकस्य स्वरूपादिनिर्धारणे भगवतः पतञ्जलेर्महाभाष्यमेव प्रमाणम्।

रूपमालायां वार्तिकानां स्वरूपं प्रायेण काशिकावद् दृश्यते। परं क्वचित् रूपमालायां काशिकातः भिन्नमपि वार्तिकस्वरूपं लभ्यते। एवं रूपमाला कुत्रचित् काशिकानुसारेण वार्तिकानि निर्दिशति परं सिद्धान्तकौमुद्यादि शब्दान्तरं योजयित्वा वार्तिकाशयं प्रकटीकरोति। यथा -

| | | |
|---|---|---|
| (१) म० भा २/३/२३, का० २/३/२७ | - | निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्। |
| रूपमाला (का० मा०) सू० ८२ | - | निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनमितीष्यते। |
| सि० कौ० सू० ६०८ | - | निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्। |
| (२) म० भा० का० ४/१/४८ | - | गोपालिकादीनां प्रतिषेधः। |
| रूपमाला (स्त्रीप्र० मा०) सू० २२ | - | गोपालिकादौ नेति। |
| सि० कौ० सू० ५०४ | | पालकान्तान्न। |
| (३) म० भा० १/४/४८ | | अभुक्त्यर्थस्य न। |
| का० वृ० १/४/४८ | | वसेरश्यर्थस्य प्रतिषधो वक्तव्यः। |
| रू० मा० (का०) सू० ५७ | | वसेरभोजनार्थस्य नेति। |
| सि० कौ० (का०) सू० ५४४ | | अभुक्त्यर्थस्य न। |

उपर्युक्तवार्तिकावलोकनेनेदं परिज्ञायते यत्रूपमालाकारः काशिकामनुसृत्य कात्यायनवार्तिकं यथास्वरूपं निर्दिशति। तत्र सिद्धान्तकौमुदीकारः शब्दान्तरं योजयित्वा वातिकाशयमाविष्करोति।

महाभाष्ये संवादानुबन्धेन नैके शब्दाः प्रयुक्ताः येषां साधुत्वं मुनित्रयोक्तिभिः कर्तुं न पार्यते। अतएव भाष्योदाहृतप्रयोगसाधुत्वार्थं महाभाष्योत्तरवर्तिवृत्तिग्रन्थेषु प्रक्रियाग्रन्थेषु च वैयाकरणैः नूतनानि वार्तिकानि विरचितानि। तानि प्रमाणभूतानीति पाणिनीयवैयाकरणाः मन्वते। यथा म० भा० ७/३/५१ इसुसुक्तान्तात्कः अथेह कथं भवितव्यम् ?

-दोर्भ्यां चरति दौष्क इति भवितव्यम्। कथम् ?
यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते।

---

१. प्रक्रियासर्वस्वम् (लार्थविशेषखण्डान्ते) पृ० ३१९

"यथास्थितं वार्तिकभाष्यवाक्यं न वृत्तिकारादिभिरप्युपात्तम्।
सा कौमुदी चार्थत एव वक्ति, तथा वदन्तो वयमप्यदोषाः॥"

का० वृ० ७/३/५१,सि० कौ० १२२१ - दोष उपसंख्यानम् । दोर्भ्यां चरति दौष्कः ।

रू० मा० (त० मा०) सू० ५२२ - दोष्णश्चेति ।

यत्र महाभाष्ये द्वे वार्तिके नैकानि वा वार्तिकानि पृथक् पृथक् रूपेण पठितानि । तत्र काशिकायां रूपमालादि प्रक्रियाग्रन्थेषु नैकेषां वार्तिकानामेकस्मिन्नेव वार्तिकेऽन्तर्भावः कृतो दृश्यते । यथा -

(१) म० भा० सू० ३/१/१७ - सुदिनदुर्दिनभ्यां च (वा० १) नीहाराच्च (वा० २)

का० वृ० ३/१/१७ - सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम् ।

रू० मा० (ति० म० स० भाग-सू० ४७सुदिनदुर्दिननीहारेभ्यश्चेति ।)

सि० कौ० सू० २६७३ - सुदिनदुर्दिननीहारेभ्यश्च ।

(२) म० भा० २/१/३६ - अर्थेन नित्यसमासवचनम्

का० २/१/३६ - अर्थेननित्यसमासवचनं सर्वलिङ्ता च वक्तव्या ।

रू० मा० (त० स०) सू० ३४६ - अर्थेन नित्यसमासो विशेष्यलिङ्ता चेष्यते ।

सि० कौ० सू० ६९८ - अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति-वक्तव्यम् ।

एवमुक्तविवरणेनेदमप्यवगम्यते यद् बहुत्र स्थेलषु सिद्धान्तकौमुद्यां रूपमालायाः प्रभावो वर्तते । क्वचिद् महाभाष्यं प्रमाणीकृत्य काशिकायां सिद्धान्तकौमुद्यां च नैकानि वार्तिकानि पठितानि,परं रूपमालायां एतादृशस्थलेषु एकमेव वार्तिकमुपलभ्यते । यथा -

का० ४/१/४९
(१) हिमारण्ययोर्महत्वे ।
(२) यवाद् दोषे ।
(३) यवनाल्लिप्याम् ।

सि० कौ० सू० ५०५
(१) हिमारण्ययोर्महत्वे । (वा० २४७२)
(२) यावद्दोषे ।(वा० २४७३)
(३) यवनाल्लिप्याम् । (वा० २४७५)

रूपमाला (स्त्री) प्र० मा० सू० २३) संघे महत्वे दोषे च लिपौ चार्थे हिमादिकात् ।

भाष्योत्तरकालिकेषु वृत्तिग्रन्थेषु प्रक्रियाग्रन्थेषु च महाभाष्यस्य बहूनां वार्तिकानामर्थः सूत्रकारस्यापि कथमभिमतस्तत् विविच्य ज्ञापकेन वचनसामर्थ्येन वा वार्तिकानां वैयर्थ्यं प्रतिपादितम् यथा "आङ्मर्यादावचने" (१/४/८९) इति सूत्रस्य "आङ्मर्यादायां कर्मप्रवचनीयसंज्ञो भवतीत्यर्थः। अत्र महाभाष्ये "आङ्मर्यादाभिविध्योरिति वक्तव्यम् ।" इति वचनं विद्यते । आङिति मर्यादाभिविध्योः कर्मप्रवचनीयसंज्ञको भवतीति तात्पर्यम् । परं काशिकायां सूत्रोक्तेन वचनमिति पदेनैव "वचनग्रहणादभिविधिरपि गृह्यते" इति व्याख्यानं दृश्यते । रूपमालायामपि "अभिविधावपि" इत्युक्त्वा काशिकैवानुसृता । सिद्धान्तकौमुद्यान्तु "वचनग्रहणादभिविधावपि" इति काशिकावदेव व्याख्यानम् । एवं रीत्या ज्ञापकादित्युक्त्या पतञ्जलेरपि वार्तिकानि रूपमालायां सिद्धान्तकौमुद्यां च प्रत्याख्यातानि ।

काशिकादौ पठितानि वार्तिकानि कुत्रचित् रूपमालायां पृथक् पृथक् विभज्य निर्दिष्टानि । यथा -

| | |
|---|---|
| का० ३/१/९६ | - वसेस्तव्यत् कर्तरि णिच्च । |
| सि० कौ० सू० २८३४ | - वसेस्तव्यत्कर्तरि णिच्च (वा० १९९०) |
| सू० मा० (क० मा०) सू० १७७ | - वसेः कर्तर्यपि । वसेतव्यो णिच्च स इति । |

रूपमालादावनेकेषु स्थलेषु सूत्रव्याख्यानपराणां वार्तिकानां वृत्तावेवान्तर्भावः कृतः । परं वृत्तावेवान्तर्भावेण छात्रैः मूलभूतं वार्तिकस्वरूपं न ज्ञायते । एतादृशस्थलेषु वार्तिकानां स्वरूपं विनष्टप्रायमेव । एतदर्थं दिङ्मात्रमत्रोदाह्रियते -

यथा - महाभाष्ये "क्ङिति च" (१/१/५) इति सूत्रे "क्ङिति प्रतिषेधे तन्निमित्तग्रहणमि"ति प्रथमं वार्तिकम् । भगवता पतञ्जलिनेदं -क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । क्ङिन्निमिते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् इत्येवं रूपेण व्याख्यातम् । काशिकावृत्तावस्य सूत्रस्यायमर्थः प्रतिपादितः - निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । रूपामालायामपि काशिकानुसारि-व्याख्यानुपलभ्यते । अत्र काशिकायां "गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते" इति वचनमधिकमुपलभ्यते । परन्तु सिद्धान्तकौमुद्यां साक्षाद् वृत्तावेव तस्यान्तर्भावो दृश्यते । यथा -

गित्कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः ।

एतादृशान्यन्यान्यपि स्थलानि वर्तन्ते । यत्र वृत्तावेव वार्तिकानामतन्तर्भाव कृतः ।

रूपमालायां प्रायेण पञ्चवार्तिकानि ईदृशानि संग्रहीतानि यानि महाभाष्ये नोपलभ्यन्ते । परं तेषां मौलिकं स्वरूपं काशिकायामुपलभ्यन्ते । सुस्पष्टयेऽधस्ताल्लिख्यन्ते -

| | |
|---|---|
| (१) का० २/३/७१ | - उभयप्राप्तौ कृत्ये षष्ठ्या प्रतिषेधो वक्तव्यः |
| रू० मा० (का० सू० १२३) | उभयप्राप्तो कृत्ये षष्ठी नेति । |
| (२) का० ४/३/८ | - आदेश्चेति वक्तव्यम् । |
| रु० मा० (त० मा० सू-२१) | आदेश्चेति । |
| (३) का० ३/२/१७२ | - धृषेश्चेति वक्तव्यम् । |
| रु० मा० (कृ० सू० ४१३) | - धृषेश्चेति । |
| (४) का० ५/१/१२६ | - दूतवणिग्भ्यां चेति वक्तव्यम् । |
| रु० मा० (त० मा० सू० १९१) | दूतवणिग्भ्यां चेति । |
| (५) का० ५/२/१०७ | १- रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् २- नगपांशुपाण्डुभ्यश्चेति वक्तव्यम् । |
| रु० मा० (त० सू० २५२) | मुखकुञ्जनगपांशुपाण्डुभ्यश्चेति । |

रूपमालायाः वार्तिकानां पर्यालोचनेनेदं ज्ञायते यदत्र प्रायेण काशिकावृत्तेरेव वार्तिकपाठः स्वीकृतः । परं बहुत्र आचार्यैः विमलसरस्वतीभिः शब्दान्तरैः वार्तिकाशयः प्रतिपादितः । प्रक्रियाग्रन्थेष्वियं रीतिः सर्वत्रावलोक्यते । रूपावतारे प्रक्रियाकौमुद्यादौ च वार्तिकेषु पाठभेदो

वर्तते। सुस्पष्टये चात्र रूपमालायाः सिद्धान्तकौमुद्याश्च कतिपयःवार्तिकानि लिख्यन्ते। यतः प्रक्रियाग्रन्थेषु सिद्धान्तकौमुद्येव चरमा सर्वाङ्गपरिपूर्णा चास्ति। अनया रीत्या रूपामालायाः वातिकेषु सिद्धान्तकौमुदीतः कुत्र पार्थक्यमित्यवगन्तुं शक्यते -

| रूपमाला | सूत्राङ्कः | सि० कौमुदी |
|---|---|---|
| १- सन्धिमा० सू० ३४ - ऋकारलृकारयोःसावर्ण्यं वक्तव्यम्। | सू० १२ - | ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् (वा० १५०) |
| २- सा० मा० सू० - ३६ यणःपरस्य मयो द्वित्वं यणस्तु नेति वक्तव्यम् | सू० ५४ - | यणो मयो द्वे वाच्ये (वा०५०१८) |
| ३- सन्धिमा० सू० ३८-प्रौढादौ चावर्णा - दिचि सह वृद्धिरिति वक्तव्यम्। | सू० ७३- | प्रादूहोढोढ्येषैष्येषु (वा० ३६०५) |
| ४- (सन्धिमा० सू० ३८) स्वादेरो - रिण्योर्वृद्धिर्वक्तव्या | सू० -७३ | स्वादीरेरिणोः। |
| ५- सन्धिमा० सू० ४२ शकन्धवादौ च वक्तव्यम् | सू० -७८ | शकन्ध्वादिषु पररूपं वाच्यम्। |
| ६- ( " सू० ४२)नियोगवर्जमेवे चावर्णात् परतः पररूपं वक्तव्यम् | सू० ७८ - | एवे चानियोगे। |
| ७- (सन्धिमा० सू० ६७) प्रत्यये नित्य- मिष्यते | सू० ११६ - | प्रत्यये भाषायां नित्यम्। |
| ८- ( " " १०६) रूपरात्रिरथन्त - रेष्वह्नो रुत्वोपसंख्यानम्। | सू० १७२ - | रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्। |
| ९- (सन्धिमा० १०६) अहरादीना - मुपसंख्यानम्। | सू० १७२ - | अहरादीनां पत्यादिषु वा रेफः। |
| १०- (अज. मा० सू० १७९) वृद्ध्यौत्व- गुणेभ्यो नुम्पूर्वविप्रतिषेधेन। | सू० ३२० - | वृद्ध्यौत्वतृज्वद्भा- वेभ्यो नुम् पूर्वविप्रति षेधेन। |
| ११- (हल० मा० सू० २२३) षण्ढानां नलोपो - वेति वक्तव्यम्। | सू० ४४२ - | सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः। |
| १२- (ह० मा० २२४) हश्प्रत्याहारात्परस्य वनो निषेधोक्तिः। | सू० ४५७ - | वनो न हश इति वक्तव्यम्। |
| १३- (सर्व० मा० सू० २९६) तीयस्य वा | सू० २२६ - | विभाषा-प्रकरणे तीयस्य |

| | | |
|---|---|---|
| ङित्सु सर्वनामत्वोसंख्यानम् | | ङित्सूपसंख्यानम् । |
| १४- (स्त्री० ) मा० सू० ७) नञ्स्नञीकक्त्तीरुण-<br>तुलनानामुपसंख्यानम् । | - सू० ४७१ - | नञ्स्नञीकक्ख्युत<br>रुणत लुनानामुपसं-<br>ख्या नम् । |
| १५- (स्त्री० मा० २२) गोपालिकादौ नेति । | सू० ५०५ | पालकान्तान्न । |
| १६- (" " २३) संघे महत्वे दोषे च<br>लिपौ चार्थे हिमादिकात् । | सू० ५०६ | हिमारणययोर्महत्वे,<br>यवाद्दोषे, यवना-<br>ल्लिप्याम् । |
| १७- (" " २३) मातुलस्य वेति ।<br>उपाध्यायस्यानुग्वेति । | सू० ५०६ | मातुलोपाध्याययो-<br>रानुग् वा । |
| १८- (स्त्री० मा० ३३) अङ्गगात्रकण्ठपुच्छेभ्यश्चेति । | सू० ५१२ | अङ्गगात्रकण्ठेभ्यो<br>वक्तव्यम्<br>पुच्छाच्च । |
| १९- (का० मा० सू० ५७) वसेरभोजनार्थस्यवेति । | सू० ५४४ | अभुक्त्यर्थस्य न । |
| २०- (का० भा० सू-८२) निमित्तकारणहेतुषु सर्वासां-<br>प्रायदर्शनमितीष्यते | सू० - | निमित्तपर्यायप्रयोगे<br>सर्वासां प्रायदर्श-<br>नम् । |
| २१- (का० मा० सू० ८४) क्रियया यमित्यपिवक्तव्यम् । | सू० - ५७० - | क्रियया यमभिप्रैति<br>सोऽपि सम्प्रदानम् । |
| २२- (का० मा० सू० ९७)ल्यब्लोपे पञ्चमी | सू० ५९४- | ल्यबलोपे पञ्चम्य-<br>धिकरणे च । |
| २३- (" " १०५) निमित्तात्कर्मयोगे सप्तमी । | सू० ६३३ | निमित्तात्कर्मयोगे । |
| २४- (ति० मा० सू० ३६७) एकादेशे कर्तव्ये<br>सिज्लोपो नाऽसिद्ध इष्यते । | सू २२६६ - | सिज्लोप एकादेशे<br>सिद्धो वाच्यः । |
| २५- (ति० मा० सू० ३९३) स्पृशमृशतृपदृपः<br>सिज्वेति वक्तव्यम् । | सू० २४०७- | स्पृशमृशतृपदृपां<br>च्लेः<br>सिज्वा वाच्यः । |
| २६- (स० भा० सं० ३५)मान्तादव्ययेभ्यश्च<br>क्यचो निषेधो वक्तव्यः । | सू० २६६० - | मान्तप्रकृतिसुबन्ता<br>दव्ययाच्च क्यच् न । |
| २७- (स० भा० सू० ४२) ओजसोऽप्सरसो नित्यं | सू० २६६५ - | ओजसोऽप्सरसो-<br>नित्य |

पयसस्तु विभाषा । मितरेषां विभाषया ।

२८- (स० भा० सू० ६४) अर्थापवेदाभ्यां च । सू० २६७७ - अर्थवेदयोरप्यापुग्व क्तव्यः ।

२९- (परस्मै० सू० १३१) आस्थः प्रतिज्ञाने सू० २६८९ - उपाङः प्रतिज्ञायामुप- संख्यानम् ।

३०- (" " १३२) उपाद्देवपूजासंगतिकरण - पथिष्विति । सू० २६९२ - उपाद्देवपूजासंगति- करणमित्रकरणपथि- ष्विति

३१- (कृ० मा० १७७) वसेः कर्तर्यपि वसेस्तव्यो णिद्वच्च स इति । सू० २८३ वसेस्तव्यत्कर्तरि णिच्च

३२- (कृ० मा० सू० २७३) आदिकर्मणिनिष्ठेति सू० ३०५२ - आदिकर्मणि निष्ठा वक्तव्या ।

३३- (कृ० मा० सू० ३३२)पटिवन्दिविदिभ्यश्च सू० ३२८४ - घट्टिवन्दिविदिभ्यश चेति वाच्यम् ।

३४- (त० मा० सू० ५२२) दोष्णश्चेति । सू० १२२१ - दोष उपसंख्यानम् ।

३५- (" " ५४५) गजाच्चेति । सू० १२५१ गजसहायाभ्यां चेति वक्तव्यम् ।

३६- (" " ५४८)अह्नः समूहे वाच्ये सू० १२५१ - अहन्ः खः क्रतौ ।

३७- (त० मा० सू० ४) वा नामधेयमिति । सू० १३३८ - वा नामधेयस्य वृद्ध- संज्ञा वक्तव्या ।

३८- (त० मा० सू० २१) आदेश्चेति, अन्तपश्चादग्रेभ्यो डिमच् सू० १३९१ -,अग्रादिपश चाड्डिमच्,अन्ताच्च

३९- (त० मा० सू० ३०)अजादिप्रत्ययप्रसङ्गे गोर्यदति । सू० १०७७ सर्वत्र गोरजादिप्रसङ्गे यत् ।

४०- (त० मा० सू० ४३) अध्यात्मादिभ्यश्चेति सू० १४३७ - अध्यात्मादेष्ठञिष्य ते ।

४१- (" " ७८) हरीतक्यादिषु - वचनस्य युक्तवद्भावो नेष्यते । सू० १५४६ - हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् ।

४२- (त० मा० सू० ७८) फलपाकेभ्यश्च लुबिति । सू० १५४५ - फलपाकशुपामुपसं ख्यानम् ।

| | | |
|---|---|---|
| ४३- (त० मा० सू० - ८७) भावार्थकृदन्तान्निर्वृतमित्यर्थे इमजिति । | सू० १५७७- | भावप्रत्ययान्तादिमज वक्तव्यः । |
| ४४- (त० मा० सू० १४३) वातादिभ्यः शमनकोपनयोरिति । | सू० १७०४ - | वातपित्तश्लेष्मेभ्यः शमनकोपनयोरूपसंख्यानम्, सन्निपाताच्चेति वक्तव्यम् । |
| ४५- (त० मा० सू० १५१) अस्मै चेति । | सू० १७१३ - | चतुर्थ्यर्थ उपसंख्यानम् । |
| ४६- (त० मा० - २५२)मुखकुञ्जनगपांसुपाण्डुभ्यश्चेति । | सू० १९१४ | रप्रकरणे खमुखकुञ्जेभ्य-उपसंख्यानम् । |
| ४७- (त० मा० सू० २५१) हृदयाच्चालुश्चेति । | सू० १९२८ - | हृदयाच्चालुरन्यतरस्याम् |
| ४८- (स० मा० सू० ३६५) अदन्तसमाहारो द्विगुःस्त्रियामिति । | सू० ८२१ - | अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । |
| ४९- (स० मा० सू० ३६७) शाकपार्थिवादीनां मध्यमपदलोपश्चेति । | सू० ७३९ - | शाकपार्थिवादीनां सिद्धये उत्तरापदलोपस्योपसंख्यानम् । |
| ५०- (स० मा० सू० - ४०९) उपमानस्योत्तरपदलोपश्चेति । | सू० ८३० | सप्तम्युपमानपूर्वपदस्योत्तरलोपश्च । |
| ५१- (स० मा० -४०९) प्रपतितादौ वेति | सू० ८३० | प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । |
| ५२- (" " सू० ४२०) विशेष्यात् प्रियं वेति । | सू० ८९८ | वा प्रियस्य । |
| ५३- (स० मा० सू० ४२५) ऋतुनक्षत्राणामानुपूर्व्यमिति | सू० ९०५ | ऋतुनक्षत्राणां समानक्षराणामानुपूर्व्येण । |
| ५४- (स० मा० सू० ४३८) द्विगुप्रादिसमासयोर्नेति । | सू० ८१२- | द्विगुप्राप्तापन्नालम्पूर्वतिसमासेषु-प्रतिषेधो वाच्यः । |
| ५५- (स० मा० सू० ४४५) कृष्णोदकपाण्डुपूर्वायाः संख्यापूर्वयाश्च भूमेः । | सू० ९४३ - | कृष्णोदक् पाण्डु-संख्या-पूर्वायाः भूमेरजिष्यते |
| ५६- (स० मा० -५०९) देवानां प्रियामुष्यायणोदेश्चोपसंख्यानम् | सू० ९७९- | देवानाम्प्रिय इति च मूर्खे |

| | | |
|---|---|---|
| ५७- (स० मा० सू० ४७०) नेतुर्नक्षत्रपूर्वादिति | सू० ८५४- | नेतुर्नक्षत्रे अब्वाच्यः |
| ५८- (स० मा० -सू० ४६२) संख्यातादव्ययादेस्तत्पुरुषाट्टजिति | सू० ८५१- | संख्यायास्तपुरुषस्य वाच्यः |
| ५९- (स० मा० -५०९) संज्ञायां शुनः शेपदिवोदासाद्युसंख्यानम्। | सू० ९७९ | शेपपुच्छलाङ्गूलेपुशुनः |
| ६० - (स० मा० सू० ५२४) अष्टाकपालं हविरित्यादौ चैकादेशेति चेष्यते | सू० ८०७ - | अष्टनःकपाले हविषि |

विशेष :- (अत्र पं० केशवदेवपाण्डेयकृत हिन्दीव्याख्योपेतायाः मोतीलाल बनारसीदास-वाराणसीतः प्रकाशितायाः रूपमालायाः, चौखम्बा संस्कृतसिरीज आफिस, वाराणसीतः प्रकाशितायाः पं० गोपालशास्त्रीनेने सम्पादितायाः सिद्धान्तकौमुद्याश्चाश्रयणं विहितम्।)

सिद्धान्तकौमुद्यां ८३६ वार्तिकानि सन्ति। -

परं - रूपमालायां ग्रन्थकृता १७४ वार्तिकान्येवोद्धृतानि। तेषु १०८ वार्तिकानि प्रायेण रूपमालायां सिद्धान्तकौमुद्यादौ च समानरूपेणोपन्यस्तानि।

रूपमालामुपन्यस्तो गणसूत्राणां पाठोऽपि वार्तिकानां स्वरूपपरिज्ञाने विषमां समस्यामुपस्थापयति। भाण्डारकरप्राच्यविद्याशोध-संस्थान-पुण्यपत्तनतः प्रकाशिते 'श्रीधरशास्त्रिपाठकः, सिद्धेश्वरशास्त्रि' विद्वद्द्वयसङ्गृहीते "पाणिनीयसूत्रपाठस्य तत्परिशिष्टग्रन्थानां च शब्दाकोशाः" इत्यस्मिन् ग्रन्थे ७१५ पृष्ठतः ७१८ पृष्ठपर्यन्तमन्तर्गणसूत्राणां सङ्कलनं वर्तते। परन्त्वत्र बहूनि पाणिनिसूत्राणि कात्यायनवार्तिकानि चान्तर्गणसूत्रत्वेनोपन्यस्तानि। यथा - "अन्तरं बहिर्योगोपसंख्यानयोः" (१/३/३६) "क्त्वातोसुन्कसुनः" (१/१/४०) इत्यादीनि। एवं काशिकायां कोशग्रन्थे च (८/४/३९) सूत्रे "आचार्यादणत्वं चे" ति वचनं गणसूत्रत्वेन निर्दिष्टम्। परं बालमनोरमाकारमतेन वार्तिकमिदम्। एवं वार्तिकानां गणसूत्राणां च विषये विदुषामैकमत्यं नास्ति।

रूपमालायामपि षड्वार्तिकानि एवंविधानि उद्धृतानि वर्तन्ते।

| **रूपमालायाम्** | **सिद्धान्तकौमुद्याम्** |
|---|---|
| १- (त० मा० सू० १०) देवस्य च। | सू० १३२६- देवस्य च (ग० सू० ९०) |
| २- (त० मा० सू० २३) संवत्सरात्फलपर्वणोरेवेष्यते। | सू० १३८७- संवत्सरात्फलपर्वणोः। (ग० सू० ९२) |
| ३- (त० मा० सू० २४२) एकाच्चेति | सू० १८९५- एकाचः (ग० सू० ११३) |
| ४- (" " २४३) वातस्योच्च वेति। | सू० १९०४- वातदन्तबलललाटानामूङ् |

च ।
(ग० सू० ११५)

| | |
|---|---|
| ५-(" " २४६) लक्ष्म्या अच्चेति । | सू० १९०७- लक्ष्म्या अच्च (ग० सू० १२१) |
| ६-(स० मा० सू० ३७७) आख्यातमाख्या - तेन क्रियासातत्ये । | सू० ७४५- आख्यातमाख्यातेन क्रिया सातत्ये (ग० सू० २०) |

## (ग) श्लोकवार्तिकानां कारिकाणां च समीक्षणम्

पाणिनीयव्याकरणपरम्परायां महाभाष्ये काशिकावृत्तौ, रूपावतारे, रूपमालायां कौमुद्यादिप्रक्रियाग्रन्थेषु च नैकानि श्लोकरूपाणि सूत्रव्याख्यानपराणिवार्तिकान्युपलभ्यन्ते । इमानि श्लोकवार्तिकानीत्यभिधीयन्ते । श्लोकवार्तिकानां बहवः प्रणेतारः सन्तीति महाभाष्यादधिगतं भवति । भगवता भाष्यकारेण इमानि वार्तिकानि तेषां भिन्नप्रणेतृत्वं दर्शयितुं "एष एवार्थ" अपर आह इत्यादिपदैरुपन्यस्तानि । कैयटनापि[1] २/४/३६ इतिसूत्रे प्रदीपे "जग्धिविधि० " इत्यस्य प्रणेता व्याघ्रभूतिरिति स्वीकृतम् । एषु बहूनि श्लोकवार्तिकानि कात्यायनविरचितानि सन्तीति प्रतीयते । भाष्यकृता 'कश्चात्र विशेषः' इत्युपक्रम्य 'अत उत्तरं पठति' इत्यवतरणिकानन्तरं प्रायेण कात्यायनप्रणीतश्लोकवार्तिका नामेव पाठो विहितः । यथा - ८-२-५८ सूत्रे अत उत्तरं पठति -

**"यस्य विदेः श्नशकौ तपरत्वे तनवचने तदु वा प्रतिषेधौ ।**
**श्यन्विकरणान्नविधिश्छदितुल्यः लुग्विकरणो वलिपर्यवपन्नः ।।"**

एवं ७/४/४६ इति सूत्रे -

"तान्ते दोषो दीर्घत्वं स्यात् दान्ते दोषो निष्ठा नत्वं धान्ते दोषो धत्वप्राप्तिः थान्तेऽदोषस्तस्मात्थान्तः ॥[2]"

अत्र वाक्यवार्तिकानामिव तिङन्तपदाऽभावो दृश्यते । परं महाभाष्ये तटटीकाग्रन्थेषु च कात्यायनस्य श्लोकवार्तिकप्रणेतुश्च पार्थक्येनोल्लेखात् श्लोकवार्तिककारः कात्यायनादन्य एवेति निर्णीयते । यथा ३/२/११८ सूत्रे महाभाष्ये -

**"स्मदादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति ।**
**न स्म पुराद्यतन इति ब्रुवता कात्यायनेनेह ।।" इत्युक्तम्**

अत्रैव उद्योतटीकायां नागेशेनोक्तम् - वार्तिकारः कात्यायनः । श्लोकवार्तिककारस्त्वन्य एवेति भावः[3] ।

---

१. द्र० म० भा० प्रदीपः २/४/३६

२. द्र० म० सू० ८/२/५८,७/४/४६

३. द्र० म० भा० उद्द्योतः ६/४/२२

इत्थं महाभाष्यादिग्रन्थेषु सर्वाणि श्लोकबद्धानि वार्तिकानि श्लोकवार्तिका न्येवेति न भ्रमितव्यम् । येषु महाभाष्ये व्याख्याभाष्यमुपलभ्यते तान्येव श्लोकवार्तिकानीत्युच्यन्ते । यत्र च व्याख्याभाष्यस्याभावो दृश्यते तानि प्रायः पतञ्जलिप्रणीतानि सन्ति । तत्र यस्य श्लोकवार्तिकस्य भाष्यान्ते सम्पुटीकरणं न विद्यते, यस्य पूर्वेण वार्तिकेन सह कोऽपि सम्बन्धो न वर्तते, यच्च व्याख्यातृभिः संग्रह श्लोकत्वेन निर्दिष्टो वर्तते तत्सर्वं महाभाष्यकृत्प्रणीतमित्येतत् डा० रामसुरेश त्रिपाठिमहाभागैः "श्लोकवार्तिक तथा अन्य वार्तिक" इति स्वकीये शोधपत्रे निर्णीतम्[1] ।

महाभाष्यश्लोकवार्तिकानां विषये डा० कीलहार्न, डा० गोल्डस्टूकरादिभिः विद्वद्भिः स्वीयशोधपत्रेषु विस्तरेण विचारः कृतः । अतस्तत्सर्वं तत एवाधिगन्तव्यम् । अथेदानीं रूपामलायां यानि श्लोकवार्तिकानि कारिकाश्च विद्यन्ते, तेषां विषये संक्षेपतः किञ्चिदुच्यते -

क्वचित् रूपमालायां महाभाष्यस्थानां केषांचित् श्लोकवार्तिकानां पाठ उद्धृतः । यथा रूपमालायां तिङन्तमालारम्भे निगदितम् -

भ्वादय इति सन्धौ युक्ते - "भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते" इति वृद्धः ।

महाभाष्येऽपि[2] "भूवादयो धातवः" (१/३/१) इत्यत्र "भूवादयः" इत्यस्मिन् पदे यदि संहितया पाठस्तर्हि "भ्वादयः" इति यणादेशेन भवितव्यम् । अथ असंहितया पाठस्तर्हि "भू आदयः" इति भाव्यम् । न कदाचिद् भूवादय इति ।

कुतोऽयं वकारः ?

**"भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।" इति पाठो वर्तते ।**

अतो "भूवादयः" इत्यत्र वकारो महाभाष्यकारमतेन श्लोकवार्तिककारमतेन वा मङ्गलार्थं प्रयुक्त इति वेदितव्यः । परमस्य श्लोकवार्तिकस्य पादपूरणार्थं "भूवादयो धातवः" इत्यस्य वृत्यन्तरमाश्रित्य काशिकाकृद्भ्यामधोलिखिता द्वितीया पङ्क्तिः विरचिते त्यनुमीयते भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ।[3] इति ॥

स्वपूर्ववर्तिनामाचार्याणां श्लोकवार्तिकानि शब्दान्तरमाश्रित्य रूपमालायां संगृहीतानि । यथा रूपामालायां "तस्य परमाम्रेडितम्" ८/१/२ इति सूत्रे सन्धिविषयकं श्लोकवार्तिकमिदं पठितम् -

**संहितैकपदेनित्या नित्याधातूपसर्गयोः ।**
**सूत्रेष्वपि तथैव स्यादन्यत्र तु विवक्षया ॥**

एवं सिद्धान्तकौमुद्यामपि २२३२ सूत्रे भट्टोजिदीक्षितेन कारिकेयं पठिता -

---

१. "श्लोक वार्तिक तथा अन्य वार्तिक" प्राच्यप्रज्ञा वर्ष - २ अङ्क १ पृ० ३-४

२. म० भा० सू० १/३/१

३. काशिकावृत्तिः १/३/१

**संहितैकपदे नित्या नित्या धातूपसर्गयोः ।**
**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥**

सिद्धान्तकौमुदीटीकाकारेण विदुषा वासुदेवदीक्षितेन बालमनोरमायां कारिकेयं हरिप्रोक्तेति कथितम्[१] । परं साम्प्रतमियं कारिका भर्तृहरिविरचिते वाक्यपदीये नोपलभ्यते । अत एवेयं कारिका परम्पराप्राप्ता एव। रूपावतारेऽपि कारिकेयं समानरूपेण वर्तते[२] । अतोऽवश्यं रूपमालायां कौमुद्यादौ च परम्पराप्रभाव इत्यनुमीयते ।

एवमेव रूपमालायां "ते प्राग्धातोः" (।-४८०) इति सूत्रे विमलसरस्वतीभिः-

**"उपसर्गबलेनान्योऽप्यर्थो धातुभिरुच्यते ।**
**यान्ति चार्थानुसारेण सकर्मत्वमकर्मकाः ॥"**

इति कारिका पठिता । रूपावतारे तु -

**"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते**
**प्रहाराहारसंहारविहारपरिहारवत् ॥" इति कारिका[३] वर्तते ।**

सिद्धान्तकौमुद्यामपि २२३२ सूत्रे रूपावतारसदृश एव पाठो दृश्यते । बालमनोरमाकारमतेनेयमपि कारिका भर्तृहरिप्रणीता परमेतस्याः पाठो वाक्यपदीयेऽनुपलब्ध एव । वाक्यपदीये त्वधोलिखितायाः कारिकायाः पाठः साम्प्रतमुपलब्धः । यस्या रूपमालोक्तकारिकया सह सादृश्यं वर्तते -

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥**[४]

रूपमालायामाचार्यैः विमलसरस्वतीभिः क्वचित् महाभाष्यस्य श्लोकवार्तिकान्यर्थत अनूद्य कारिका विरचिताः । यथा कृदन्तमालायाम् "उणादयो बहुलम्" ३/३/१ इति सूत्रे कारिकेयं वर्तते -

**लक्ष्यानुसारेणोन्नेया अनुबन्धा उणादिषु ।**
**बहुलोक्त्या प्रसाध्यानि तेषु कार्यान्तराणि च ॥**

परं सिद्धान्तकौमुद्यां च महाभाष्यस्य श्लोकवातिकमिदमविकलेनोपन्यस्तम् -

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥**[५]

रूपमालायां ग्रन्थकारः प्रक्रियास्मरणाय सुस्पष्टये च रूपभेदान् कारिकया प्रस्तौति । क्वचिच्च स कारिकया सूत्रार्थमुपस्थापयति क्वचित् मतान्तरं सङ्गृह्णाति । तथा हि -

---

१. द्र० बा० म० सू० २२३२

२. रूपा० भाग - १ (संहितावतारे) पृ० ६

३. रूपा० भाग - २ पृ० १०

४. वाक्यपदीयम् ३/८८

५. द्र० प्र० कौ० भाग ३ पृ० ५५९, सि० कौ०सू० ३१६९

हाहाहूहू सखस्तस्य शसि हाहानधातुतः ।
ङयि हाहे ओसि हाहौरामि हाहाम् गुणश्चङौ ॥[१]

अच्व च घेर्ङि.तीत्यादिः पूर्वोऽपीष्टो नुमेवतु ।
नुमोऽचिरऋतः सूत्रात्क्रोष्टुस्तृज्वत् विधेश्च नुट् ॥[२]

इकः षण्ढेऽपि सम्बुद्धौ गुणो माध्यन्दिनेर्मते ।
त्रिधा चोशनसो रूपं सान्तं नान्तमदन्तकम् ॥[३]

गोशब्दे तपरत्वोक्तेरोदन्तस्य च सङ्ग्रहः ।
ह्रस्वादेशान्तसंत्यागः सिद्धा द्यौश्चित्रगुस्ततः ॥[४]

धने ख्याते च वित्तोक्तिः विन्दतेर्विन्नमन्यथा ।

वित्तेर्विन्नं च वित्तं च विद्यतेर्विन्नमेव च ।
वेत्तेस्तु विदितं रूपं विदिष्वेवं व्यवस्थितिः ॥[५]

ग्रहो ग्राहोच्छ्रयोच्छ्रायोद्गाराः शब्दस्य विस्तरः ।
ततोऽन्यस्य नु विस्तार इत्यादौ तु विशेषगाः ॥[६]

रूपमालाकृता बहुषु स्थलेषु सूत्रादिकमनुक्त्वैव कारिकाभिः प्रयोगाणां सिद्धिः दर्शिता । एतादृशस्थलेषु छात्राणां स्मरणसौविध्यं वर्तते । तथा हि- (स्त्रीप्रत्ययमालायाम्)

पिशङ्गी शवली काली कल्माषी नित्यमिष्यते ।
शोणी शोणेति वा नीली चौषधिप्राणिनोर्मता ॥

लोहिता लोहिनीत्यादौ तस्य नोङीप् वा भवेत् ।
एतः कर्बुरवाच्येव श्वेतः श्वेतार्थकस्तथा ॥

हरितो रोहितश्चैवं पतिश्वेतादयो न तु ।
असिक्नी च पलिक्नी चेत्यसिता पलितेति वा ।
भार्या पाणिगृहीती स्यात् कामुकी मैथुनार्थिनी ॥

अयं ग्रन्थकारः कर्मप्रत्ययव्यवस्थां सोदाहरणं श्लोकेन सङ्गृह्णाति- यथा -

---

१. रु० मा० भाग १ पृ० ५७

२. रु० मा० भाग १ पृ० ६२

३. रु० मा० भाग १ पृ० ६३

४. रु० मा० भाग १ पृ० ७०

५. रु० मा० भाग - ३पृ० ८७

६. रु० मा० भाग - ३पृ० ९१

**कृषादिषु प्रधाने स्युरप्रधाने दुहादिषु ।**
**ण्यन्तेष्वण्यन्तकर्त्राख्ये कर्मण्यर्थे तङादयः ॥**

**पन्थानं पृच्छयते पान्थः पुष्पाण्युच्चीयते तरुः ।**
**ग्राममाकृष्यते शाखा पाठ्यन्ते वटवः स्मृतिम् ॥**[१]

सिद्धान्तकौमुद्यामप्येवं कर्मप्रत्ययव्यवस्था उक्ता । तथा हि (२६६५ सूत्रे)

**"गौणे कर्मणि दुह्यादेः प्रधाने नीहकृष्वहाम् ।**
**बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥**
**प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥"**

भट्टोजिदीक्षितमहाभागैरुद्धतोऽयं सार्धश्लोकः "अकथितं च" इतिसूत्रस्थवार्तिक-भाष्यसंग्रह इति तत्रैव बालमनोरमाकारेणोक्तम्[२] ।

रूपमालायां क्वचित् कात्यायनेन पतञ्जलिना अन्यैर्वा वैयाकरणैः" विरचितानां वार्तिकानामशयमेकत्र सङ्कलय्य श्लोकवार्तिकं विरचितम् । यथा महाभाष्ये २/३/२ सूत्रे "समयानिकषाहायोगेषूपसंख्यानम् । अपर आह-द्वितीयाविधानेऽभितः परितः समया निकषा-ध्यधिधिग्योगेषूपसङ्ख्यानम् । अपर आह- उभसर्वतसो कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इति व्याख्यानपुलभ्यते । काशिकायां सिद्धान्त-कौमुद्यां च "अभितः परितः समया निकषा हाप्रतियोगेऽपि" इति पाठो वर्तते । परं रूपमाला-याम् -

**"समयानिकषाहाधिक्परितः सर्वतोऽभितः ।**
**तथोभयत इत्येतैर्वीप्सितोपर्यध्यधिभिः ॥"**[३]

**इतिश्लोकवार्तिकं प्रणीय समयादियोगेषु**
**द्वितीयायाः साधुत्वं प्रतिपादितम् ।**

परवर्तिभिः विद्वद्भिः रूपमालोक्तकारिकाः किचित्स्वरूपं परवर्त्य स्वीयग्रन्थेषु उद्धृताः । यथा रूपमालायाम् संज्ञामालारम्भे -

"वर्णसमाम्नाये हयवरट् इतिसूत्रस्थहकारेणैव प्रत्याहारप्रयोजन सिद्धे हलितिसूत्रे पुनर्हकारग्रहणप्रयोजनं किमर्थं,अनुबन्धेषु द्विणकारग्रहणस्य च किं प्रयोजनमित्यत आह -

**हकारः पठितोऽत्र द्विरटि शल्यपीच्छता ।**
**अण् परेण णकारेणाणुदित्सूत्रे परं मतः ॥**

एवं वरदराजाचार्येण मध्यसिद्धान्तकौमुद्यामुक्तकारिकायाः पूर्वार्द्धमाधृत्य कारि-केयं विरचिता । यथा -

---

१. रू० मा० भाग - २ पृ० २७

२. द्र० बा० म० सू० २६६५

३. र० मा० ( कारकमालायाम् ) पृ० ३१

**हकारो द्विरुपात्तोयमटि शल्यपि वाञ्छता ।**
**अर्हेणाधुक्षदित्यत्र द्वयं सिद्धं भविष्यति ।।**[१]

अथ च "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" (७/१/१४) इति सूत्रे" यं वृक्षरूपार्थं निमित्तीकृत्य पीलुशब्दः पुंस्त्वं लभते, तदर्थस्य नपुंसकेऽसत्वात् फलार्थत्वेन प्रवृत्तिभेदेन स्वरूपसादृश्येऽपि भाषितपुंस्कतां न लभते" इत्यर्थमुपादाय रूपमालाकरेण द्वे कारिके विरचिते ।

यथा हि -

**इह भाषितपुंस्कत्वं क्लीबे तुल्यनिमित्तता ।**
**शुचित्वं निर्मलत्वं तन्निमित्तमुभयोः समम् ।।**

**पीलुर्वृक्षः पीलुफलं पीलुने न तु पीलवे ।**
**वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ।।**[२]

तथैव मध्यकौमुद्यामपि द्वे कारिके विनिर्दिष्टे । यथा -

**यन्निमित्तपुपादाय पुंसि शब्दः प्रवर्तते ।**
**क्लीबवृत्तिदेव स्यादुक्तपुंस्कं तदुच्यते ।।**

**पीलुर्वृक्षः, फलं पीलु पीलुने न तु पीलवे ।**
**वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ।।**[३]

एवमुक्तविवेचनेन मध्यसिद्धान्तकौमुद्यामपि रूपमालायाः प्रभावो ज्ञातुं शक्यत इति ।

"ननु यथा वर्णसमाम्नाये पूर्वमकारस्य पाठो दृश्यते तथैव भगवता पाणिनिना "ऊकालोऽज्झस्वदीर्घप्लुतः" इत्यस्य स्थाने "अकालोऽजह्रस्वदीर्घप्लुतः। इत्येव पठितव्यम् ।" इत्याशङ्कां परिहर्तुं रूपमालाकारेण कारिकैपा विरचिता -

**निरन्तराः क्रमस्थाश्च ह्रस्वदीर्घप्लुतास्त्रयः ।**
**उवर्णे कुक्कुटरुतौ प्रसिद्धा इत्युकालगीः ।।**[४]

"जिज्ञासवः छात्रा अनायासेनाचां हलां च भेदानवगच्छेयुरि"ति विचार्य ग्रन्थकृता अधोलिखितासुकारिकासु अज्झलां भेदाः निर्दिष्टाः तथा हि -

---

१. म० सि० कौ० पृ० २

२. रु० मा० (अजन्तमाला) पृ० ६२

३. म० सि० कौ० पृ० ९४

४. रु० मा०(संज्ञामाला) पृ० ८ उत्तरवर्तिग्रन्थे प्रक्रियासर्वस्वेऽपि अयमेवाशयो गृहीतः
यथा - क्रमादेकद्वित्रिमात्रा उवर्णा कुक्कुटस्वने ।
प्रसिद्धा इत्युवर्णोक्तौ हेतुमाह प्रसादकृत् ।। प्र सर्व० भाग - १ पृ० ११

**ऋपर्यन्तास्त्रिधा भिन्नाः लृकारो दीर्घवर्जितः ।**
**एचां ह्रस्वा न विद्यन्ते ह्रस्वाद्याश्च पुनस्त्रिधा ॥**

**उदात्तादि प्रभेदेन स शुद्धः सानुनासिकः ।**
**यवलाश्च द्विधा शुद्धसानुनासिकभेदतः ॥**

**स्वह्रस्वादिः स्ववर्ग्यश्च यादेः शुद्धादिको निजः ।**
**सवर्णः स्यान्न रेफस्य सवर्णः कोऽपि नोष्मणाम् ॥**[1]

एतदतिरिक्तं रूपमालाकारेण विविधोदाहरणप्रदर्शनाय काव्यग्रन्थेभ्यश्चापि श्लोका उद्धृताः । तथा हि -

**आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।**
**कोशदण्डसमग्रानां किमेषामस्ति दुष्करम् ॥**[2]

**इदं हि शास्त्रमाहात्म्यं दर्शनालसचेतसाम् ।**
**अपशब्दवदाभाति न च सौभाग्यमुज्झति ॥**[3]
**विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम् ।**
**श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ॥**[4]

रूपमालायाम् - "अकथितं च" इतिसूत्रविषये -

**"दुहिप्रच्छ्युक्तियाच्नार्थाश्चित्राद्या अपि कुत्रचित् ।**
**द्विकर्मकाः धातवः स्युः कृषिनीभृहृञ्[5] वहस्तथा ॥**

**धर्मं ब्रूते जनान्नित्यम् पुष्पाणि चिनुते तरुन ।**
**पणं जयत्यसौ धूर्तान् चौरं शतमदण्डयत् ॥"**

इत्यत्र द्वादशद्विकर्मकधातूनां परिगणनं कृतम्, कतिपयधातूनां चोदाहरणान्यपि दर्शितानि । प्रक्रियाकौमुद्यां तु अधोलिखितश्लोके सप्तदशधातवः परिगणिताः - ।

**दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासुजिकर्मयुक् ।**
**नीहृकृष्मन्थवहदण्डिग्रहमुष्पचकर्मभाक् ॥**[6]

किं चापाणिनीये मुग्धबोधेऽपि आचार्यबोपदेवेन सप्तदशधातूनां परिगणनं कारिकया विहितम् । तद्यथा -

---

१. रु० मा० ( संज्ञामाला ) पृ० ९

२. स० कण्ठा० ( प्रथमपरिच्छेद ) उदा० श्लो०सं० १५२ पृ० १५५

३. स०कण्ठा० ( प्रथमपरिच्छेद ) पृ० १५५ ( उभावपि श्लौकौ काव्यादर्शस्य २/३६१ ३/१५१

४ प्रबोधचन्द्रोदयः ( प्रस्तावनायाम् )

५. भूधातोरत्र पाटे किञ्चित्प्रमाणं नास्ति ।

६. प्र० कौ० सू० ४/१/५१ पृ० ३९१

**याच्नार्थ दुह-चि-प्रच्छ्-रुध-ब्रू-शासजीनीवहः ।**
**हृ-दण्डि-ग्रह-कृष-मन्थ मुञ् पचाद्या धवो द्विढाः ॥**[१]

परं दीक्षितमहाभागेन सिद्धान्तकौमुद्यां कारकप्रकरणस्थश्लोकेन षोडशधातूनामेव परिगणनं कृतम् । तत्र ग्रहेः पाठो न दृश्यते । यथा हि -

**दुहयाच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथमुषाम् ।**
**कर्मयुकस्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥**[२]

तथा च संज्ञामालारम्भे विमलसरस्वतीभिः वर्णसमाम्नायमुद्दिश्य, तत्र णकाराद्यैश्चतुर्दशभिरनुबन्धैर्यथाक्रममेकचत्वारिंशत् प्रत्याहारा भवन्तीति कारिकायामुक्तम् -

**एकस्त्रयः पुनश्चैको वेदा एकस्त्रयस्त्रयः ।**
**एको द्वौ षट् तथेत्येकश्चत्वारः पञ्च षट् च ते ॥**

अत्र भाषावृत्तेः प्रभावो दृश्यते । यथा चोक्तं भाषावृत्तौ पुरुषोत्तमदेवमहाभागेन -

**एकं त्रीणि पुनश्चैकं चत्वार्येकं त्रयं त्रयम् ।**
**एकं द्वे षट् तथैवैकं चतुः पञ्च षडेव च ॥**[३]

## (घ) परिभाषाणां समालोचनम्

"परिभाषा पुनरेकदेशस्था सर्वं शास्त्रमभिज्वलयति ।"[४] (यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति) इति भगवता पत्तञ्जलिना महाभाष्ये परिभाषायाः स्वरूपमुक्तम् । "परितो भाष्यते कार्यमनये"ति व्युत्पत्या" परिभाषापदं निष्पन्नम् । काशिकादिवृत्तिग्रन्थानाधृत्य "अनियमे नियमकारिणी परिभाषा" इति लक्षणमपि प्रसिद्धं वर्तते । परं लक्षणमिदं परिभाषापरिचायकमात्रमेव, इतरव्यावर्तकन्तु नास्ति । अत एव पं० जयदेवमिश्रेण परिभाषेन्दुशेखरस्य विजयाटीकायां परिभाषायाः निष्कृष्टं लक्षणमभिहितम् । तथा हि -

"विधिशास्त्रप्रवृत्तिनिवृत्युपयोगिसाधुत्वाप्रकारकशक्त्यविषयकबोधजनकत्वे सति अधिकारशास्त्रभिन्नत्वं परिभाषात्वम् ।"[५]

पण्डितप्रवरसभापतिशर्मोपाध्यायमहाभागेनापि सिद्धान्तकौमुद्याः लक्ष्मीटीकायां परिभाषाप्रकरणान्ते परिभाषात्वं स्पष्टीकृतम् । तद्यथा - "परिभाषात्वञ्च - सङ्केतग्राहकभिन्नत्वे सति विधिशास्त्रविशिष्टत्वम् । वैशिष्टयञ्च अननुवृत्या स्वजन्यप्रमात्मकबोधापकारकत्व स्वप्रवृत्तिनिवृत्यन्यतरप्रयोजकत्वविशिष्टपाणिनि प्रयत्नन्यायान्यतरसिद्धत्वान्यतरसम्बन्धेन । अननुवृत्येति निवेशेनाधिकारव्यवच्छेदः । आद्य-

१. मु० बो० सूत्र सं० २८५ पृ० १८३

२. सि० कौ० सू० ५३९ पृ० ५२०

३. भा० वृ० ( प्रत्याहारप्रकरणम् ) पृ० १

४. द्र० म० भाग - १ ( कीलहार्नसंस्करणम् ) पृ० ३५९

५. परिभाषेन्दुशेखरः ( विजया टीका ) पृ० ५

सम्बन्धेनाष्टाध्यायीस्थपरिभाषाणां सङ्ग्रहः। द्वितीयेन न्यायज्ञापकसिद्धानाम्, "अनुदात्तपदमेकवर्जम्" इत्यादेश्च सङ्ग्रहः।"[१]

परिभाषा हि द्विधा-पणिनिकृताः अन्यैः वैयाकरणैःकृताश्च। येषां पाणिनिसूत्राणां यथाकालं यथोद्देश्यं च सर्वस्मिन् शास्त्रेऽव्याहतगतिनोपस्थितिर्भवति वैयाकरणैस्तानि परिभाषासूत्राण्युक्तानि। यथा - "इकोगुणवृद्धी" (१-१-३) "षष्ठी स्थाने योगा" (१-१-४९) इत्यादि

पाणिनिपरिभाषासूत्रेभ्य ऋते अन्यैः विद्वद्भिः वैयाकरणैः पृथक् पृथक् परिभाषापाठो विनिर्दिष्टः। सुस्पष्टये चात्र प्रो० के० वी० अभ्यङ्करसम्पादितपरिभाषासूङ्ग्रहतः[२] "विविध वैयाकरणानां परिभाषापाठेषु कति परिभाषा विद्यन्ते" इति निर्दिश्यते -

| ग्रन्थनाम | परिभाषा-संख्या |
|---|---|
| १- परिभाषेन्दु शेखरः (नागोजिभट्टप्रणीतः) | १३२ |
| २- व्याडिकृतपरिभाषासूचनानुसारिपरिभाषापाठः | ९३ |
| ३- व्याडिसङ्गृहीतपरिभाषा पाठः | १४० |
| ४- शाकटायनपरिभाषासूत्राणि | ९८ |
| ५- चान्द्रपरिभाषासूत्राणि | ८६ |
| ६- दुर्गसिंहविरचितकातन्त्रपरिभाषावृत्यनुसारि परिभाषापाठः | ६५ |
| ७- भावमिश्रविरचित कातन्त्रपरिभाषासूत्रवृत्यनुसारि परिभाषापाठः | ६२ |
| ८- कातन्त्रपरिभाषासूत्राणि | ६७ |
| ९- कालापपरिभाषासूत्राणि | ११८ |
| १०- काशिनाथकृतजैनेन्द्रपरिभाषावृत्यनुसारिपरिभाषापाठः | १०८ |
| ११- भोजदेवकृतपरिभाषासूत्राणि | ११८ |
| १२- श्रीसिद्धहेमचन्द्रव्याकरणन्यायसङ्ग्रहः | १४१ |
| १३- पुरुषोत्तमदेवकृतपरिभाषावृत्यनुसारिण्यःपरिभाषाः | १२० |
| १४- पुरुषोत्तमदेवकृतपरिभाषाः | १३० |
| १५- नीलकण्ठदीक्षितविरचितपरिभाषावृत्यनुसारिण्यः परिभाषाः | १४० |
| १६- अग्निहोतृभास्करकृतपरिभाषाभास्करानुसारिण्यः परिभाषाः | १३२ |
| १७- शेषाद्रिसुधीकृतपरिभाषाभास्करानुसारिपरिभाषा | १११ |

पाणिनिसूत्रेभ्यः भिन्ना इमाः परिभाषाः ज्ञापकसिद्धाः, न्यायसिद्धाः वाचनिक्यश्च त्रधा सन्ति। यथोक्तं परिभाषेन्दुशेखरे नागेशभट्टमहाभागैः।

१. सि० कौ० (लक्ष्मीटीका) पृ०९१

२. परिभाषेन्दुशेखरः (श्रीनारायणमिश्रकृतहिन्दीव्याख्योपेतः ८ पृ० २२५-२७८
(पं० मिश्रमहाभागेन अस्य ग्रन्थस्य परिशिष्टे प्रो० के० वी० अभ्यङ्करसम्पादितपरिभाषासङ्ग्रहस्थपरिभाषापाठा उद्धृताः।)

"प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते[1] ।" अत एवात्र रुपमालोक्तपरिभाषाणां स्वरुपविषयेऽधस्ताद् विचार्यते-

महाभाष्ये कृतप्रयासेऽपि वार्तिकानां परिभाषाणां च स्वरूपं पृथक् पृथक् परिज्ञायते, परं भाष्योत्तरवर्तिवैयाकरणाः परिभाषादीनां प्रणयने, स्वरूपविषये च स्वतन्त्रमार्गमवलम्बन्ते। ते वार्तिकादिवत् महाभाष्यस्थपरिभाषाणां स्वरूपमपि परिवर्तन्ते। रूपमालायां परिभाषाणां संख्या अल्पीयसी एव । तत्र प्रायेण काशिकोक्त परिभाषाणां स्वरूपमेव गृहीतः । यथा - काशिकायाः २/२/१९ सूत्रे "गतिकारकोपपदानां कृदि्भः सह समासवचनं प्राक् सुबुत्पत्तेः" इति परिभाषा विद्यते । किन्तु रूपमालायां - "गतिकारकोपदानां कद्भिः समासः सुबाद्युत्पत्तेः पूर्वमेवेष्यते ।" इति स्वरूपमुपलभ्यते । प्रक्रिया कौमुद्यादौ त्वत्र काशिकैवानुसृता ।

रूपमालायां "विदेः शतुर्वसुः" (७/१/३६) सूत्रे "एकानुबन्धग्रहणे न द्वयनुबन्धकस्ये"ति परिभाषा वर्तते। काशिकायाः ७/१/३६ सूत्र एवास्या उल्लेखो विद्यते। परं रूपमालोत्तरवर्तिप्रक्रियाग्रन्थेषु परिभाषेन्दुशेखरे चेयं परिभाषा नोपलभ्यते । किन्तु भोजदेवकृतपरिभाषासूत्रपाठे[2] श्रीहेमचन्द्रव्याकरणन्यायसङ्ग्रहे चास्याः स्वरूपमुपलभ्यते । तत एव रूपमालाकारेणेयं परिभाषा स्वीकृतेति प्रतीयते ।

एवं रूपमालाकारेण १/१/६१ । सूत्रे "सर्वविधिभ्यो लुग्विधिर्बलवान् इति परिभाषा उपन्यस्ता । सिद्धान्तकौमुद्यादिषु परिभाषेयं नोपलभ्यते, परं परिभाषेन्दुशेखरे[3] "सर्वविधिभ्यो लोपविधिर्बलवान्" इति स्वरूपं विद्यते ।

रूपमालाकृता द्वन्द्वसमाससमालान्ते "सर्वो द्वन्द्वो विभाषयेकवदित्येके" इत्युक्त्वा विषयेऽस्मिन्मतान्तरं दर्शितम् - काशिकायान्तु - १/२/६३ सूत्रवृत्तौ "सर्वो द्वन्द्वो विभाषा एकवद् भवति" इतिपरिभाषास्वरूपं दृश्यते । परिभाषेन्दुशेखरेऽपि[4] काशिकावत् परिभाषास्वरुपमुपलभ्यते । परं सिद्धान्तकौमुद्यामस्या अभावः ।

रूपमालायां "विप्रतिपेधे परं कार्यम्" (१/४/२) इति सूत्रव्याख्याने "नित्यान्तरङ्गानवकाशानि बलवन्ति च "इति परिभाषा उपलभ्यते । तद् व्याख्यानभूते "कृताकृतप्रसङ्गिनित्यम्, अल्पापेक्षमन्तरङ्गम्" इत्यपि परिभाषे तत्रैव वर्तेते । परम्, सिद्धान्तकौमुद्याम् - "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इतिपरिभाषा" स्वरितेनाधिकारः (१-३-११) इतिसूत्रे दर्शिता[5] । नागेशभट्टमहोदयेनापि "पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इति परिभाषास्वरूपमङ्गीकृतम्[6] ।

---

१. परिभाषेन्दुशेखरः पृ० २

२. भोजदेवकृतपरिभाषासाणि १/२/९९

३. परिभाषेन्दुशेखरः ( ९९ ) पृ० १६३

४. परिभाषेन्दुशेखरः प० पृ० ५२

५. सि० कौ० ( परिभाषाप्रकरणम् ) सू० - ४६

६. परिभाषेन्दुशेखरः ( बाधबीजप्रकरणम् ) प० ३८ पृ० ५७

सिद्धान्तकौमुद्यां १३५ परिभाषा विद्यन्ते रुपावतारे च एकत्रिंशत् परिभाषा उल्लिखिताः। परम् रूपमालायां केवलं षोडशपरिभाषा उपलभ्यन्ते। यासु नवसंख्यकानां परिभाषाणां स्व रूपम् अन्येषु प्रक्रियाक्रमग्रन्थेष्वपि रूपमालावदेव दृश्यते। यथा हि -

| | रू० मा० सू० |
|---|---|
| १- वार्णादङ्गं बलीयः | ७.१.१२ |
| २- सर्वविधिभ्यो लुग्विधिर्बलवान् | " " " ७.१.६१ |
| ३- एकदेशविकृतमनन्यवत् | " " " १.१.४८ |
| ४- सन्निपातलक्षणो विधिरनिमित्तं तद्विधातस्य | " " " १.१.४८ |
| ५- निरनुबन्धकग्रहणे सानुबन्धकस्य | " " " ७.१.३६ |
| ६- अर्थवद्ग्रहणे नानर्थकस्य | " " " ७.१.१.३६ |
| ७- तन्मध्यपतितस्तद्ग्रहणेन गृह्यते | " " " ७.२.९७ |
| ८- नानुबन्धकृतमसा रूप्यम् | " " " ६.१.७१ |
| ९- प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् | " " " ४.३.१५७ |

इत्थमुक्तविवेचनेन ज्ञायते यदस्मिन् शास्त्रे वार्तिकादिवत् परिभाषाणां स्वरूपं क्वचित् स्फीतिभावं क्वचित् ह्रासं क्वचिच्च नूतनपरिवर्तनमुपैति।

# शब्दानुशासनरीत्या रूपमालाया उपादेयता

"भाषा मानवानुभूतीनामादानप्रदानयोः सर्वोत्तमं साधनम्। भाषा मानवस्य चेष्टा व्यापारो वा, यया मानव उच्चारणोपयोगिभिः शरीरावयवैरुच्चारितैः व्यक्तैः शब्दैः स्वकीयान् विचारान् प्रकटयति[१]"।

अभिव्यक्तेरिच्छैव भाषाया उत्पत्तेः कारणम्। विचाराणामादानप्रदानाभ्यां भाषा परिवर्त्य स्वकीयं परिष्कृतं स्वरूपमाप्नोति। तदैव स्वरूपं श्रेष्ठं सरलं च भवति। तत्र स्थैर्यं प्रदातुं शब्दानुशासनस्यावश्यकता भाषाशास्त्रविद्भिरनुभूयते। अत एव ते भाषायाः तद्रूपं नियन्त्रितुं कमपि मार्गमन्वेष्टुं प्रयतन्ते सः मार्गः व्याकरणमेव। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा-अनेनेति व्याकरणमिति व्याकरणशब्दार्थः। व्याकरणस्यैव नामान्तरं शब्दानुशासनम्। तच्च अनुशिष्यन्तेऽपशब्देभ्यो विविच्य कथ्यन्ते साधुशब्दा अनेनेत्यनुशासनम्। शब्दानामनुशास-नमिति शब्दानुशासनमिति व्युत्पत्त्याऽवगम्यते। अत एव संस्कृतभाषायां साधुशब्दपरिज्ञानाय अपभ्रंशपदनिराकरणाय च व्याकरणशास्त्रं प्रवृत्तम्। यथा चोक्तं भर्तृहरिणा वाक्यपदीये -

**"साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।"[२]**

भगवता पतञ्जलिना महाभाष्ये व्याकरणशास्त्रस्य प्रयोजनविषये सम्यग् विचारि-तम्। यथा "रक्षोहागमलध्वसन्देहाः प्रयोजनम्।" व्यवहारातीतभाषा व्याकरणं विनाऽवबोद्धुं न शक्यत इति "व्याकरणात् शक्तिग्रहमपि भवति" इति न्यायसिद्धान्तमुक्तावल्यां विश्वना-थपंचाननभट्टाचार्येण प्रतिपादितम्।[३]

षड्विधेषु वेदाङ्गेषु व्याकरणस्य प्रधानाङ्गत्वं प्रसिद्धमिति पूर्वमेवोक्तं मया। व्याकरणस्याविर्भावः कदा सञ्जात इति विचार्यमाणे ज्ञायते यत् ऋक्पदपाठरचनासमये प्रकृ-तिप्रत्ययादिकल्पना पूर्णं रूपेण आसीत्। गोपथब्राह्मणे तु प्रकृतिप्रत्ययादीनां स्पष्टतयोल्लेखो विद्यते।[४] बाल्मीकिरामायणाध्ययनेनेदं परिज्ञायते यत्तदानीमपि व्याकरणशास्त्रस्य सम्यक् प्रचलनमासीत्। यथा हि-

---

१ डा० मङ्गलदेवशास्त्री-तुलनात्मकभाषाविज्ञान, पृ० २१

२ वाक्यपदीयम् १/१/४३

३ "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
न्यायसिद्धान्तमुक्तावली (शब्दखण्डः) पृ० २६६

४ "ओकारं पृच्छामः, को धातुः किं प्रातिपदिकम्।" गोपथब्राह्मण पृ० १/३४

**"नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।**
**बहु व्याहरतानेन न किञ्चिदपभाषितम् ॥"[१]**
**ऋषयः वेदानाधृत्य व्याकरणशास्त्रं प्रणीतवन्त**
**इति यास्कमहाभागेन निरुक्ते स्वीकृतम् ।**

साक्षात्कृतधर्माणः ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादिपुः । उपदेशाय ग्लायन्तोऽवरे विल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ।"[२] एवंविधव्याकरणस्य प्रणेतारो नवाचार्या बभूवुरिति -

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥"इत्युक्त्या ज्ञायते ।**

एवं सत्स्वपि अनेकेपु व्याकरणेपु सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकं पाणिनीयव्याकरणमेव । ऋक्तन्त्रव्याकरणेऽस्य चतुर्दशसूत्रसमुदायस्याम्नायत्वं सबलं प्रतिपादितम् । यथा - "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुः, ब्रह्मा , बृहस्पतये, बृहस्पतिरिन्द्राय, इन्द्रो भारद्वाजाय, भारद्वाजऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विदममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः ।" इति । अत एवास्यैव व्याकरणस्य वेदाङ्गत्वं युक्तम् । अस्यैव ज्ञाने सार्ववेदपरायणजं पुण्यं फलमिति लघुशब्देन्दुशेखरे नागेशेन स्पष्टीकृतम् ।[३]

महर्पिणा पाणिनिना व्याकरणशास्त्रस्य मूलभूतं "अष्टाध्यायी"ति ग्रन्थं प्रणीतम् । स च कात्यायनेन वार्तिकैः समुपबृंहितम् । अनन्तरं च भगवता पतञ्जलिना पाणिनिसूत्रेषु कात्यायनवार्तिकेषु च महाभाष्यं विलिख्य बहूपकृताऽध्येतारः ।

## पाणिनीयशब्दानुशासनस्य द्विधाऽध्ययनम् -

पाणिनीव्याकरणशास्त्रस्य प्राचीनोऽध्ययनप्रकारस्तु अष्टाध्यायीस्थसूत्रपाठक्रमानुसार्येवाऽऽसीत् । "सूत्रपाठक्रममनुसृत्य कथं पुरा व्याकरणाध्ययनं भवति स्म" इत्यत्र काशिकादयः प्राचीनाः व्याख्यानग्रन्थाः तद्वृत्तिग्रन्थाश्च प्रमाणम् । चीनदेशवास्तव्यः यात्री इत्सिंगः भारते ६८१ ईशवीयतः ६९१ ईशवीयवर्पपर्यन्तम् अस्थात् । तेनाष्टाध्याय्युपज्ञमेव संस्कृताध्ययनं कृतमिति तेन स्वयं स्वकीययात्राविवरणे विवृत्तं वर्तते ।[४]

इत्थं बहुकालपर्यन्तमष्टाध्यायीक्रमेणैवाध्ययनमभूत् । परन्तु कालक्रमेण वैक्रमाब्दस्यैकादशशताब्द्यां पाणिनीयतन्त्राध्ययनस्यापरः प्रकारः प्रादुर्बभूव । तदनुसारं यथाप्रक्रियं पाणिनीयाष्टाध्याय्याः सूत्राणि संकलय्य पठनपाठनक्रमस्यारम्भो जातः । उत्तरोत्तरं च क्रमोऽयं विस्तरं पूर्णतां च गतः ।

---

१. वाल्मीकि-रामायण ( किष्किन्धाकाण्ड ) ३/२९

२. यास्क - निरुक्तम् - १/२०

३. द्र० ल० शा० शे० पृ० - ७

४. (क) "इस अष्टाध्यायी में १००० श्लोक (४००० सूत्रों के १००० श्लोक बनते हैं) यह पाणिनि की रचना है । जो प्राचीनकाल मे बहुत भारीविद्वान था -- । आलकल के भारतवासियों का प्रायः इसमें विश्वास है । बच्चे ८ वर्ष की आयु में इस सूत्रपाट को सीखना आरम्भ करते हैं, और ८ मास में इसे कण्ठस्थ करते हैं ।" "इत्सिंग की भारतयात्रा" पृ० - २६४

प्रक्रियाक्रमेऽस्मिन् बौद्धभिक्षुणा धर्मकीर्तिना सर्वप्रथमो ग्रन्थः रूपावतारनामकोऽष्टाध्यायीसूत्रैर्विरचितः। अत्राष्टाध्यायीक्रमं परित्यज्य केवलं प्रयोगसमाधनमभिलक्ष्य संज्ञा-संहिता-सुबन्ताव्यय-स्त्रीप्रत्यय-कारक-समास-तद्धितप्रकरणानि प्रथमे भागे संग्रथितानि। अपरे भागे - धातुप्रत्ययपञ्चिकायां दशलकारदशगणाः कृदन्तञ्च (स्वरवैदिकप्रकरणं विहाय) उपन्यस्तम्। अत्र केवलं २६६४ सूत्राणि प्रक्रियाक्रमेण व्याख्यातानि।[१]

यद्यपि रूपावतारानन्तरं प्रक्रियारत्नमिति ग्रन्थस्य प्रणयनमभूत् तथापि तस्यानुपलम्भात् रूपमालाख्यग्रन्थ एव प्रक्रियाक्रमस्य द्वितीयग्रन्थरूपेण दृष्टिपथमायाति। ग्रन्थोऽयं श्रीमत्परमहंसपरिव्राजकाचार्य विमलसरस्वतीभिः विक्रमाब्दस्य चतुर्दशशतके विरचितः। यद्यपि लघुकलवरकेऽस्मिन् ग्रन्थे केवलं २०६४ सूत्राणि प्रक्रियाक्रममनुसृत्य व्याख्यातानि, तथापि अनेन प्रक्रियाक्रमस्य विस्तारः प्रचारश्च प्राचुर्येणाऽभूत्। उत्तरवर्तिप्रक्रियाग्रन्थकृद्भिरप्यस्या श्रयणं गृहीतमिति प्रक्रियाग्रन्थक्रमेऽत्यन्तं महत्वाधायकोऽयं ग्रन्थः। सम्प्रत्यस्यैव रूपमालाख्यग्रन्थस्योपयोगिताविषये किञ्चिद् विमृशामः -

ग्रन्थस्यास्यालोडनेनेदमप्यन्त्रभावि - यत्पाणिनीयव्याकरणमष्टाध्यायीपद्धत्या अध्ययनान्तरमप्यनेके जनाः नैकेषां प्रश्नानामुत्तरं दातुमक्षममिवावलोक्यन्ते। अष्टाध्यायीक्रमे रूपं प्रयोगं वा मुख्यतोऽभिलक्ष्यीकृत्य लक्षणाणां क्रमो न दृश्यते। उदाहरणाय रूपमालायास्थाजन्तः शुक्लशब्दः गृह्यताम्-तस्य प्रथमैकवचने शुक्ल इत्यस्य साधुत्वाय येषां लक्षणानामावश्यकता वर्तते तानि अष्टाध्याय्यां नैकस्मिन् सन्दर्भे पठितानि सन्ति। एवमेव षष्ठ्येकवचने शुक्लस्येति सिद्धये स्यादेशविधायकसूत्रस्य[२], ओसि षष्ठी-द्विवचने शुक्लयोरित्यत्रैत्वविधायकस्य[३], बहुवचने आमि सम्पद्यमानस्य शुक्लानामित्यस्य सिद्धये नुडागम[४] - दीर्घ[५] - विधायकानां सूत्राणां च विन्यासोऽत्यन्तव्यवधानपूर्णः। इत्थं सप्तम्यां "शुक्ले शुक्लयोः शुक्लेषु" इति रूपत्रयस्य सिद्ध्यर्थं १/४/४५, २/३/३६, ६/१/४७, ७/३/१०३, ८/३/५९ इत्याद्यङ्कैरङ्कितानि सूत्राणि व्याख्यातानि भवन्ति। एवं एकैकस्य रूपस्यपरिज्ञानाय सम्पूर्णाष्टायायी कण्ठस्थीकरणीया भवति स्म। एवमष्टाध्याय्याः सूत्रसंघटने कश्चन एवंविधः क्रमो नास्ति येनाजन्तहलन्तादिशब्दानां सर्वासु विभक्तुषु एवं च धातूनां प्रथमादिपुरुषेषु वचनक्रमेण सर्वाण्येव रूपाण्येकत्रैव ज्ञायेरन्।[६]

---

१. काशिकावृत्ति

"यह ऊपर के सूत्र ( अर्थात् पाणिनि के सूत्र ) की टीका है। पहले समय मे अनेक टीकाएँ रची गई थीं, और यह उन सब मे उत्तम हैं। यह सूत्र का अर्थ देती और इसके अनेकप्रकार के अर्थों की बडी बारीकी से व्याख्या करती है। ---- पन्द्रह वर्ष के लड़के इस वृत्ति को पढ़ना आरम्भ करते हैं और पॉच वर्ष में समझ लेते हैं।

"इत्सिंग की भारतयात्रा" पृ० २६८

२. टाङसिङसामिनात्स्याः ७/१/१२

३. ओसि च ७/३/१०४

४. ह्रस्वनद्यापो नुट् ७/१/५४

५. नामि - ६/४/३

६. अट्कुप्वाङ्नुम्व्यवायेऽपि ८/४/२

अपि चास्मिन् क्रमेऽष्टाध्यायीसूत्रपाठः धातुपाठ-गण-पाठोणादिपाठलिङ्गानुशासनादिभिः सहैव कण्ठस्थीकर्तव्यः। कात्यायन-विरचितानि वार्तिकानि, पातञ्जलं महाभाष्यं चाध्येतव्यानि। काशिकादिवृत्तयश्च पठितव्याः। अष्टाध्यायीसूत्रपाठैः सह संयोज्यैतानि पठनीयानि। अन्यथा सूत्राणां सम्यगर्थः,प्रयोगाणां च सिद्धिः नैवं कर्तुं शक्यते। इत्थमष्टाध्यायीक्रमे क्लेशबहुलः। परमस्मिन् कस्याप्येकस्य प्रयोगस्य साधनाय यावन्ति सूत्राण्ययेक्ष्यन्ते तावन्ति समाहृत्यैकत्रैवोपन्यस्तानि। प्राधान्येनास्यां पद्धत्यां शब्दा एवाश्रिताः। शब्दः क्रमस्तत्साधनक्रमश्चास्या उद्भावकः। यतो ह्येकस्य प्रयोस्य "मध्वत्रे" त्यस्य सिद्धये "इको यणचि" ६/१/७७, "स्थानेऽन्तरतमः," १/१/५० "अनचि च" ८/४/४७, "झलां जश् झशि" ८/४/५३ इत्याद्यनेकाध्यायस्थसूत्राणामेकस्मिन् सन्दर्भेऽत्र सङ्ग्रहो भवति।

अस्याः प्रक्रियापरम्परायाः महत्वस्य किमतोऽधिकं प्रमाणम्,यदनया व्याकरणस्याध्ययनाध्यापनप्रणाली परिवर्तिता। अद्यत्वे सर्वत्रैव भारतवर्षे संस्कृत विश्वविद्यालयेषु संस्कृतपाठशालासु विद्यापीठेषु च प्रायेण रूपावतारमूलाप्रक्रिया प्रधाना प्रणाली स्वीकृता दृश्यते।

न केवलं संस्कृतविद्यालयेषु किन्तु आंग्लशिक्षासंस्थानेष्वपि नव्यव्याकरणस्य रूपप्रधाना प्रक्रियापद्धतिरेवा श्रीयते चिरात्। आधुनिकैः विद्वद्भिरपि सर्वत्रागमननपद्धतिमनुसृत्य प्रक्रियाक्रम एवाङ्गीकृतः। संस्कृतविद्यालयविश्वविद्यालयेषु रूपावतारसमुद्भाविता प्रक्रियाक्रमेणैव व्याकरणशास्त्रस्याखिलमपि पठनपाठनं पञ्चषट्शताब्द्यात्मकादल्पकालादेव यदेतावद् व्यापकं सञ्जातं यथाऽष्टाध्यायीक्रमेणापि व्याकरणस्याध्ययनाध्यापनं भवितुमर्हतीति न स्मर्यते,एतेनैवास्याः पद्धत्याः समयसम्वादित्वं सरलत्वं पूर्णत्वमुपयोगित्वञ्चानुमातुं शक्यते।

## प्रक्रियाक्रमे रूपमाला -

रूपावतारवत् संस्कृतभाषायाः व्यावहारिकज्ञानाय विमलसरस्वतीभिः रूपमालाख्यप्रक्रियाग्रन्थो विरचितः। ग्रन्थारम्भ एव पारिभाषिकशब्दानां सरलं विवरणं संज्ञामालायां दत्वाऽत्र प्रतिपादनशैली रुचिरा सम्पादिता। ग्रन्थस्यास्योपगित्वसिद्धये विमलसरस्वतीनां विषयप्रतिपादनपद्धतिः संक्षेपणात्र प्रस्तूयते -

यस्मिन्कस्मिन्नपि विषये पारिभाषिकशब्दानां ज्ञानं विना विषयप्रवेश एव नितरां दुरूहः,का विषयप्रतिपादनस्येति विचार्याचार्यचरणैः सर्वतः प्रथमं संज्ञामाला विन्यस्ता। ततः "वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः" इति भूषणसारकारिकोक्त्या, "वाक्यस्फोटोमुख्यस्तस्यैव लोकेऽर्थबोधकत्वात् तेनैवार्थ समाप्तेश्च"[१] इति वैयाकरणसिद्धान्तलघुमञ्जूषोक्त्या च वाक्यस्फोट एव वैयाकरणानां मूलसिद्धान्तः। ज्ञानं चास्य प्रकृतिप्रत्ययादि - ज्ञानविधया पदज्ञानम्, ततः पदसमूहरूपवाक्यज्ञानमितिरीत्यैव जायते। तत्र ग्रन्थनिर्माणे क्रमद्वयम्। आरोहणरूपः,अवरोहणरूपश्च। वाक्यैनैव व्यवहारदर्शनाद् वाक्यस्य च धातुमूलकतया पूर्वं धातवस्तत्प्रकृतिप्रत्ययास्ततो नामादीनि यदि बोधितानि भवेयुस्तदारोहणक्रमः। पूर्वं वाक्यनिमित्तककार्यप्रदर्शनमभिधाय तद्घटकानां निदर्शनेन निर्माणमवरोहणक्रमः। अवरोहणक्रममाश्रित्यैव प्रक्रियाक्रमः प्रावर्तत।

१. परमलघुमञ्जूषा ( शक्तिनिरूपणम् ) पृ० - ४

प्रवृत्ते चास्मिन् क्रमे पदसमुदायरूपवाक्यसंघटनायां सन्धेरपेक्षणात् सन्ध्युपयोगि-संज्ञामालाख्यप्रकरणमभिधाय द्वितीयं सन्धिमालाप्रकरणं विन्यस्तम्।

रूपमालायां पञ्चसन्धयः। वर्णसमाम्नाये लोके चाचामेव पूर्वविद्यमानत्वेनाचां सन्धिः स्वरसन्धिनाम्नाभिहितः। कुत्रचित् प्रवृत्तौ सत्यामपि तदभावः प्रकृतिभावरूपेण गृहीत इति प्रकृतिभावसन्धिः। हल्सन्धिः व्यञ्जनसन्धिरिति वा। हल्त्वेनाविशेषे सत्यपि विसर्गस्य स्वादीनां च नैकविधेन वाक्येष्ववस्थानात् पृथग् विसर्गस्वादिसन्धी। तदुक्तं शिक्षायाम् -

**ओभावश्च विवृत्तिश्च शषसा रेफ एव च**
**जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः॥**[1]

वाक्यार्थज्ञानं पदार्थज्ञानाधीनम्। तथैव वाक्य-ज्ञाने पदज्ञानस्यापेक्षितत्वेन पूर्वं पदज्ञानं कर्तव्यं भवति पदं चानेकविधम् सुबन्ततिङन्तनिपातोपसर्गाश्च। यथोक्तं निरुक्ते - "तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्ग-निपाताश्च तानीमानि भवन्ति।[2]" तत्र निपातोपसर्गयोः नाम्न्येवान्तर्भावात् सुबन्तं तिङन्तं च द्विविधमेव पदम्। अत एव भगवान् पाणिनिरप्याह "सुप्तिङन्तं पदम्" इति। तत्र सुबन्तं वर्णसमाम्नायक्रमेणाजन्तपुल्लिग-स्त्रीलिङ्गनपुंसकलिङ्गाः, हलन्तपुंलिङ्ग-स्त्रीलिङ्गनपुंसकलिङ्गाश्च। ग्रन्थेऽस्मिन् शब्दानां विन्या-सस्तत्तद्लिङ्गेषु रूपाण्यभिधाय पुनः शब्दान्तरस्य रूपाणां निष्पादनमवलोक्यते।

तत्र अजन्तादिपड्लिङ्गप्रकरणनिरुपणानन्तरमेव लिङ्गरहितस्या-व्ययस्यापि सुबन्तऽपेक्ष्यमाणस्य प्रातिपदिकात् निष्पन्ने सुपि सुबन्तनिष्पत्तिः। तेन सुपां विधायकं क्रमप्राप्तं कारकप्रकरणमपहाय,विभक्त्यर्थकारकापेक्षया लिङ्गस्य पूर्वमुपस्थितत्वेन लिङ्गबोधकस्त्रीप्रत्य-यविधानाय "स्त्रीप्रत्ययमाला" विन्यस्ता। ततः स्वादीनां स्त्रीप्रत्ययानाञ्च प्रकरणभिधाय तद-र्थबोधनाय च कारकमालाप्रकरणमुपन्यस्तम्।

"सुप्तिङन्तं पदमितिसूत्ररीत्या सुबन्तनिरूपणानन्तरमेव धातु पाठगतधातुभ्यस्तिङां विधायकतिङन्तमालाख्यप्रकरणंनिरूपितम्। तिङन्तमालायां लकाराणां विन्यासेऽपि सिद्धा-न्तकौमुद्यादितो भिन्नक्रमो दृश्यते। प्रक्रियाकौमुद्यादि ष्वकाराद्यनुबन्धक्रममादय टितां ततश्च ङितामभिधानम्। परं रूपमालायां रूपावतारे च भिन्नक्रमः यथा लट्, ततो लङ्, लोट् लिङ् तत आशीर्लिङ् लुट्, लुङ्लिट् लेडिति। अत्र हि सार्वधातुकार्धधातुकभेदेन निष्पन्नो यः क्रमः स एवापेक्षितः प्रतीयते। तत्रापि विकरणलकारयोरुभयोरपि सार्वधातुकयोः पूर्वमुपस्थितिः, ततोऽऽगमेलकारे चार्धधातुकस्याशीर्लिङः, ततो विकरणे आर्धधातुकस्य तिङाम्, सार्वधातु-कस्य लुडादेः, ततः केवलार्धधातुकस्य लिटः, सर्वतः पश्चाद् वैदिकस्य लेट्लकारस्येत्येवं लकाराणां क्रमो दृश्यते। तत्रापि अनद्यतनाद्यर्थस्यापि परिग्रहेण वर्णपरिग्रहक्रमेण च व्यवस्था वर्तते।

एवं "भूवादयो धातवः" इतिसूत्रोक्तधातुभ्यस्तिङ्प्रत्ययान्नि रुप्य "सनाद्यन्ताः धातवः" इतिसूत्रविहितप्रत्ययान्तेभ्यो धातुभ्यः सनादिक्रमेण प्रत्ययान्निष्पादयितुं सनादिमाला-प्रकरणं निरूपितम्। सनादीनां क्रमश्चाभियुक्तोक्तौ निम्नलिखितक्रमेण वर्तते

---

१ पाणिनीय - शिक्षा

२ द्र० - हिन्दी निरुक्त ( कपिलदेवशास्त्री ) - मूल - पृ० ८

**सन्क्यच्काम्यच् क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा।**
**यगायईयङ्णिङ्चेति द्वादशामी सनादयः ॥ इति ॥**

सनादिमालानिरूपणानन्तरं प्रसङ्गतः प्राप्तानामात्मनेपदपरस्मैपदविधायकशास्त्राणां च निरूपणं कृतं ग्रन्थकृद्भिः। अथ सुपां प्रातिपादिकाश्रयत्वात् प्रातिपदिकानां च कृत्तद्धित-समासान् विना दुर्लभत्वात् "कृत्तद्धितसमासाश्च" इति पाणिनसूत्रक्रमानुसारेण कृदादीनां निरूपणं कृतम्। तत्र प्रथमं कृदन्तमाला संग्रथिता। ततः सुबन्ततिङन्तोद्देश्यकत्वेन समासत-द्धितयोरुभयोः निरूपणार्हत्वेऽप्येकसुबन्तोद्देश्यकत्वेन पूर्वं तद्धितप्रत्ययानां निरूपणार्थं तद्धि-तमालारम्भो विहितः, ततोऽनेसुबन्ततिङन्तोद्देश्यकत्वेन समासमाला निरूपिता।

प्रकृतिप्रत्ययादीनां तदवयवस्य च सन्ध्यादेः निष्पादनं विधायैय प्रकृतिप्रत्ययवि-हितस्य समग्रस्य पदस्य कार्यविधानं सम्यगुचितमिति मनसिकृत्य सर्वेभ्यः प्रकरणेभ्यः पश्चाद् पदद्वित्वप्रकरणं ग्रन्थान्त एव निरूपितम्।

यद्यपि प्रक्रियाकौमुद्यां सिद्धान्तकैमुद्यां च पूर्वार्द्धान्त एव द्विरुक्तप्रक्रिया निरूपिताः, तथापि पदशब्देन तिङन्तस्यापि ग्रहणात् तद्द्वित्वमपि विधातुं सर्वान्तएवोपपादनं दृश्यते।

यद्यपि प्रक्रियाकौमुदीसिद्धान्तकौमुद्योः पूर्वं समासस्ततस्तद्धितः, इत्येवं क्रमेण निरूपणं विद्यते। तथापि पूर्वोक्तलाघवं पुरस्कृत्य पणिनीयसूत्रक्रमं चानुसृत्यैष क्रमो रूपमा-लायां निर्धारितो युक्ततरश्च।

## परवर्तिग्रन्थेषु रूपमालायाः प्रभावः -

क्वचित् रूपमालायाः सिद्धान्तकौमुद्या उपरि प्रभावः स्पष्टमुपलभ्यते। यथा"हल-न्त्यमि"तिसूत्रे काशिकाभाष्यादिग्रन्थेषु कण्ठरवेण हलित्येकदेशस्यैवावृत्तिः स्वीकृता, परन्तु रूपमालायां सम्पूर्णसूत्रास्यावृत्तिरङ्गीकृता। तद्यथा - "इहान्योन्याश्रयाभावायास्य सूत्रस्यावृत्ति-रिष्टा। तेन हलितिसूत्रे यदन्त्यं हल् तदित्संज्ञमिति प्रथमोऽर्थः। ततो हल्प्रत्याहारे सिद्धे सतीनरार्थ इति।"[1] अत एव रूपमालामनुसृत्यैव भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां सूत्रमिदं वारद्वयं पठितम् तथैव व्याख्यातं च। सिद्धान्तस्यास्य परिपुष्टिः मनोरमाशब्देन्दुशेखरादिषु विद्वद्भिः महता प्रयत्नेनेतरमतखण्डनपूर्वकं कृता।

एवं च श्रीमद्वरदराजाचार्यविरचितमध्यकौमुदीलघुकौमुद्यादिषु षड्लिङ्गाव्ययप्र-करणानन्तरं तिङन्तप्रकरणयोजनायामस्याः रूपमालायाः प्रभावोऽशेनानुमातुं शक्यते।

ग्रन्थेऽस्मिन् सूत्रवार्तिकादिनिष्पन्नानां बहूनां कार्याणां सूत्राद्युक्तिमन्तरेणापि सूचना तत्तत्स्थले इत्युक्तिः, इत्युक्तेः, इत्यादिपदैर्लक्ष्याणां साधनायाश्रितेति ग्रन्थावलोकनेन स्फुटीभवति। तद्यथा - (कतपयस्थलानि निर्दिश्यन्ते)

१- चण्डकल्याणपुराणादौ च ङीपो विकल्पोक्तिः[2] (स्त्री प्रत्ययमाला)
२- वामोरुरित्यादौ चोक्तिः।[3] (" " ")

---

१ रु० मा० भागः १ सू० २ हलन्त्यम् १/३/३ पृ० २

२ रु० मा० भाग - २ पृ० १३ ( ग्रन्थाकृता अत्र बह्वादिभ्यश्च ४/१/४५ इति सूत्रस्योल्लेखो न कृतः।)

३ रु० मा० भाग - २ पृ० २१ ( अत्र "संहितशफलक्षणवामादेश्च" इति सूत्रं नोपन्यस्तम्)

३- समाजादौ याज्ययाच्यत्याज्यशोच्यादौ निषेधोक्तिः[१] (कृदन्तमाला)
४- आशिषि वुञ्प्रत्ययोक्तिः।[२] (कृदन्तमाला)
५- मोक्षेऽग्निशान्तौ व निर्वाणोक्तिः।[३] (कृदन्तामला)
६- ज्वलादेर्णस्योक्तिः।[४] (कृदन्तमाला)
७- सौवीरकादौ वुञुक्तिः। काशिकीकाशिकेत्यादिरुभयथोक्तिः[५] (तद्धितमालायाम्)
८- नैशिकम्, नैशम्। प्रदोषिकम् प्रादोषमित्युभयथोक्तिः[६] (" " ")
९- द्वन्द्वाच्छस्योक्तिः। किरातार्जुनीयम्।[७] (" " ")
१०- आहेत्यर्थे प्राभूतिकादेः, पृच्छत्यर्थे सौस्नातिकादेः, गच्छत्यर्थे पारदारिकादेरुक्तिः।[८] (" " ") (" " ")
११- निर्वृत्ताद्यर्थेषु द्विसंवत्सरीणः द्विसांवत्सरिकादेरुक्तिः।[९] (त० मा०)
१२- चतुर्मासात्तत्रभूययज्ञादौ ण्यस्योक्तिः।[१०] (" " ")
१३- आच्छावाकीयादौ छस्योक्तिः। ब्राह्मणच्छंसीयम्[११]। (" " ")
१४- तिलादिभ्यो यत्खञोरुक्तिः। भाष्यम्। माषीणम्।[१२] (त० मा०)
१५- कर्मणि घटत इत्यर्थे कर्मठोक्तिः[१३] (" " ")

---

१ रु० मा० भाग - ३ पृ० ६१ ( अजिव्रज्योश्च ७/३/६० यजयाचरुचप्रवचर्चश्च ७/३/६६ इत्यादीनि कुत्वानिषेधकानि सन्ति )

२ मा० भाग - ३ पृ० ६५ आशिषि च ३/१/१५० इति सूत्रेण वुञ्प्रत्ययो विधीयते।

३ रु० मा० भाग ३ पृ० ८७ ( इह निर्वाणोऽवाते ८/२/५० इति सूत्रेण निष्ठातस्य नकारो निपात्यते

४ रु० मा० भाग-३ पृ० ९६ ज्वलतिकसन्तेभ्योणः" ३/१/१४० इत्येनेनणप्रत्यये भवति।

५ रु० मा० भाग ४ पृ० ६ अवृद्धावपि बहुवचनविषयात् ४-२-१२५ इतिसूत्रेण वुञ्प्रत्ययो भवति। "काश्यादिभ्य ठञ्जिठौ" ४-२-११६ इत्यनेन ठञ्ञिठ्इत्येतौ प्रत्ययौ भवतः )

६ रु० मा० भाग - ४ पृ०८ (अत्रनिशाप्रदोषाभ्या च" ४-३-४ इत्यनेन विभाषा ठञ्प्रत्ययो भवति शैषिकः )

७ रु०मा० भाग-४ पृ० १८ ( अत्रहि "शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" ( ४-३-८८ इत्यनेन छप्रत्ययो विधीयते )

८ रु० मा० भाग - ४ पृ० २७(सि०का०१५४९ - अत्र- आहौ प्रभूतादिभ्यः ( वा० २९५२ ) पुच्छतौ सुस्नातादिभ्यः ( वा० २९५३ ) गच्छतौ परदारादिभ्यः ( वा० २९५४ ) इतिवार्तिकैः ठग्विधीयते। )

९ रु० मा० भाग ४ पृ० ५० ( रात्र्यः मवत्सराच्च ) ५-१-८७ इतिसूत्रेण खप्रत्ययो वा भवति। पक्षेठञ् )

१० रु० मा० भाग - ४ पृ० ५१ ( चतुर्मासाण्ण्योतत्र भव इत्यर्थे ) इतिवार्तिकेन ण्यो वाच्यइत्यर्थः )

११ रु० मा० भाग - ४ पृ० ५८ ( होत्रादिभ्यश्छः ) ५-१-१३५ इत्यनेनात्रभावकर्मणोः छप्रत्ययो विधीयते।

१२ रु०मा० भाग-४पृ०-५८ ( विभाषातिलमाषोमाभङ्गाणुभ्यः ( ५-२-४ ) इतिसूत्रेण यद्वा विधीयते पक्षे खञ् )

१३ रु०मा०भाग-४पृ०- ६५ ( "कर्मणि घटोऽठच्" ) ५-२-३५ इत्यनेनः गेक्तार्थेऽठच् प्रत्ययो विधीयते "नस्तद्धिते" इति टिलोपः। ( सि० कौ० सू० १८३६ - बा० म० )

एवं रूपमालायां नैकानि स्थलानि सन्ति । ग्रन्थसङ्क्षेपहेतुना ग्रन्थकृताऽत्र एवंविधव्याख्यानानि प्रतिपादितानि ।

वर्णद्वित्वस्य षाष्ठद्वित्वस्य च द्वित्वेन साम्येऽपि वर्णद्वित्वस्य सन्धिकार्ये एवोपयोगात् षाष्ठद्वित्वस्य धातुविहिततिङन्तप्रयोगसाधने एवापेक्षितत्वात् तत्तत्प्रकरणे निरूपणम् कृतम् ।

यद्यपि तिङन्तमालायां भ्वाद्यदादिगणानां कार्याणि लिखितानि सन्ति, तथापि तत्राङ्गाधिकारक्रमेण व्युत्क्रमोऽपि कार्याणामुपलक्ष्यते । अत एव तत्र रुपमालाकारेणायमर्थः स्पष्टतया प्रदर्शितः - "इह त्वङ्गसाम्यानुरोधात् व्युत्क्रमेणापि गणाः - लिख्यन्ते ।" अतोऽग्रे तत्तद्गणपठितान् धातूनभिधाय तत्तद्गणानां नामनिर्देश उपलभ्यते । यथा - भ्वादि-अदादि-जुहोत्यादि-दिवादि-स्वादि-तुदादि-रुधादि तनादि-क्र्यादि-चुरादयः ।

रुपमालायां नायमेकान्तेन प्रक्रियाक्रम एवाश्रितोऽपि तु यत्र कुत्रचिदष्टाध्यायीक्रमोऽपि यथा प्राधान्येन षत्वणत्व प्रकरणयोः । अभयस्मिन् प्रकरणे शब्दसाधनप्रक्रियापद्धतेर्क्रमं परित्यज्यापि सूत्राणां सन्निवेशो वर्तते । पुरातनसूत्रक्रमवासनावासितान्तःकरणमेव सूत्रक्रमोपन्यासे हेतुरिति तत्तस्थलावलोकनेन प्रतीयते । यथा षत्वसत्वणत्वमालायाम् ।

| **सूत्रक्रमाङ्क** | **सूत्रम्** | |
|---|---|---|
| ५५६ | पूर्वपदात्संज्ञायामगः | ८/४/३ |
| ५५७ | प्रनिरन्त० | ८/४/५ |
| ५५८ | विभाषौषधित्रनस्पतिभ्यः | ८/४/७ |
| ५५९ | अह्नोऽदन्तात् | ८/४/७ |
| ५६० | वाहनमाहितात् | ८/४/८ |
| ५६१ | पानंदेशे | ८/४/९ |
| ५६२ | वाभावकरणयोः | ८/४२१० |
| (तथैव षत्वादिप्रकरणे) | | |
| ५६७ | सोऽपदादौ | ८/३/३८ |
| ५६८ | नमस्पुरसोर्गत्योः | ८/३/४० |
| ५६९ | इणःषः | ८/३/३९ |
| ५७० | इदुदुपधस्य चाप्रत्ययस्य | ८/३/४१ |

इत्यादि

एवमन्यत्रापि अष्टाध्यायीक्रमेण सूत्राणां विन्यासो दृश्यते यथा प्राग्धितीयाधिकारप्रकरणे -

| | | |
|---|---|---|
| १०३ | प्राग्धिताद्यत् | ४/४/७५ |
| १०४ | तद्वहति रथयुगप्रासङ्गम् | ४/४/७६ |
| १०५ | धुरो यड्ढकौ | ४/४/७७ |
| १०६ | खः सर्वधुरात् | ४/४/७८ |
| १०७ | एकाधुराल्लुक च | ४/४/७९ |

| | | |
|---|---|---|
| १०८ | शकटदण् | ४/४/८२ |
| १०९ | हलसीराट्ठक् | ४/४/८१ |
| | इत्थं आर्हीयप्रकरणेऽपि । यथा | |
| १३३ | प्राग्वतेष्ठञ् | ५/१/१८ |
| १३४ | आर्हदगोपुच्छसंख्या-<br>परिमाणाटठक् | ५/१/१९ |
| | असमासे निष्कादिभ्यः | ५/१/२० |
| १३६ | शताच्च ठन्यतावशते | ५/१/२१ |
| १३७ | संख्याया अतिशदन्तायाः कन् | ५/१/२२ |

रूपमालायां वैदिकभाषा अननुशीलनाच्छन्दसि तत्तत्कार्य-सम्पादकानां सूत्राणां सर्वथा नोल्लेखः। केवलं द्वित्राण्येव सूत्राणि तद्विषये उपक्षिप्तानि। यथा - "आज्जसेरसुक्, (७/१/५०)" सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्याजालः (७/१/३९) इत्यादि।[1] भाषाशब्दानां प्रायः प्रसिद्धिमागतानामेव साधनायात्र सूत्राणि सन्निविष्टानि वर्तन्ते। तत्र वृत्तिषु सर्वथाऽपेक्षिता एवांशा उक्ताः। तद्यथा-

१- वृद्धिरेचि ६/१/८८ - अवर्णात् सह स्यात्।

२ एचोऽयवायावः ६/१/७८ अचि केवलस्य स्युः।

३- आद्गुणः ६/१/८७ अवर्णान्तादिकि सह स्यात्।

४- एङः पदान्तादति ६/१/१०९ सह पूर्वरूपं स्यात्।

५- ष्टुना ष्टुः ८/४/४१ स्तोः स्यात्।

६- तोः षि ८/४/४३ ष्टुर्न स्यात्।

७- मोऽनुस्वारः ८/३/२३ पदान्तस्य हलि स्यात्।

८- तोर्लि ८/४/६० पदान्तस्य लः स्यात्।

९- खरवसानयोर्विसर्जनीयः ८/३/१५-पदान्तस्य रेफस्य स्यात्।

१०- विसर्जनीयस्य सः ८/३/३४ पदान्तस्य खरि स्यात्।

येषां सूत्राणां स्वरूपेणैवार्थावबोधो भवति, तेषां सूत्राणां विमलसरस्वतीभिरत्र वृत्तिर्नैव कृता। एवंविधेषु सूत्रेषु केवलमुदाहरणमात्रमेव तैः प्रदत्तम्। तेषु कानिचिदत्र प्रदर्श्यन्ते। यथा -

१- दध्नष्ठक् ४/२/१८ दाधिकाः

२- उदश्वितोऽन्यतरस्याम् ४/२/१९ औदश्वित्काः। औदश्वितो वा

३- क्षीराड्ढञ् ४/२/२० क्षैरेयी यवागूः।

---

१ रू०मा० (छान्दसमाला) भाग - १ पृ० १३२, १३३

४- शुक्राद्घन् ४/२/२६ शुक्रियम्

५- सोमाट्ट्यण् ४/२/३० सौम्यम्

एतेनास्य ग्रन्थस्य लाघवमध्ययनाध्यापनादिष्वतीवोपकुर्यादिति समीक्ष्यैव विमलसरस्वतीभिरयं रूपामालाख्यग्रन्थः सम्पादितः।

येषां येषां तद्धितप्रत्ययानामव्ययसंज्ञा प्रयोजकत्वं तेषां विधायकानि सूत्राण्यव्ययमालायामेव सन्निवेशितानि। यथा - पञ्चम्यास्तसिल् (५/३/७) पर्यभिभ्यां च (५/३/९) 'सप्तम्यास्त्रल्' (५/३/१०) सर्वैकान्यकिंयत् तदः काले दा (५/३/१५) इत्यादीनि सूत्राणि। ग्रन्थेऽस्मिन् सर्वत्र प्रकरणानां मालाशब्देनोल्लेखः, अवान्तरप्रकरणान्तु भागशब्देन।

रूपमालाया इदमेव प्रमुखवैशिष्टयं वर्तते यदत्र सूत्राणां व्याख्यानमतीव सरलरीत्या कृतम्। केभ्यः सूत्रेभ्यः केषां पदानामनुवृत्तिः कस्मिन्सूत्रे विधीयते इति विवेचनं नास्मिन् दृश्यते। सामान्यरूपेण रूपमालाया अध्ययने सूत्राणां व्याख्यानप्रसङ्गे शास्त्रार्थदृष्ट्या काठिन्यप्रतीतिर्न जायते। यतो ह्यत्र सूत्राणां सिद्धार्थमुक्त्वा उदाहरणानि सुस्पष्टतया दर्शितानि। सिद्धान्तकौमुद्यादिग्रन्थेषु तु दीक्षितमहाभागैः सूत्रव्याख्यानेषु यत्र तत्र शास्त्रार्थादिः प्रदर्शितः। येनाध्ययनाध्यापने काठिन्यानुभवः स्वाभाविक एव। विमलसरस्वतीनां सूत्रार्थप्रक्रियाऽपि स्पष्टतरा सरला च विद्यते यथा संज्ञामालारम्भ एव "आदिरन्त्येन सहेता" १/१/७१ इत्यस्य व्याख्यानं स्पष्टतरशब्देषु एवमवलोक्यते -

"जिघृक्षितस्य समुदायस्य आदिवर्ण इत्संज्ञाकेनान्त्येन मेलयित्वोच्चार्यमाणः स्वस्य च मध्यवर्तिनां च ग्राहकः प्रत्याहारो ज्ञेयः। "इत्संज्ञकस्तु त्याज्यः।"[१]

वार्तिकानामुल्लेखो विमलसरस्वतीभिः बहुत्र कृतः। परन्तु तानि वार्तिकानि तथैव न गृहीतानि यथा महाभाष्ये भगवता पतञ्जलिना निगदितानि। वार्तिकेषु प्रायेण क्रियापदं परिवर्तितं वर्तते। यथा- "वक्तव्यम्, वाच्यमित्यस्य च स्थाने इष्यते, उपसंख्यानमि"त्यादि प्रयोगाः दृश्यन्ते। बहूनि वार्तिकानि काशिकातोऽप्युद्धृतानि सन्ति।

अत्रेदमप्यवधेयम् यदनेकेषां सूत्राणां व्याख्यानं श्लोकेषु रूपमाला-कारेण विहितम्। केषुचित् श्लोकेषु सूत्राणामर्थ एव केषुचिदुदाहरणान्येव केषुचिच्चप्राचीनवैयाकरणानां मतानि दर्शितानि। तथाहि

**(स्त्रीप्रत्यमालायाम्)**

**पिशङ्गी शबली काली कल्माषी नित्यमिष्यते।**
**शोणी शोणेति वा नीली चौषधिप्राणिनोर्मता॥**

**लोहिता लोहिनीत्यादौ तस्य नो नो ङीप् च वा भवेत्।**
**एतः कर्बुरवाच्येव श्वेतः श्वेतार्थकस्तथा।**[२]

---

१. सू० मा० भाग - १ पृ० ०२
२. रु० मा० भाग - २ पृ० १४

(कारकमालायाम्)

**कृषादिषु प्रधाने स्युरप्रधाने दुहादिषु ।**
**ण्यन्तेष्वण्यन्तकर्त्राख्ये कर्मण्यर्थे तङादयः ।।**
**पन्थानं पृच्छ्यते पान्थः पुष्पाण्युच्चीयते तरुम् ।**
**ग्राममाकृष्यते शाखा पाठ्यन्ते वटवः स्मृतिम् ।।[१]**

(अजन्तमालायाम्)

**इकः षण्ढेऽपि सम्बुद्धौ गुणे माध्यान्दिनेर्मते ।**
**त्रिधा चोशनसो रूपं सान्तं नान्तमदन्तकम् ।।[२]**

एवमुपर्युक्तविवेचनेनेदमवगम्यते यत्सूत्राणां व्याख्याने ग्रन्थकारः कुशलो व्याख्याता । यतो हि सूत्रव्याख्यानप्रक्रियायां सरलोपाय अङ्गीकृतः । एतेषां सूत्रव्याख्याने मतान्यपि संगृहीतानि वर्तन्ते ।

प्रकरणानां समावेशो वैज्ञानिकदृष्ट्या विहितः । व्याकरणशास्त्राध्ययनं स्वबुद्धौ परिकल्प्य कस्य प्रकरणस्य पूर्वज्ञानमपेक्षितमिति सम्यग् विचार्य प्रकरणानां क्रमव्यवस्था स्वीकृता । रूपमालायां विषयप्रतिपादनपद्धतिः सुमनोहारिणी तथा अल्पमतीनामपि सद्यः सुबोध्या वर्तत इति नास्त्यत्र शङ्कावसरः । रूमपालेयं बालानां सुखबोधाय व्याकरणशास्त्रे तेषां प्रवेशाय च विमलसरस्वतीभिः विरचितेति ग्रन्थारम्भे तैर्स्वयमेवोक्तम् ।

**शिवमभिवन्द्य विदध्मो मालामल्पां सुरूपकुसुमानाम् ।**
**शिशुकण्ठभूषणार्थं पाणिनिसूत्रैरनेकगुणैः ।।**

अस्तु रूपमाला व्याकरणशास्त्रस्य महत्वशाली प्रक्रियाग्रन्थोऽस्तीति न विवादः । ग्रन्थोऽयं बालानां कृतेऽत्यन्तोपकारकः । ग्रन्थेऽस्मिन् पाणिनेरष्टाध्याय्याः नवीनक्रमेण विषय-स्थापनम्, नूतनशैल्याः सूत्रावार्तिकादीनां व्याख्यानम्, अपाणिनीयपरम्परादृष्ट्या तद्विवेचनं च वर्तते । अत एव ग्रन्थोऽयं संस्कृताध्येतॄणाम्, विशेषतो व्याकरणशास्त्रे प्रविविक्षूणां कृते नूनमेव मार्गदर्शको भविष्यतीति ।

---

१. रू० मा० भाग - २ पृ० २७
२. रू० मा० भाग - १ पृ० ६३

षष्ठोऽध्यायः

# लक्ष्यभेदपुरः सरं रूपमालाया आकलनम्

## (क) प्रयोगविशेषणां समीक्षा -

अथेदानीं लक्ष्यभेदपुरः सरं रूपमालायाः विवेचनावसरे कतिपयविशिष्टप्रयोगाणां विवेचनं प्रस्तूयते। रूपमालायामनेकेषु स्थेलषु ग्रन्थकृता "इत्येके, इति केचित्, इति चिन्त्यमि"त्यादि रूपेण आहोस्विन्नामनिर्देशपूर्वकं मतान्तरं दर्शितम्, त एवात्र प्रयोगाः ग्रन्थातरैः सह समालोचयिष्यन्ते ।

### सैष दाशरथी रामः रू० मा० भाग- १, पृ- ४२

रूपमालायां "सोऽचि लोपे चेत्पादपूरणमि"ति (६-१-१३४) सूत्रस्य "सशब्दादुत्तरस्य सोर्लोपः स्यादचि परे ऋचि पादपूरणं चेदि"त्यर्थः कृतः। तत्रैव "अच्यपि तदः सुलोपोक्तिर्भाषायामपीत्येके" इत्युक्त्वा मतान्तरं दर्शितम्। तेन "सैष दाशरथी रामः, सैष राजा युधिष्ठिरः" इत्यादि सिध्यन्ति। व्याख्यानमिदं काशिकावृत्तिमनुसरति। यथा -

**"पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति।"**

तेनेदमपि सिद्धं भवति। सैष दाशरथी रामः महाबलः[१] ।

सिद्धान्तकौमुद्यां तु दीक्षितमहाभागेन[२] "इह ऋक्पाद एव गृह्यते," इति वामनाचार्यस्य मतमुद्धृतम्, "सेमामविड्ढि प्रभृतिम् प्रईशिषे" इत्याद्युदाहृतञ्च। तत्रैव च "अविशेषाच्छलोकपादोऽपि इत्यपरे" इत्यादिना अन्येषामाचार्याणां मतं प्रदर्शयन् 'सैष दाशरथी रामः' इत्याद्युदाहरणानि प्रदत्तानि।

### हाहा रू० मा० पृ०- ५७

अजन्तामालायां "हाहा क्विबन्तः सोमपावदित्येके" इति रूपमालाकारणोक्तम्। अस्याशयश्चेत्थम् - केचिदाचार्याः "हा" इत्युपपदपर्वकात् त्यागार्थकहाधातोः क्विप्प्रत्ययं विधाय सोमावत् हाहाशब्दं स्वीकुर्वन्ति। यदि गन्धर्वविशेषवाचकं हाहापदं तदा अधातुरेव। यथा चोक्तम् -

---

१ काशिका सू० ६/१/१३४, पृ० १६३

२ सि० कौ० (स्वादिसन्धिप्रकरणम्) सू० - १७७

**"हाहा हू हू सखतस्य शसि हाहानधातुतः ।**
**ङयि हाहे ओसि हाहौरामि हाहाम् गुणश्च ङौ ।।"**[१]

एवं रूपमालोक्तं मतान्तरं बोपदेवपण्डितानामिति प्रतीयते । यतो हि मुग्धबोधे - "धोराल्लोपेऽच्यधौ" इति सूत्रे धोः किम् ? हाहाः,हाहा,हाहाभ्यामित्यादि शेषं विश्वपावदिति व्याख्यानं दृश्यते[२] । रूपावतारेऽपि रूपमालवद् व्याख्यानं स्वीकृतम्[३] । प्रक्रियासर्वस्वे "हाहान्"इत्यस्य साधुत्वावसरे "आदन्ताच्छसो नत्वं वेति कौमुदी, आदन्ताच्छसो नत्वाभाव इत्येके" इत्युक्तम् ।[४] परं सिद्धान्तकौमुद्यां "हाहान् इत्येवोदाहृतम् । तत्र हि - आतोः धातोः" (६-४-१४०)इत्यस्य वृत्तौ हाहाशब्दस्य रूपाणि दर्शितानि । हाहा इत्यव्युत्पन्नं प्रातिपदिकमिति तत्रैवाह तत्वबोधिनीकारः[५] ।

## विश्वसृट् रू० मा० पृ० - ८१

"व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छसां षः" (८-२-३६) इतिसूत्रे रूपमालायां - विश्वं सृजतीति विश्वसृट् । कुत्वमस्यासाधु । केचित्तु"क्विन्प्रत्ययस्य कुः" इत्यत्र क्विन्प्रत्ययशब्देन क्विन्नित्य प्रत्ययोः यस्माद्धातोः क्वचिद् दृष्टः स धातुरित्युच्यते न तु क्वन्प्रत्ययान्त एव । तेन यथादृक् तत्वदृगित्यादौ कुत्वं सर्वैरिष्यते । एवमिहापीष्टमपि मन्यते । इति विवेचनं वर्तते । तथैव मुग्धबोधस्य टीकायां "विश्वसृजः कुङ् वा फे" इति वक्तव्यम् । विश्वसृक्, विश्वसृड्भ्याम् इति व्याख्यातम्[६] । अत्र केचित्वादिना दर्शितं मतान्तरमसमीचीनमेवेति प्रतीयते, सृजिदृशोर्झल्यमकिति (६-१-४८) इतिसूत्रे अमिसङ्ग्रहणमिति वार्तिकमुपक्रम्य क्विबन्तस्य मा भूत् रज्जुसृड्भ्यामिति भाष्यप्रयोगात् । इदमेवाभिप्रेत्य सिद्धान्तकौमुद्याम् "विश्वसृट् विश्वसृड् इह सृजियज्वोः कुत्वं नेति क्लीबे वक्ष्यते" । इत्युक्तम् । अस्याशयः तत्वबोधिन्यां श्रीमज्ज्ञानेन्द्रसरस्वतीभिरित्थं वर्णितः - "विश्वं सृजतीति विश्वसृट् क्विबन्तः क्विप्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्कुत्वं कस्मान्न भवतीत्याशङ्क्याह नेति क्लीबे वक्ष्यत इति । रज्जुसृड्भ्यामिति भाष्य प्रयोगात् ।[७] यद्वा व्रश्चादिसूत्रे सृजियज्वोः पदान्ते षत्वं कुत्वापवादः इति वक्ष्यत इत्यर्थः ।"[८]

अत एवात्र कुत्वं न भवतीत्येव पाठो ज्यायान् इति ।

---

१ रु० मा० भाग - १, पृ० - ५७

२ मु० बो० व्याकरणम् - पृ० ६९

३ रूपावतारः भागः - १, पृ० ४३

४ नारायणभट्टः - प्रक्रियासर्वस्वम् भाग ४, पृ० १४३

५ "गन्धर्वविशेषवाचकमव्युत्पन्नं प्रतिपदिकमिदम् । "हाहाहूहूश्चैवमाद्या गन्धर्वाः" इत्यमरः ।"
सि० कौ० (अजन्तपु०प्र०) तत्वबोधिनी सू०२४०

६ श्री रामतर्कवागीशः - मुग्धबोधटीका पृ० १०९

७ सि० कौ० ( हलन्तपुल्लिङ्गप्रकरणम् ) सू० - ३७८

८ सि० कौ० तत्वबोधिनी ( तत्रैव )

## त्वत्यदौ रू० मा० पृ० ९६

हलन्तमालायां "त्वत्यदौ छान्दसावित्येके" इत्युक्त्वा अन्येषामाचार्याणां मतं रूपमालाकारेण दर्शितम्। यथा-त्यजति लौकिकप्रयोजनानि "इत्यर्थे त्यज्धातोः" त्यजितनियजिभ्यो डित् (उ०/वा०/१३२ सू०) इत्यादि प्रत्ययेडित्वात् टिलोपे "त्यद्" इति सिद्धयति। म० म० पं० सभापतिशर्मणा सिद्धान्तकौमुद्याः टीकायामेतत् स्पष्टीकृतम्, यल्लोकेऽप्यनयोः प्रयोगो भवति।[१]

## हे भ्रूः रू० मा० पृ० १२८

भ्रमति चलतीति भ्रूः। "भ्रमेर्डूः" (३०२ पा० ६८सू०) इति भ्रमतेर्डूप्रत्ययः डित्वाट्टिलोपः। हे भ्रूरित्यत्र सम्बद्धौ डूप्रत्ययस्यास्त्रीप्रत्ययत्वात् "नैयङुवङ्स्थानावस्त्री" (१-४-४) इति नदीसंज्ञानिषेधाद्ध्रस्वाभावः। अत एव रूपमालायां हे भ्रूरिति प्रदर्श्य "भा भांक्षीर्विभ्रमं भ्रू,सुभ्रूत्वं कुपितेत्यपास्तमशनमित्यादि चिन्त्यमि"त्युक्तम्। काशिकायामपि हे भ्रूरित्येवोदाहृतम्। परमपाणिनीये मुग्धबोधे - "सुभ्रुदीद्यजम्बार्थानां धौस्वः" इतिसूत्रेणात्र ह्रस्वत्वं विधीयते[२]। हेमचन्द्रेणापि स्वकीये शब्दानुशासने "नित्यदिद् द्विस्वराम्बार्थस्य ह्रस्वः" इतिसूत्रेण ह्रस्वमुक्त्वा हे सुभ्रु इत्युदाहृतम्। सिद्धान्त कौमुद्यामपि दीक्षितमहाभागेन -"हापितः क्वासि हे सुभ्रु" इति भट्टिकाव्यस्थपद्यमुदाहृत्य तत्साधुत्व-विषये शङ्कामुपस्थाप्य प्रमाद एवायमिति बहवः" इत्युक्तम्[३]। परन्त्वेवं सति "मुकुलमतिचनेत्रे सर्वदा सुभ्रुखेदः,विमानिना सुभ्रु पितुर्गृहे कुतः" इति कालिदास प्रयोगः रूपमालोक्तप्रयोगश्चोपन्नः स्यात्। अतस्तत्वबोधिनीकारेणोक्तम् - "केचितु" -

"ने यङुवङ्स्थानावस्त्री" इतिसूत्रे "वामि" इत्यतो वाग्रहणमपकृष्य व्यवस्थितवभाषां चाश्रित्य समादधिरे। तदसत्। तथा सतीह नञ्ग्रहणं "वामि" इत्युत्तरसूत्रं च व्यर्थस्यात् "नेयङुवङ्स्थानौ" इत्येव वक्तुं शक्यत्वात्, अन्ये तु "सामान्ये नपुंसकमि"ति कथंचित्समादधुः।

अत एव बहुत्र काव्येषु ह्रस्वान्तप्रयोगदर्शनात्, अपाणिनीयव्याकरणेष्वपि तत्समर्थनात् तस्यापि साधुत्वमस्तीति विज्ञेयम्।

## वाचा रू० मा० भाग-२ पृ० २

स्त्रीप्रत्ययमालायां "अजाद्यतष्टाप्" (४/४/१) इतिसूत्रव्याख्यावसरे विमलसरस्वतीभिः "हलन्तादपि वागादेष्टापमिच्छति भागुरिः" इत्युक्त्वा भागुरेराचार्यस्य मतं प्रदर्शितम्। काशिकायामपि हलन्तानां त्वप्राप्त एव कस्मिंश्चिदाब् विधीयते इत्यत्रास्य संकेतो विद्यते[४] तेन वाचा, वाक्, दिशा, दिक् इति सिद्धयन्ति।[५] सिद्धान्तकौमुद्यान्तु रूपामालावदेव व्याख्यानं

---

१. "स्यश्छन्दसि"इति छन्दोग्रहणात् "मासश्छन्दसि"इति ज्ञापनाच्च छान्दसं अपि लोके प्रयुज्यन्ते
सि० कौ० लक्ष्मीटीका - भाग २, पृ० - ६०६

२. मु० बो० व्याकरणम्, पृ० - ८७

३. काशिका, सू० ४-१-४

४. काशिका, सू० ४-१-४

५. मु० बो० व्याकरणम्, पृ० - १३५

दृश्यते। तत्र दीक्षितमहाभागेनैषा कारिकाऽप्युपन्यस्ता - "वष्टिभागुरिरल्लोपमवाप्योरुपंस-र्गयोः।

**आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥"**[1]

परं भागुरिमतसमर्थकं वचनं भाष्ये नैव दृश्यते। "ङ्याप्प्रातिपदिकात्" (४-१-१) इति सूत्रस्थभाष्यपर्यालोचनेनेदं वचनं नास्तीति विज्ञायते। तथाहि "आब्ग्रहणं न कार्यम्, अकारान्ताट्टाप्। तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धम्। यस्तहर्यनकारान्तात् कुञ्चा उष्णिहा देवविशेति" अत्राप्यकारान्तादेवविशमित्यत्र शङ्कितम्० ———तस्मात्कप्रत्यय एवं विषयः इत्युक्त्वा "बहुराजा" इति डाबन्तार्थमाब्ग्रहणमिति।

अत्र निश्दिशोरिगुपधलक्षणे के अदन्तत्वाट्टापि निशा इत्यादिरूपसम्भवेऽपि वाचाशब्द असाधुरेवेति शब्देन्दुशेखरे प्रपञ्चितम्।[2] अत एव भाष्यानुक्तत्वाद् भागुरिमतस-मर्थकवचनमिदमप्रामाणिकमेवेति।

## ब्रह्माणी रू० मा०, पृ० - ११

"इन्द्रवरुणभवशर्व०" (४-१-४९) इतिसूत्रे ब्रह्मशब्दस्य पाठाभावादनेन सूत्रेण "ब्रह्माणी" इति नैव सिध्यति। अत एव रूपमालाकृता ब्रह्माणी चिन्त्ये"त्युक्तम्। सिद्धान्तकौ-मुद्यान्तु "कथं ब्रह्माणी" इति शङ्कामुपस्थाप्य "ब्रह्माणमानयति जीवयतीति कर्मण्यण्" इत्यु-क्तम्[3]। तत्राह-तत्वबोधिनीकारः- "ण्यन्ताद्"अन प्राणने इत्यस्मात्कर्मण्यणि - "णेरनिटि" इति णिलोपे टिड्ढाणञ्० इति ङीपि "पूर्वपदात्संज्ञायामगः" इतिणत्वे च ब्रह्माणीति रूपसिद्धेरिति भावः। "परं प्रक्रियाकौमुद्यामन्यमतप्रदर्शनाय ब्रह्माणी केचिदित्युक्तम्। तत्र केचित्पदेन बोप-देवपण्डितानां मतं दर्शितमिति प्रतीयते। तथाहि मुग्धबोधे "ब्रह्मरुद्रभवमृडेन्द्रवरुणादनङ्च" इति सूत्रे आदौ ब्रह्मशब्दस्य पाठाद् ब्रह्माणीत्युदाहृतम्।

## युवती, युवतिः रू० मा०, पृ० - १६

"क्तादल्पाख्यायाम्" (४-१-५१) इति सूत्रे रूपमालायां "कृदिकारादक्तनो ङीषित्येके" इति केषाञ्चिन्मतं प्रदर्श्य राजी, राजिः चेत्यनयोः साधुत्वमुपदर्शितम्। ततः "अक्तिनः सर्वस्मादिकारादित्यन्ये", इतिमतान्तरमुक्त्वा "युवती, युवति" इत्युदाहरणे उप-न्यस्ते। कविजनैरपि दीर्घेकारान्तस्य युवतीशब्दस्य प्रयोगः कृत इति तत्रैव रूपमालाकृतोक्तम् "युवत्यस्त्वामेवं कति न पतिमुर्वीश वृणुते।" इति। काशिकायामप्येवमेवोक्तम्, परं तत्रोदा-हरणानि नैवोन्यस्तानि। सिद्धान्तकौमुद्यान्तु "कृदिकारादक्तिनः" इति "सर्वतोऽक्तिन्नर्थादि-त्येके" इति च गणसूत्रत्वेनोपन्यस्ते[4]। तत्र पूर्वं "रात्री, रात्रिः" इत्युदाहरणयोः सिद्धी विहिता। अथ च "सर्वतो," इत्यस्य क्तिन्नर्थप्रत्ययान्तभिन्नात्कृतोऽकृतो वा य इकारस्तदन्तात् स्त्रियां

---

१. सि० कौ० (व्याकरणम्) सू० - ४५३

२. द्र०- ल० श० शे०, पृ० ३६३.

३. सि० कौ० (स्त्रीप्रत्ययप्रकरणम्) सू० ५०६

४. सि० कौ० (स्त्रीप्रत्ययप्रकरणम्) वह्वादिगणपाठः सू०

ङ्प्वेत्यर्यः कृतः। व्यवस्थितविभाषात्वादिह न, सुगन्धिप्रियपतिर्वेश्या" इति तत्वबोधिन्यामु-क्तम्।

एवं बहुत्र काव्येषु युवतीशब्दस्यप्रयोगदर्शनात् रूपमालायां गणसूत्रेण वैकल्पिको ङीष्विधानेन युवतीति प्रयोगस्य साधुत्वं चिन्तनीयेव। सिद्धान्तकौमुदीकृता तु युवतीति यौतेः शत्रान्तान्ङीपि बोध्यमित्युक्तम्। अत्र पं सभापतिशर्मोपाध्यायानामाशयश्चेत्थम् - "न च तिप्रत्ययेन स्त्रीत्वस्योक्त्या ङीष् न स्यादिति वाच्यम्; स्त्रीप्रत्यये उक्तार्थानामप्रयोग इति न्यायाप्रवृत्तिः। वयोवाचकानां वैकल्पिकजातित्वस्य भाष्यसम्मततया "इतोमनुष्यजातेः इति तिप्रत्ययान्तान्ङीषा वा सिद्धेः। न चैवमपि युवतीनां समूहो यौवतमिति न सिद्धयेत्। किन्तु "तस्य समूहः" इत्याणि "भस्याढे - तद्धिते" इति पुंवद्भावे यौवनमित्येव स्यादितिवाच्यम्, युधातौः बाहुलकादौणादिके कतिप्रत्यये ततः समूहे अणि तत्सद्धेः। इति क्लेशं परिहरन्नाह सिद्धान्तकौमुद्यां-शत्रान्तादिति युधातोर्लटि "लटः शतृशानचावि"ति लटः स्थाने शत्रादेशे उगित्वात् "उगितश्च" इति ङीप्। तत एव समूहे "अनुदात्तादेरञ्" इत्यञि यौवतमित्यपि सिध्यति। यूनस्तिः इति तिप्रत्ययान्तादणि तु "भस्यांढें" इति पुंवद्भावेन तिप्रत्ययनिवृतौ अन् "इति प्रकृतिभावेन टिलोपाभावे यौवनमिति। तिप्रत्ययान्तादप्यणि"भि क्षादिषु पाठसामर्थ्यान्न पुवद्भाव इति वृत्तिस्तु चित्या, भिक्षादिभ्योऽण् "इति सूत्रस्यभाष्यविरोधात्।"[1] तस्मादुभय-विधप्रयोगयोः साधुत्वमङ्गीकरणीयमिति।

## ष्टुञ् स्तुतौ रू० मा०, पृ० - ७१

रूपमालायामाचार्यचरणैः "गुणोऽपृक्ते:" (७-३-९१) इतिसूत्रव्याख्याने "ष्टुञ् स्तुतौ" इत्यस्माद् धातोः "तुरुस्तुशम्यमः सार्वधातुके" इति विभाषा ईडागमेन स्तवीति, स्तौति स्तुतः, स्तुवन्ति" इति मतान्तरमपि दर्शितम्। आपिशलेराचार्यस्य मतमिदमिति काशिकाकृतोः वामनजयादित्ययोराशयः[2]। इदमेवं मतं समर्थयन्नाह प्रक्रियाप्रकाशकारः - "आपिशलास्तु सर्वेषामपि छन्दस्येड् विधानमिदमित्याहुरिति।"[3] सिद्धान्तकौमुद्यामत्र किमपि नोक्तम्। अत एव काशिकामनुसृत्य रूपमाला कृता आपिशलिराचार्यस्यैव मतमुद्धृतमिति।

## पिपूर्त्तः, पिपृतः रू० मा०, पृ० - ९२

"पॄ पालनपूरणयोः" इति दीर्धान्तोऽयं धातुः। तस्माल्लटि तसि धातुकार्ये "उदोष्ठ्य पूर्वस्य" (७-१-१०२) इत्युत्वे दीर्धे च कृते पिपूर्त्त इति सिद्धयति। अत्र रूपमालायाम् अन्यमतसंग्रहाय "केचित्तु पृधातुं ह्रस्वान्तं पठन्ति, तन्मते पिपृतः" इत्युक्तम्। तथा च पृ इति ह्रस्वान्ततया "उदोष्ठ्यपूर्वस्येत्युक्तं न भवति। प्रक्रियाकौमुद्यामपि एवं विधं व्याख्यानम्[4]।

---

१. सि० कौ० (लक्ष्मीटीका) भाग -, पृ० ७६४

२. "आपिशलास्तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसीति पठन्ति। तत्र सर्वेषामेव छन्दसि विषये विधिरयं भवति। सार्वधातुक इति वर्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम् स्तुवतीत, शमीध्वमित्यत्रापि यथा स्यादिति।"

३. प्रक्रियाकौमुदी - प्रकाशव्याख्या, पृ० - १९५

४. "ह्रस्वोऽपि पिपर्तिरस्ति"। प्र० - कौ०, भागः ३, पृ० - १९९

दीक्षितमहाभागस्तु सिद्धान्तकौमुद्यां" ह्रस्वान्तोऽयमपीति केचिदित्युक्त्वा पाणिनिसम्मतदीर्घान्तत्वस्या श्रयणे "तं रोदसी पिपृतम्" छान्दसत्वं शरणमित्याह[1]।

मुग्धबोधेऽपि वैयाकरणेन बोपदेवेन विकल्पेनोत्वं विधाय पिपूर्त्तः, पिपृत इत्युभयमुदाहृतम्[2]। क्षीरस्वामिनाऽपि-ह्रस्वान्तोऽयमित्युक्तम्[3]। तथैव कविकल्पद्रुमे पृ पालन इत्युक्तम्, पिपर्ति पिपृतः" इत्युदाहृतञ्चेति। एवं रूपमालाकृताऽत्र केचित्पदेन बोपदेवपण्डितोनामेव मतमुद्धृतमिति प्रतीयते।

एवं च वृत्तिन्यासपदमञ्जरीप्रदीपादिषु सर्वत्र पाणिनिसम्मतदीर्घान्तस्या श्रयणेन तदेवादर्तव्यमिति।

## दध्यस्यति रू० मा० भाग -३, पृ० - ११

रूपमालाकृता अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि "(७-१-५१) इति सूत्रं व्याख्याय वृषस्यति, क्षीरस्यतीत्युदाहृतम्। अत्रैव केषांचिदन्येषां मतसंग्रहाय" सर्वप्रातिपदिकयोः लालसायामसुगित्येके, दध्यस्ति। सुगित्येके। दधिस्यति।" इत्युक्तम्। व्याख्यानमिदं काशिकावृत्तिमनुसरति। यथा काशिकायाम् - "अपर आह सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः। दध्यस्यति, मध्वस्यति इत्येवमाद्यर्थम्। अपर आह-सुग्वक्तव्यः, दधिस्यति, मधुस्यति इत्येवमाद्यर्थम्" इत्युक्तम्[4]। एतदेवाभिप्रेत्य प्रक्रियाकौमुदीकारः "सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुग् वागम इति परे" इत्याह।[5] सिद्धान्तकौमुद्यान्तु-सर्वप्रातिपदिकानां लालसायां सुगसुकौ" इति वार्तिकं पठितम्। तत्र बालमनोरमाकारेण "न चानेनैव वार्तिकेन सिद्धे क्षीरलवणयोःलालसायामिति वार्तिकं व्यर्थमिति शङ्क्यम्, सर्वप्रातिपदिकानाम्० इति तु मतान्तरमित्यदोषादित्युक्तम्। भाष्येऽपि "अपर आहेत्यनेन मतान्तरमुपदर्शितमिति रूपमालोक्तं मतान्तरं युक्तिसङ्गतमिति स्वीकर्तव्यम्।

## कुमारायते रू० मा०, पृ० -१३

"कर्तुः क्यङ्सलोपश्च"(३-१-११) इतिसूत्रेणोपमानात् कर्तुः सुप आचारेऽर्थे क्यङ् भवति। तेन "सूर्यायते चन्द्रमा विद्वानिवाचरति-विद्वस्यते मूर्खः, कुमारीवाचरति कुमारायते वृद्धा" इत्यादि सिध्यन्ति। अत्र रूपमालायां मतान्तरदर्शनाय - "अस्य क्यङो विषये क्विपमिच्छन्त्येके" इत्युक्त्वा कस्यचित् कवेरयं श्लो क उद्धृतः-

**"सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः।**
**यामिनयन्ति दिनान्यपि सुखदुः खवशीकृते मनसि ॥"**

---

१ सि० कौ० (जुहोत्यादिप्रकरणम्) सू० २४९५

२ मुग्धबोधव्याकरणम् सू० ७३०, पृ० ६१५

३ क्षीरतरङ्गिणी ३/४, पृ० - २००

४ काशिका ७/१/५१

५ प्र० कौ० भाग - ३, वाराणसी पृ० ३४६

व्याख्यानमिदं वृत्तिकारमनुसरति। यतो हि तत्र "सर्वप्रातिपदिकेभ्यः क्विप् आचार इत्येके" इति वार्तिकं पठितम्[१]। परं दीक्षितमहाभागेन सिद्धान्तकौमुद्याम्-क्विप्रत्ययोऽयं विकल्पेन भवतीति स्वीकृतम्। तद्यथा - "सर्वप्रातिपदिकेभ्यः क्विब्बा वक्तव्यः। पूर्ववार्तिकं (आचारेऽवगल्भ०) तु अनुबन्धासञ्जनार्थम्। तत्र क्विबनूद्यते। प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते। तेन पदकार्यं न। कृपण इवाचरति कृपणतीति।"[२] प्रक्रियाकौमुद्यामपि मतान्तरं दर्शितमिति।[३]

## तस्थिवान् रू० मा० पृ० ५५

रूपमालायां "लिटः कानज्वा" (३-२-१०६) क्वसुश्च" (३-२-१०७) इतिसूत्रद्वयस्य व्याख्यावसरे कानच्क्वसुश्च छन्दस्यादेशौ विहितौ। प्रयोगस्तु भाषायामपि दृश्यते "इत्युक्त्वा तस्थिवान्, चक्राण इत्याद्युदाहृतम्। छन्दस्येवकानच्क्वसुश्च भवतः" इत्येव काशिकायां महाभाष्ये चोक्तम्। प्रक्रियाकौमुद्यान्तु मतान्तरसंग्रहाय प्रयोगवशात् लोकेऽपि इति केचित्" इत्युक्तम्।[४] तथैव नारायणभट्टमहाभागेन प्रक्रिया सर्वस्वे मतान्तरं दर्शितम्।[५] एवमेव सिद्धान्तकौमुद्याम् - "इह भूतसामान्ये छन्दसि लिट्। तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु बहुलं प्रयुञ्जते। तं तस्थिवासं नगरोपकण्ठे, श्रेयांसि सर्वाण्यधिजग्मुषस्ते।" इत्युक्त्वा भाषायामपि कानत्क्वसू आदेशौ इति समर्थितम्।[६]

"विभाषा पूर्वाह्णापराह्ण," इतिसूत्रभाष्ये तु पपुष आगतं पपिवद्रूप्यमिति प्रयुक्तम्।[७] तेन लोकेऽपि क्वचित् क्वसोः साधुत्वं सूचितम्। अत एव रूपमालोक्तं वचनं समीचीनमेव।

## शकितः, शक्तः रू० मा०, पृ० ८४

"उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" (१-२-२१) इति सूत्रे रूपामलाकृता शकेः "कर्मणि निष्ठायां विभाषयेड्भवतीत्याशयेन "कर्मणि शकेः क्तस्येड्वेति। शकितो घटः कर्तुं

---

१ काशिका सू० ३-१-११

२ सि० कौ०, सूत्र - २६६५

३ प्र० कौ० भाग - ३ (वाराणसी १९८०) पृ० - ३४६

४ प्र० कौ० भाग - ३ (वाराणसी १९८०) पृ० - ५४

५ "सूत्रवार्तिकभाष्येषु छान्दसावेव केवलम्।
कानच्क्वसू इति व्यक्तं साधितं माधवादिभिः॥
लोकेऽपि द्वयमस्तीति कौमुदी वावदीति सा।
क्वसुरेव तु लोकेऽस्तीत्युदितं भोजभूभुजा॥" प्रक्रियासर्वस्वम् भाग - २, पृ० ५२

६ सि० कौ० (कृदन्तप्रकरणम्) सू० ३०९५

७ महाभाष्यम् ४-३-२४

शक्तो वा।" इत्युक्तम्। तत् काशिकानुसारि एवेति "विभाषा भावादि कर्मणोः" (७-२-१७) इतिसूत्रवृत्या अवगम्यते।[१] क्षीरस्वामिनाऽपि शक्तितो घटः कर्तुम्। शकितः" इत्युदाहृतम्[२]। प्रक्रियासर्वस्वेऽप्येतादृशमेव व्याख्यानमुपलभ्यते[३]। सौनागाचार्यस्यैवेदं मतमिति प्रक्रियाकौमुद्यामुक्तम्[४]।

"यद्यपि शकिः केवलोऽकर्मकः। तथापि तुमुन्नन्तवाच्यक्रियाविषयत्वात् सकर्मको भवति। तथा च कर्मणि लादयो भवन्ति। अयं योगः शक्योऽकर्तुमिति हरदत्तः।"इति तत्रैव प्रक्रियाप्रकाशकाराणामभिप्रायः।

**स्फीतः, स्फीतिः रू० मा०, पृ० - ८८**

रूपमालायां "स्फायः स्फी निष्ठायाम्" (६-१-२२) इति सूत्रं व्याख्याय "स्फीतः" इत्युदाहृतम्। तत्रैव "स्फीतिस्तु चिन्त्या" इत्यप्युक्तम्। काशिकावृत्तौ "स्फातिः" इत्येव क्तिन्नन्तस्य रूपमिति स्वीकृतम्। तद्यथा - निष्ठायामिति किम् ? स्फातिः स्फातीभवतीत्येतदपि क्तिन्नन्तस्यैव रूपं न निष्ठान्तस्यो" निष्ठाव्यतिरिक्तस्थलेषु "स्फायी वृद्धौ" इत्यस्य स्फीभावः पूर्वोक्तसूत्रेण न भवतीत्याशयः।

प्रक्रियाकौमुद्यां - स्फाय्धातोः क्तप्रत्यये कृते "स्फायः स्फी" इतिसूत्रेण "स्फी" इत्यादेशे प्रातिपदिककार्ये कृते "स्फीतः" इति सिध्यति। तत्र वेति केचिदित्युक्त्वा "स्फीतः, स्फातः" इत्युभयविधं रूपमुक्तम्।[५] श्रीमता नारायणभट्टेनापि प्रक्रियासर्वस्वे "वेति कौमुदी स्फातम्" इत्युक्त्वा रामचन्द्राचार्यस्य मतं समर्थितम्[६]। क्षीरतरङ्गिण्यामप्येतादृशं व्याख्यानं दृश्यते[७]। मुग्धबोधेऽपि "स्फायः स्फी वा" इति पठ्यते[८]। सरस्वतीकण्ठाभरणव्याख्याता दण्डनाथस्तु "स्फायः स्फी" इतिसूत्रे "वाम्यवाम्" (६-१-३६) सूत्रतो वा इति पदमनुवर्त्य स्फीभावं विकल्पेनाह - स्फीतः, स्फीतवान्। स्फातः। तथा च सति स्फातीभवतीति प्रयोगोऽप्युपपद्यते। एवञ्च सति स्फातीभवति इत्येतदपि क्तिन्नन्तस्यैव रूपम्, न निष्ठान्तस्य इति यत् - काशिकावचनं तत्क्लिष्टकल्पनामात्रम्" इत्युक्तवान्। सिद्धान्तकौमुद्यामपि "स्फीतः" इत्येवोदाहरणमुपन्यस्तम्। अतः क्तिन्प्रत्यये स्फाय्धातोरुक्तसूत्रेण स्फीभावो न भवति। तस्मात्स्फीतिरिति प्रयोगोऽसाधुरेवेति प्रतीयते।

---

१. "सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन शकितो घटः कर्तुम्, शक्तो घटः कर्तुमिति।" काशिका सू० ७-२-१७

२. क्षीरतरङ्गिणी ५/१८ पृ० २३९

३. प्रकियासर्वस्वम् भाग - २, पृ० ३१

४. आदिकर्मणि निष्ठायां शकिरनिड्वेति सौनागाः। शक्तः, शकितोऽर्चितुं शिवस्तेनेति। "प्र०कौ० भाग ३ (वाराणसी १९८०) सू०८९५

५. प्र० कौ० भाग - ३ (वाराणसी १९८०) सू० ८६०, पृ० - ५५

६. प्रकियासर्वस्वम् भाग - २, पृ० ४३

७. "निष्ठायां स्फायः स्फीतः। ईदित्वं स्फायेरादेशानित्यत्वे लिङ्गम् - स्फातः" इत्युक्म्। क्षीरतरङ्गिणी सू० - ६/१/२२

८. मुग्वोधव्याकरणम् - क्तादिः सू० - १०७९

## उदरम्भरिः रू० मा० पृ० ९८

"फलेग्रहिरात्मम्भरिश्च" (३-२-२६) इतिसूत्रं व्याख्याय रूपमालाकृता क्षीरस्वामिनः मतं प्रदर्शनाय "क्षीरस्वामी उदरम्भरिमप्युक्तवान्" इत्युक्तम्। काशिकायामत्र - "अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः, उदरम्भरिः" इति पाठो दृश्यते[१]। प्रक्रियासर्वस्वेऽपि काशिकावदुल्लेखः[२]। परं महाभाष्ये "उदरम्भरिः" इति प्रयोगसाधनाय किमपि नोक्तम्[३]। सिद्धान्तकौमुदीकारस्तु प्रथमं चकारेण कुक्षिम्भरिः इति रूपं संसाध्य "उदरम्भरिः" इत्यस्य सिद्धये "चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुरिति चान्द्रव्याकरणसूत्रं निर्दिशति[४]। दुर्घटवृत्तावपि सिद्धान्तकौमुदीसदृशं चान्द्रव्याकरणस्वरूपं विनिर्दिष्टं वर्तते[५]। परं चान्द्रव्याकरणे साम्प्रतमेतादृशं सूत्रं कुत्रापि नोपलभ्यते। कातन्त्रे तु "आत्मोदरकुक्षिषुभृञः खिः" (४-३-३९) इति सूत्रं वर्तते। अतः क्षीस्वामिनोक्तं काशिकादावुक्तं उदरम्भरिः, कुक्षिम्भरिः" इत्यादिसूत्राणि कातन्त्रमूलान्येव सन्तीति।

## साहायकम् रू० मा० भाग ४ पृ० ५९

सहायशब्दात् "योपधादुरूपोत्तमाद्वुञ् (५-१-१३२) इत्यनेन वुञ्प्रत्यये आदिवृद्धौ अकादेशेऽकारलोपे विभक्त्यादिकार्ये कृते साहायकमिति रूपं निष्पद्यते। रूपमालायामत्र मतान्तरसंग्रहाय "साहाय्यमपीत्येके" इत्युक्तम्। काशिकावृत्तावपि "साहायाद्वेति वक्तव्यम्। साहायकम्, साहाय्यम्।" इति व्याख्यानं दृश्यते[६]। भट्टोजिदीक्षितमहाभागस्तु सिद्धान्तकौमुद्यां काशिकासदृशमेव "सहायाद् वा" वार्तिकमङ्गीकरोति[७]। चान्द्रव्याकरणे "योपधादुरूपोत्तमाद्सुप्रख्याद् वुञ्" इति सूत्रेण "साहाय्यम्, साहायकम्, सहायता" इति रूपाणि संसाधितानि[८]। अत एव रूपमालायामेके" इति पदेन चान्द्राचार्याणामेव मतमुद्धृतमिति प्रतीयते। चान्द्रव्याकरणस्यैव काशिकादिषु प्रभाव अवगन्तुं शक्यते इति।

## अहोरात्रम् रू० मा० पृ० १५२

रूपमालायां "रात्राह्नाहाः" (२-४-२९) इतिसूत्रस्य व्याख्याने "अहोरात्रस्य छन्दसि पण्ढतोक्तिः" इत्युक्तम्। वचनमिदं "हेमन्तशिशिरावहोरात्रे च च्छन्दसि" (२-४-२८) इतिसूत्रमनुसरति। हेमन्तशिशिरौ, अहोरात्रे" इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवतीत्याशयः।

---

१ काशिका ३-२-२६

२ द्र० प्रक्रियासर्वस्वम् पृ० १३८

३ "आत्मम्भरिरिति किं निपात्यते। आत्मनो मुम्भृञश्च चेति प्रत्ययः। अत्यल्पमिदमुच्यते। भृञः वक्ष्यात्मनोर्मुम् चेति वक्तव्यम्। कुक्षिम्भरिः, आत्मम्भरिश्चरति यूथमसेवमानः।" महाभाष्यम् ३-२-२६

४ सि०कौ० सू० २९४०

५ द्र० - दुर्घटवृत्तिः - (३-२-२६)

६ काशिका सू० (५-१-१३२)

७ सि०कौ० (वा०३०९४)

८ चान्द्रव्याकरणम् सू० ४-१-१४८

काशिकायामपि "छन्दसीति किम् ? दुःखे हेमन्तशिशिरे, अहोरात्राविमौं पुण्यौं । छन्दसि लिङ्गव्यत्ययः उक्तः, तस्यैवायं प्रपञ्चः" इत्युक्तम् ।

परं प्रक्रियाकौमुदीकृता "एकवद्भावात् क्लीबता" इति विलिख्य-अहोरात्रमिति नपुंसकलिङ्ग एवोदाहरणं दत्तम् । एवं व्याकरणमिताक्षरायामपि प्रक्रियाकौमुदीकारस्यैव मत-मुपन्यस्तम्[१] । तच्च दीक्षितमहाभागेन "रात्राह्नाहाःपुंसि" (२-४-२९) इत्यत्रानन्तरत्वात् पर-वल्लिङ्गतापवादोऽप्ययं परत्वात् समाहारनपुंसकतां बाधत इत्युक्त्वा निराकृतम्[२] ।

## (ख) सूत्रादीनां समालोचनम्

अथात्र ईदृशानि सूत्राण्यधिकृत्य विवेचनं प्रस्तूयते येषां व्याख्यान विषये विभिन्नेषु प्रक्रियाग्रन्थेषु वैषम्यं वैमत्यं वा दृश्यते । कानिचित्सूत्राणि रूपमालायामन्यथा व्याख्यातानि अन्यथा चान्येषु प्रक्रियाग्रन्थेषु । एवंविधानां सूत्राणां तत्तत्प्रक्रियाग्रन्थीयानि व्याख्यानानि उपस्थाप्य यथा - सम्भवं तेषां समन्वये भाष्यकाशिकादिग्रन्थान्तरसंवादाभ्यां युक्तायुक्तत्व-व्यवस्थापने च यथामति प्रयतिष्यते । तथा चात्रैव एवंविधानि कानिचित्वार्तिकान्यपि समालो-चयिष्यन्ते ।

### हलन्त्यम् १-३-३ रू० मा० भाग - १, पृ० - २

अत्र "उपदेशेऽजनुनासिक इत्: (१-३-२) इतिसूत्रादुपदेशेद् इत्येते पदेऽनुवर्तेते । तेन उपदेशे यदन्त्यं हल् तदित्संज्ञमिति सूत्रार्थः रूपमालायाम् । तत्र वाक्यार्थज्ञानस्य पदार्थज्ञा-नाधीनत्वात् हलन्त्यमिति सूत्रे हल्पदार्थज्ञानाभावे सूत्रार्थबोधो न स्यात् । हल्पदार्थज्ञानञ्च "आदिरन्त्येन सहेता" इतिसूत्रेणैव स्यात् । तत्सूत्रस्यापि इत्पदार्थज्ञाने सत्येवार्थबोधः । इत्पदा-र्थज्ञानन्तु हलन्त्यमिति वाक्यार्थबोधाधीनमित्यन्योन्याश्रयदोषः । तत्परिहाराय विमलसरस्व-तीभिः रूपमालायां हलन्त्यमितिसम्पूर्णसूत्रस्यावृत्तिः दर्शिता । यथा - "इहान्योन्याश्रयाभावायास्य सूत्रस्यावृत्तिरिष्टा । तेन हलितिसूत्रे यदन्त्यं हल् तदित्संज्ञमिति प्रथमोऽर्थः । ततो हलप्रत्याहारे सिद्धे सतीतरार्थ इति ।"

एवं रूपमालामनुसृत्यैव दीक्षितमहाभागेन सिद्धान्तकौमुद्यामस्य सूत्रस्यावृत्तिः कृता । तत्र पूर्वस्य हलिति सूत्रेऽन्त्यमित्स्यादित्यर्थः । अनन्तरमुपदेशेऽन्त्यं हलित्स्यादिति द्वितीयसूत्रस्यार्थः । तेनाऽणजित्यादयः संज्ञाः सिद्धयन्ति[३] ।

सूत्रमिदं रूपावतारे प्रक्रियाकौमुद्याञ्च सकृदेव पठितम् तथैव व्याख्यातं च । उपदेशे यदन्त्यं हल् तदित्संज्ञं भवतीति रूपावतारे व्याख्यानम्[४] एवमेव प्रक्रियाकौमुद्यामपि, उभयत्रापि हल्पदस्य हल्प्रत्याहारपरतयैव व्याख्यानम् । तत्रोक्तं प्रसादकारेण-हलिति द्वितीय-मत्र तन्त्रेणणोपात्तं द्रष्टव्यम् । तत्रैकेन हल्ग्रहणेन हस्य समीपो यो ल् तस्येत्संज्ञा, पश्चाद् द्वितीयेन

---

१ " अहोरात्रद्विरात्रयोः क्लीबता कौमुद्यामुक्ता ।"
व्याकरणमिताक्षरा, ५-४-८७

२ द्रष्टव्यम् - प्रौ० म० भाग - २, सू० २-४ २९, पृ० - ६०

३ सि० कौ० ( संज्ञाप्रकरणम् )

४ रूपावतारः भाग - १, पृ० - १

प्रत्याहारग्रहणसंज्ञेति नेतराश्रयदोषः[१]। आचार्येण शेषकृष्णेनामपि प्रक्रियाप्रकाशेऽन्योऽन्याश्र-यदोषमाशङ्क्य "हलन्त्यमि" त्यत्र हल्ग्रहणं तन्त्रेणोपात्तम् "हल्ग्रहणानुवृत्तिर्वा एकशेशो वा" इत्यादिना परिहृतः। तत्रैकस्मिन् हलि अन्त्यमिति विग्रहे "सप्तमी शौण्डैरि"त्यत्र सप्तमीति योगविभागात्समासः। अथवा "हस्य ल्" इति षष्ठीसमासः। एवञ्च षष्ठ्या सामीप्यार्थत्वेन हमीपस्थल् इत्संक इत्यर्थ उपपद्यते। प्रक्रियासर्वस्वकारेणाप्ययमेवाशयः प्रकटितः[२]। दीक्षित-महाभागानामाशयश्चात्रेत्थम् - "सामीप्यं न षष्ठ्यर्थः, समासस्य क्लिष्टत्वात्। नहि "ब्राह्मण-कम्बलः" इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते। नवा चित्रगुशब्दात् चित्रगवीणां समीपवर्ती वृक्षादिः प्रतीयते।" इत्यनया युक्त्या पूर्वोक्तं मतं निरस्य "तस्माद्यथोक्तमेव न्याय्यम्" इत्युक्त्वा सम्पूर्णसूत्रावृत्तिरेव तैर्समर्थिता।

मध्यपदलोपिसमासे सौत्रे वा समासस्य क्लिष्टत्वमेव। "अस्तेर्भूरि"ति सूत्रे - अस्तेरनन्तरे समीपे वेत्यादि भाष्यन्तु-अनन्तरादिपदाध्याहारेण तन्निरुपितसम्बन्धार्थिका, स्थानपदाध्याहारेण तन्निरुपितसम्बन्धार्थिका वा षष्ठी इत्यभिप्रायकम्। सामीप्यस्य षष्ठ्यर्थ-त्वाभावदेवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे। ग्रामकूपः गङ्गातीरमित्यादौ तु समीप एवावयवत्वारोपेण समासः। स्पष्टञ्चेदं "मपर्यन्तस्ये" ति सूत्रे केयटे[३]।

एवं सम्पूर्णसूत्रावृत्तिसमर्थनेऽपि पाणिनिसूत्रन्यासविरुद्धत्वात् गौरवाच्च तत्पक्षं निरस्य पण्डितराजजगन्नाथमहोदयेन स्वकीये मनोरामाकुचमर्दनमिति ग्रन्थे बहुभिरुपायैर-न्योन्या श्रयो वारितः।[४]

वस्तुतस्तु पर्यायेण तन्त्रादिकल्पने भाष्यरीत्या तात्पर्यद्वयकल्पने च महद्गौरवम्। तस्मा त्सम्पूर्णसूत्रावृत्तिरेव लधीयसी। अत एव नागेशमहाभागेन "न हि वर्णाभिव्यक्तिजन-ककण्ठताल्वाद्यभिद्यातगौरवमेवादर्तव्यम् न तु ज्ञानजनकमनोव्यापरगौरवमिति राजाज्ञास्ति।" इत्युक्तम्। अत एव भाष्यकारस्यापि सम्पूर्णसूत्रावृत्तावेव तात्पर्यमिति स्वीकर्तव्यमिति।

## उपदेशेऽजनुनासिक इत् (१-३-२)  रू० मा० भाग -१, पृ० ५

रूपमालायामजादिसंज्ञासाधकत्वात् "हलन्त्यमि"तिसूत्रं पठितम्। अत्र "उप-देशेऽजनुनासिक इत्" इत्यतः "उपदेशे इति पदमनुवर्तते। कोऽयमुपदेशपदार्थ ? इति जिज्ञासायां रूपमालाकृता" उपदिश्यत इत्युपदेशः वर्णपाठक्रमो धातुप्रत्ययागमादेशा अखण्ड-प्रातिपदिकानि च नद्ट्माङादीनि" इत्युक्तम्। एतेनेदं प्रतीयते यत् रूपमालाकारः "उप-देशेऽजनुनासिक इत्" इत्यत्रोपदेशपदं करणघञन्तं कर्मघञन्तञ्च मन्यते। तथाहि उपदिश्यत अनेन असौ उपदेशः, उपदिश्यते यः सः उपदेश इति। तत्रोपदिश्यतेऽनेनेत्युपदेश इति कर-णघञन्तोपदेशपदेन धात्वादीनां ग्रहणम्। उपोपपदाद् दिशेः कथमत्र करणे कर्मणि वा घञ् इत

---

१  प्रक्रियाप्रसादः पृ० १७

२  "हल्प्रत्याहारसिद्धिस्तु नो हलन्त्यमितीत्वतः।

३  तत्रैवहल्पदावृत्या सूत्रे हस्थो ल इद् भवेत्।"

प्रक्रियासर्वस्वम् ( संज्ञाखण्डः ) पृ० ७

४  द्र० प्रौ० म० ( संज्ञाप्रकरणम् ) पृ० १९

चेत् "अकर्तरि च कारके संज्ञायाम् (३-३-१९) इति सूत्रेण बोध्यम्। "करणाधिकरणयोश्च" (३.३.११७) घञ्बाधकः ल्युट् तु न प्रवर्तते बाहुलकादिति विमलसरस्वतीनामाशयः।

रूपावतारकृताऽपि "के पुरुपदेशाः ? इतिजिज्ञासामुत्थाप्य आगमादेशधातुगण-पाठप्रत्याहारसूत्राण्युपदेशाः "इत्युक्तम्"। तेनैषा कारिकाप्युन्यस्ता-

**धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।**
**आगमाः प्रत्ययादेशा, उपदेशाः प्रकीर्तिताः ।।**[१]

प्रक्रियाकौमुदीकृतापि "उपदेशेऽजनुनासिक इत्" इति सूत्राव्याख्यानावसरे धात्वा-दय एवोपदेशपदार्थतया स्वीकृताः। तेनापि "धातुसूत्रगणोणादि०" इतिकारिका उपन्यस्ता। अत्र प्रसादकृता विठ्ठलाचार्येण धातुसूत्रेत्यादिकारिकायाः व्याख्यानप्रसङ्गे "उपदिश्यन्ते यैस्ते" इति साधनव्युत्पत्यैते उपदेशा इत्युक्तम्। ततः आगमप्रत्ययादीनुदाहृत्योपदिश्यन्त इति कर्म-व्युत्पत्यैते उपदेशा इत्युभयमप्युक्तम्। तथैव प्रकाशकृता उपदेशपदस्य करणघञन्तत्वं कर्मघञन्तत्वञ्च स्फुटमेवोक्तम्[२]

अत्र महाभाष्ये "सिद्धंतूपदेशनेऽनुनासिकवचनात्"इति वार्तिकप्रत्याख्यानार्थं भाष्यकृता उपदेशशब्द एव बाहुलकात् करणे घञ्इति स्वीकृतम्। काशिकावृत्तावपि करणे घञित्येव स्वीकृतम्।[३]

परन्तु सिद्धान्तकौमुद्यामुपदेशपदस्य भावघञन्तत्वं स्वीकृत्य तस्याद्योच्चारणार्थ-कत्वं प्रतिपादितम्। तदाह सः- "उपदेश आद्योच्चारणम्।" तच्च प्रत्यासत्यैतच्छास्त्रप्रवर्तका-चार्याणामेव[४] अत्रोपदेश इत्यस्य उपशब्दस्याद्यर्थत्वाद् दिशधातो-रुच्चारणार्थत्वाद् भावे घञिगुणे आद्यञ्च तदुच्चारणं च आद्योच्चारणमिति योगार्थः। आद्यत्वं चात्र अज्ञातस्वरूपज्ञाप-कत्वमिति नागेशेनोक्तम्[५]। यदानुपूर्वीकमुच्चार्यते तदानुपूर्वीकमेव बुध्यते चेत्तदा तदुच्चार-णमाद्योच्चारणं बोध्यम्। यथा अइउण्, स्वौजस्, टाप्, ङीप् शीङादि।

यद्यपि उपदिश्यतेऽनेनेति करणव्युत्पत्या शास्त्रमुपदेश इति भाष्यवृत्यादिषु व्याख्यातम्। तच्च शास्त्रं शासनकरणम् प्रत्यासत्या व्याकरणशास्त्रीयधात्वागमप्रातिपदिकप्र-त्याहारसूत्रप्रत्ययादेशरूपम्। तथापि तद्भाष्य कथनं प्रौढिवादमात्रम्। करणे घञो दुर्लभत्वात् ल्युटा बाधात् "अकर्तरि च कारके संज्ञायामि" त्यत्र संज्ञायामित्यस्य प्रायिकत्वात् घञः प्राप्तिः। वासरूपविधिना पक्षे धञ् तु न, तस्य क्तल्युट्तुमुन्खलर्थेषु प्रतिषेधात्। तत्र भावल्युट एव ग्रहणमिति तु "ईषत्पानः सोमो भवता" इत्यत्र कर्मणि खल् नेति भाष्याप्रमाण्येन निषेधे साहचर्यानाश्रयणात्।

---

१ रूपावतारः (संज्ञावतारः)

२ "कर्मकरणसाधनयोर्द्वयोरपि तन्त्रेणोपदेशशब्देनोपादानम्।"
प्र० कौ० भाग-१, पृ० १६

३ "उपदिश्यतेऽनेनेत्युपदेशः, शास्त्रवाक्यानि, सूत्रपाठः खिलापाठे"ति"। काशीका १-३-२

४ सि० कौ० (संज्ञाप्रकरणम्) सू०।(आवृत्तिः) पृ०-५

५ ल० श० शे०, पृ०-१९

न च पुंसि संज्ञायां घ प्रायेण इतिसूत्रेण घ प्रत्ययो भविष्यतीति वाच्यम्, अस्यासंज्ञात्वात्, प्रायेण संज्ञायामिति व्याख्यानस्य क्लिष्टत्वात्। न ह्युपाधेरूपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च। असंज्ञात्वादेव घापवादो हलश्चेति घञपीह न। बाहुलकन्त्वगतिक गतिः। अत एव प्रक्रियाशब्दे प्रक्रियन्ते शब्दाः याभिरिति करणव्युत्पत्तिरपि परास्ता। तथा च वार्तिकम् - "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति।" अतो भाव एव प्रत्ययो न्याय्य इति प्रौढमनोरमायां शब्दरत्ने च विस्तरेण प्रपञ्चितम्[1]।

नागेशस्तु "उपदेशेऽजनुनासिक इत्" इतिसूत्रस्थम् उपदेशपदस्य करणघञन्तताप्रतिपादनपरं भाष्यमेव सिद्धान्त भूतं मन्यमानः उपदेशपदस्य करणघञन्ततामेवेच्छति। भावघञन्तोपदेशपदस्वीकारे आधारभूतं भाष्यन्तु एकदेशिन उक्तिरिति सः मन्यते। एवञ्च तदनुसारेण एकदेशयुक्तिभूतस्य 'तस्मिन्निति निर्दिष्टे पूर्वस्ये' तिसूत्रस्थभाष्यस्य मनोरमाकारीयं प्रौढिवादत्वकथनमेव प्रौढिवादः। स्पष्टञ्चेतत् लघुशब्देन्दुशेखरे[2]।

वस्तुतस्तु भाष्य उपदेशपदविषये द्वेधा स्थितिर्दृश्यते। "उपदेशेऽज्" इतिसूत्रस्थे भाष्ये भाष्यकृता उपदेशपदस्य करणघञन्तता स्वीकृता। "तस्मिन्निति निर्दिष्टे पूर्वस्ये"ति सूत्रे भाष्ये तूपदेशपदस्य भाववघञन्तता स्वीकृता। तत्र रूपमालाकाररूपावतारकारादिभिर्नागेशेन च "तस्मिन्निति निर्दिष्टे पूर्वस्य" इतिसूत्रस्थभाष्यस्य एकदेश्युक्तित्वमभिप्रेत्य "उपदेशेऽजनु०" इतिसूत्रस्यभाष्य-प्रामाण्येन उपदेशपदस्य करणघञन्तता अङ्गीकृता। सिद्धान्तकौमुदीकारेण त्वतो विपरीतं उपदेशेऽज०" इति सूत्रस्थभाष्यस्य वार्तिकप्रत्याख्यानमात्रपरत्वेन प्रौढिवादत्वमभ्युपगम्य" तस्मिन्निति निर्दिष्टे०" इतिसूत्रस्थभाष्यप्रामाण्येन उपदेशपदस्य भावघञन्तता प्रतिपादितेति।

## नाज्झलौ (१-१-१०) रू० मा० भाग - १, पृ० - ७

सूत्रमिदं "तुल्यास्यप्रयत्नावप्यज्झला - वन्योऽन्यं सवर्णौ न स्याताम्। तत आनडुहं चर्मेत्यादौ "यस्येति च" इत्यादि न प्राप्नोति। "इत्येवं रीत्या रूपमालाकृता व्याख्यातम्। तेन दीर्घाकारहकारयोः सावर्ण्यं स्वीकृतमिति प्रतीयते। रूपावतारकृताऽपि सूत्रमिदम् एवमेव व्याख्यातम्। तत्र तेनायमभिप्रायः प्रकटितः "न निषिद्धं सवर्णत्वं नाज्झलाविति आकारहकारयोः ईकारशकारयोश्च। अत्र ग्रहणकशास्त्रस्य अनभितिवृतत्वेन अच्प्रत्याहारस्य सवर्णाग्रहणात्"[3]। प्रक्रियाकौमुद्यामपीत्थमेवेदं सूत्रं व्याख्यातम्[4]।

भट्टोजिदीक्षितमहोदयस्यापि नाज्झलाविति सूत्रे अच्पदेन सर्वणानामग्रहणं सम्मतम्। यदाह-सिद्धान्त कौमुद्याम् "नाज्झलाविति निषेधस्तु न दीर्घेकारशकारयोः ग्रहणकशा

---

१ द्र०-प्रौ० म० ( संज्ञाप्रकरणम् ) पृ० ३९-४४

२ ल० श० शे०( संज्ञाप्रकरणम् )

३ तुल्यास्यप्रयत्नावपि अच् च हल् च परस्परं सवर्णसंज्ञौ न भवतः।" रूपावतारः भाग - १, पृ० ११

४ तुल्यास्यप्रयत्नावप्यझलौ न सवर्णौस्तः। इति सावर्ण्यनिषेधो न दीर्घशकारयोः न निषिद्धं सवर्णत्वं नाज्झलावितिदीर्घयोः। -
प्र० कौ० (पू०) पृ० - ६८

स्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः"[१] । परन्तु दीर्घाकारेण हकारस्य सवर्णसंज्ञायाः निषधसिद्ध्यर्थं तेन "नाज्झलावि"ति सूत्रे आकारप्रश्लेषं स्वीकृत्य "आकारसहितोऽच् आच् स च इत्येतौ मिथः सवर्णौ न स्तः ।" इत्येवं रीत्या सूत्रमेतत् व्याख्यातम् । एतदनुसारेण उक्तसूत्रे न अज्झलौ इति पदच्छेदः, आच् इत्यत्र च आ सहिता अच् आच् इति मध्यमपदलोपी समासः । अनेन चाकारप्रश्लेषेण आकारहकारयोः सवर्णसंज्ञा वार्यते । अन्यथा दीर्घेकारादेरिव दीर्घाकारस्यापि हल्भिः सवर्णसंज्ञा स्यात् । तेन विश्वपाभिरित्यत्र आकारे हकारप्रयुक्तं ढत्वादिकं स्यात् "कालसमयवेलासु तुमुन्" इत्यादयः सौत्राः निर्देशाश्चात्र प्रमाणम् । प्रकाशकृता अस्य सूत्रस्य उक्तरीत्या दीर्घाकारादिष्वप्रवृत्तौ आकारहकारयोः सावर्ण्यात्, इण्ग्रहणेन आकारस्यापि ग्रहणात् "रमासु" इत्यादौ षत्वापत्तिमाशङ्क्य 'वयस्यासु' इत्यादिभिः सौत्रनिर्देशैः ज्ञापकैः षत्वाभावः साधितः । एवं यत्र यत्र आकारे यस्य यस्य हकार प्रयुक्तकार्यस्यातिप्रसङ्गः, तत्र तत्र तस्य तस्य कार्यस्य ज्ञापकैर्वारणं तस्याभिमतमिति प्रतीयते ।

इदमत्र विचारणीयं यत् रूपमालाकृता दीर्घाकारहकारयोः "नाज्झलौ" इत्यनेन सावर्ण्यं न निषिद्ध्यते इत्यभिप्रायः प्रकटितः । परन्तु आकारे हकारप्रयुक्तकार्याणामतिप्रसङ्गस्य वारणं कथमिति तु न चिन्तितम् । रूपावतारप्रक्रियाकौमुदीकाराभ्यामपि एतद्विषयणी चिन्ता न कृता । मन्ये, तत्र आकारे हकारप्रयुक्तस्य तस्य कार्यस्यातिप्रसक्तेर्वारणं ततत्सौत्रनिर्देशरूपैः ज्ञापकैरेव अभिमतं स्यात् ।

## पूर्वत्रासिद्धम् (८-२-१) रू० मा०, पृ० -२३

सूत्रमिदं "सपादसप्ताध्यायीकार्ये प्राप्ते सत्युत्तरत्रिपादीकार्यं त्रिपाद्यामपि पूर्वपूर्वप्राप्तौ परमसिद्धं स्यात्" इत्येवं रीत्या रूपमालायां व्याख्यातम् । एतेनात्र कार्यासिद्धतत्वपक्षो दर्शितः । "त्रिपाद्यामपि पूर्वपूर्वप्राप्तौ परमसिद्धंस्यादि"त्यनेन सूत्रस्यास्याधिकारत्वं सूचितम् । रूपावतार प्रक्रियाकौमुदीकाराभ्यामपि अधिकारत्वाश्रयणेनैव सूत्रमिदं व्याख्यातम् । सिद्धान्तकौमुद्यां स्फुटमेव अधिकारोऽयमित्युक्तम् । प्रक्रियाकौमुदीकृतापि रूपमालावदेव कार्यासिद्धत्वं स्वीकृतम्[२] "येयं सपादसप्ताध्यायी अनुक्रान्ता एतस्यामयं पादोनोऽध्यायः असिद्धो भवति । इत उत्तरञ्चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति" इत्यनेन रूपावतारकृता तु शास्त्रऽसिद्धात्वपक्षे स्वीयः पक्षपातः सूचितः[३] ।

कार्यासिद्धत्ववादिनां रूपमालाका-प्रक्रियाकौमुदीकारादीनां पुनरेवमाशयः यत् असिद्धत्वस्य कार्यार्थत्वेन त्रिपादीस्थशास्त्रविहितस्य कार्यस्यैव, अनेन पूर्वकार्यदृष्ट्या असिद्धत्वं प्रतिपाद्यत इति । परन्त्वेवं कार्यासिद्धत्वस्वीकारे "मनोरथः" इत्यादावुत्वं न स्यात, परत्वात् "रोरि" इत्यस्य प्रसङ्गात् । यतो ह्यत्र कार्येऽसिद्धत्वारोपात् सूत्रोदाहरणसम्पत्यै परत्वात् "रोरि" इति रलोपे जाते, पुन अभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तृहतन्यायेन स्थानीभूतरोरभावात् "हशि चे" त्युत्वं न स्यात् । एवमिष्टरूपाद्यनापत्तिश्च । अतः शास्त्राऽसिद्धत्वपक्षा श्रयणमेव

---

१ द्र० सि० कौ० संज्ञाप्रकरणम् सू० - १३

२ "सपादसप्ताध्याय्यां विहितं कार्यं पूर्वपूर्वकार्यं प्रत्यसिद्धं ज्ञेयम् ।" - प्र० कौ० भागः १, पृ०९९

३ रूपावतारः ( पूर्वार्द्धः ) पृ० - १२

युक्तम् । शास्त्रस्य सर्वदाऽसिद्धत्वेन तदसिद्धत्वस्य शास्त्रशतेन कर्तुमशक्यत्वात् असिद्धवदित्यर्थकरणेन परशास्त्रप्रवृत्तिमवरुध्य पूर्वशास्त्रस्यैव प्रवृत्तिबोधनान्नोक्तलक्ष्ये दोषः ।

काशिकायामपि "इत उत्तरं चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवती"त्यादिवृत्या शास्त्रासिद्धत्वमेवाभिप्रतमित्यवगम्यते । न्यासकारेणापि तदेवं समर्थितम्[1] । तथा च "अत्राध्यायग्रहेण योगग्रहणेन च शास्त्राऽसिद्धत्वमाश्रीयत इति दर्शयतीत्यादिना पदमञ्जरीप्रणेतुः हरदत्तस्यापि शास्त्राऽसिद्धत्वमेवाभीष्टमिति प्रतीयते । अत एव दीक्षितमहाभागेनापि "सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यादि"ति ग्रन्थेन शास्त्रासिद्धत्वमेव स्वीकृतम्[2] । तत्परवर्तिना नागेशभट्टेनापि तदेवोपबृंहितम्[3] । यदि चासिद्धमित्यस्यासिद्धवदित्यर्थः । तथा च शास्त्राणां कार्यार्थतया कार्यस्यैव च मुख्येन यथा असिद्धवस्तुनँ उपादातुमशक्यत्वेन त्याग एव वस्तुतः क्रियते, तथैव कार्यसिद्धत्वादर्थादप्रवर्तनादिति यावत् "मनोरथः" इत्यादौ उत्वादीनां पूर्वप्रवृत्तौ दोषाभावेन कार्यासिद्धत्वेऽपि न क्षतिः ।

अत एव सपादसप्ताध्यायीकार्ये प्राप्ते सत्युत्तरत्रिपादीकार्यम्, त्रिपाद्यामपीत्यादिना कार्यासिद्धत्वस्वीकारेऽपि न काचिद्धानिरिति ।

## ङमो ह्रस्वादचि ङमुण् नित्यम् (८-३-३२) रू० मा०, पृ० ३४

रूपमालायामाचार्यचरणैः "ह्रस्वादुत्तरात्पदान्तान्ङमोऽचि परे नित्यं ङुट्णुट्नुटः स्युः । प्रत्यङ्ङास्ते, सुगण्णिह, पठन्निह ।" इति व्याख्यानं स्वीकृतम् । अत्र ङम इति षष्ठ्यन्तम् । ङमो ङमुट् भवतीत्यर्थः । व्याख्यानमिदं भाषावृत्तिकारमनुसरति । अत्र हि पुरुषोत्तमदेवमहाभागेन "ह्रस्वात्परस्य पदान्तस्य ङणनां ङुण्नुण्नुटः स्युरचि । उदङ्ङास्ते । श्वगण्णिह । यण्णिह । कुर्वन्नत्र" इत्युक्तम्[4] ।

वस्तुतस्तु ङम इति पञ्चम्यन्तम्, ङम उत्तरस्याचः "इतिभाष्यात् । पदस्येत्यधिकृतं ङम इत्यस्य विशेषणं पञ्चम्यन्तं विपरिणम्यते । ङम इति श्रुतेन ह्रस्वादित्यनेन" "श्रुतानुमितयोः श्रुतसम्बन्धो बलवान्" इतिन्यायेन सम्बन्धमनुभूय विशेषणतया तदन्तपरम्[5] । ङम इति पञ्चम्या "तस्मादित्युत्तरस्येति परिभाषया" "अचि" इति सप्तम्याः "षष्ठी" इति विपरिणामो भविष्यति । "उभय निर्देशे पंचमीनिर्देशो बलीयान् परत्वादिति भाष्योक्तेः[6] । सूत्रेऽचीति सप्तमीनिर्देशो लाघवार्थः "मय उञो वो वाँ" इत्युत्तरसूत्रेऽनुवृत्त्यर्थश्च । एतत्सर्वं मनसि कृत्य सिद्धान्तकौमुदीकृता "ह्रस्वात्परो यो ङम् तदन्तं यत्पदम्, तस्मात्परस्याचो नित्यं ङमुडागमः

---

१ "पादोनाध्यायग्रहणेनोत्तरोत्तरयोगग्रहणेन च शास्त्रासिद्धत्वमिहाश्रीयत इति दर्शयति ।" न्यासः (का० वि० पं०) पृ० १४९

२ सि० कौ० ( संज्ञाप्रकरणम् ) पृ० १७

३ द्र० - ल० श० शे०, पृ० - ३३, ३४

४ भाषावृत्तिः ८:३-३२, पृ० - ४०९

५ परिभाषेन्दुशेखरः पृ० - ११२, पृ० - १८३

६ सि० कौ०सू० - १३४, पृ० ११७

स्यादि"त्यर्थः प्रतिपादितः। रूपावतारेऽपि एवंविधं व्याख्यानम्[१]। प्रक्रियासर्वस्वकारेणापि एवमेव व्याख्यानमङ्गीकृतम्[२]।

इत्थमुक्तविवेचनेन अवगम्यते यद्भाष्यानुक्तत्वात् रूपमालाकृद्व्याख्यानमुपेक्ष्यमेव।

## "अचा रहाभ्यां द्वे" (८-४-४६) रू० मा० भाग - १, पृ० - १५

रूपमालाकृता अस्य सूत्रस्य "अच उत्तराभ्यां परस्य यरो द्वित्वं स्यादि"त्यर्थःकृतः। तत्र काशिका वृत्तेः प्रभावोऽवगम्यते। यतो हि काशिकायामपि "यरोऽनुनासिकेऽनुनासिको वा" (८-४-४५) इति पूर्वसूत्रात् वेतिपदस्यानुवृत्तिः नाङ्गीकृता। प्रक्रियासर्वस्वेऽपि वेत्यननुवृत्यैव "अचः परभ्यां रेफहकाराभ्यां परस्य यरो द्वेस्तः इत्यर्थः स्वीकृतः। परम् रूपावतारे सिद्धान्तकौमुद्यां च पूर्वसूत्राद् वेतिपदमनुवृत्य" अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। हर्य्यनुभवः, हर्यनुभवः। न ह्ययस्ति न। ह्यस्ति।" इति व्याख्यानमुपन्यस्तम्।

## प्रत्यये नित्यमिष्यते (वा०) रू० मा० भागः १, पृ०३०

रूपमालायां "यरोऽनुनासिकेऽनुनासिको वा" इतिसूत्रशेषतया वार्तिकमिदं पठितम्। सूत्रेणानेन योऽनुनासिकविधिः सः प्रत्यये नित्यं भवतीति तदर्थः। तेन "वाङ्मात्रम् इत्यादौ नित्यानुनासिकः। महाभाष्येऽपि "यरोऽनुसिकत्वे प्रत्यये भाषायां नित्यवचनमि"ति वार्तिकं दृश्यते। काशिकायामप्येवंविधो वार्तिकपाठो विद्यते। परं रूपावतारकृता "यरोऽनुनासिके तद्धितप्रत्यये परतः भाषायां नित्यमि"ति संकुचितं स्वरूपं प्रस्तुतम्[३]। प्रक्रियाकौमुद्यान्तु "मयटि नित्यम्" इतिवार्तिकं पठ्यते। तदनुसारेण मयटि प्रत्यये एवास्य व्यापारः न तु मात्रजादिष्वन्येषु तद्धितप्रत्ययेषु। भाष्यमनुसरता सिद्धान्तकौमुदीकृता पुनः "प्रत्यये भाषायां नित्यमि"ति वार्तिकं पठितम्[४] मयटि नित्यमिति प्रक्रियाकौमुदीस्थवार्तिकपाठानुसारेण तु "चिन्मात्रम् कियन्मात्रम्" इत्यादौ नित्यानुनासिको न स्यात्। अतः प्रक्रियाकौमुदीयो वार्तिकपाठः प्रौढमनारमायां भट्टोजिदीक्षितेन दूषितः[५]। प्रकाशकृता तु मयटि नित्यमित्यत्र मयट्ग्रहणस्य प्रत्ययान्तरोपलक्षणत्वं स्वीकृत्योक्तःकौमुदीग्रन्थः कथंचित्संगतिं नीतः[६]।

अतः संक्षेपरुचिना रूपामालाकारेण भाष्यमनुसृत्यैव भाषायामितिग्रहणरहितं वार्तिकस्वरूपं प्रस्तुतमिति।

---

१. "ह्रस्वात्परो योङम् पदान्तः, तस्मादुत्तस्य अचो नित्यं ङमुडागमो भवति।" (रूपावातरः भाग - १, पृ० १८)

२. "ह्रस्वात्परात्पदान्तात्ङमः परस्याचो नित्यं ङमुट् स्यात्।" प्रक्रियासर्वस्वम् - पृ० - ६५

३. रूपावतारः भागः १, पृ० - १६

४. सि० कौ० सू० ११६, वा० - ५०१७

५. "यत्तु प्राचा मयटि नित्यमिति पठितं यच्च हलन्त प्रकरणे षण्णामित्युदाहृतम् यच्च" यरोऽनुनासिकः (८-४-४५) इतिवानुनासिकः तत्र व्याख्यातम्। तत्सर्वं भाष्यविरोधादुपेक्ष्यम्।

६. द्रष्टव्यम् - प्र० प्रकाशः प्रथमोभागः, पृ० - १४२

## झरो झरि सवर्णे (८-४-६५) रू० मा० भागः १, पृ० ३५

रूपमालायामस्य सूत्रस्य "हलः परस्य झरोवा लोपः स्यात्सवर्णे झरि" इत्यर्थः स्वीकृतः। ग्रन्थकारोऽत्र 'झयो होऽन्यतरस्याम्' (८-४-६२) इत्यतोऽन्यतरस्यामित्यस्यानुवर्तनं स्वीकारोति। काशिकायामप्येतदनुवर्तनमङ्गीकृतम्।

परं प्रक्रियाकौमुदीकारेणात्र "अन्यतरस्यामि" तिपदं नानुवृत्तम्[1]। प्रक्रियासर्वस्वेऽपि "अन्यतरस्यामि" त्युनवृत्तिं विनैव" हलः परस्य झरः सवर्णे झरि परे लोपः स्यादि"त्यर्थः स्वीकृतः। तत्रैव काशिकाकारस्य प्रक्रियाकौमुदीकारस्याभिप्रायो दर्शितः[2]। श्रीमता भट्टोजिदीक्षितेन तु रूपमालावदन्यतरस्यामि "त्यनुवृत्तिमङ्गीकृत्य" "हल परस्य झरो लोपो वा स्यात्सवर्णे झरि" इत्यर्थः कृतः[3]।

प्रौढमनोरमायामत्र विकल्पानुवृत्तेरनुक्तेर्न्यूनता स्वीकृता। "शरोऽचि" इतिज्ञापकं दूषितम्। नाज्झलावितिसूत्रभाष्यात् कैयटप्रामाण्याच्चात्रान्तरस्यामित्यनुवृत्तिरेव स्वीकार्येति प्रकाशकृतां मतम्।[4]

## "अतो रोरप्लुतादप्लुते" ६-१-११३ रू० मा० पृ० ३८

सूत्रमिदम् "अप्लुतभाविन्यति परत उः स्यात्। अत इत्युक्त्यैव प्लुतादौ न भवति। पुनस्तद्वारणमुत्वे कर्तव्ये सत्यसिद्धस्य पुनर्भाविनः प्लुतस्य वर्जनार्थम्। सुवच ३ अत्रागच्छ।" इत्येवं रीत्या रूपमालाकृता व्याख्यातम्। अत्रायमाशयः - सुवच ३ अत्रागच्छ इत्यादावनेन सूत्रेण रोरुत्वं माभूदित्येतदर्थं सूत्रे अप्लुतादिति। "अस्ति पय अग्निशर्मन्" इत्यादावुत्वं मा भूदित्येवमर्थं "अप्लुते" इति उक्तम्। तेन प्लुतात्परस्य प्लुते परे वा उत्वं न भवति। यद्यपि सूत्रे अत इति तपरकरणं क्रियते "अति" इति तपरञ्चानुवर्तते तथापि तपरकरणेन प्लुतस्य व्यावर्तनं सम्भवति। प्लुतस्य त्रैपादिकत्वेन उत्वदृष्ट्या असिद्धत्वात् प्लुते सत्यपि उत्वदृष्ट्या एकमात्र एवाकारोऽस्ति तपरकरणसामर्थ्यात् प्लुतस्य नासिद्धत्वमिति तु न वक्तुं शक्यते दीर्घ निवृत्यर्थंतपरकरणस्य चारितार्थ्यात्। अतः प्लुतात्परः प्लुते परे च रोरुत्वं तपरकरणेन वारयितुं शक्यमिति सूत्रेऽप्लुतादप्लुते" इत्युच्यते। परमप्लुतादप्लुत इत्युक्तावपि प्लुतस्य उत्वं प्रत्यसिद्धत्वं तदवस्थमेवेति "सुवच अत्रागच्छ" इत्यादावुत्वदृष्ट्या अप्लुतादंपरत्वस्य उत्वं दुर्वारमेवेत्यत "अप्लुते" इत्यस्य अप्लुतभाविनि इति व्याख्यानं कृतं ग्रन्थकृता। रूपावतारेऽप्येवं विधं व्याख्यानं दृश्यते[5]।

---

१. प्र० कौ० भाग : १, (हल्सन्धिप्रकरणम्)

२. झरो झरीति लोपोऽयं वेति वृत्तौ तथापि तु।
नातीवोच्चारणे भेदो नित्योऽयं कौमदीमते॥" प्रक्रियासर्वस्वम् भाग - १, पृ० - ३४

३. सि० कौ०, सू० - ७१

४. द्र० - प्रौ० म०, पृ० - २१४

५. "अप्लुतभाविन अकारादुत्तरस्य रोः उकारादेशो भवति अप्लुतभाविन्यकारे परतः।"
रूपावतारः भाग : १, पृ० २४

अत्र "अप्लुभाविनि" इति व्याख्यानं भाष्यकारमनुसरति। तथाहि - उक्तसूत्रे भाष्ये "सूत्रेऽप्लुतादप्लुते इत्युक्तावपि प्लुतस्य असिद्धत्वात् उत्वं प्राप्नोतीत्याशङ्क्य" अप्लुतभाविनोऽप्लुतभाविनीत्येवमेद्विज्ञायते" इति समाहितम्।[1] सूत्रे प्लुतशब्देन प्लुभावित्वात् प्लुतस्थानी एवाकारः लक्ष्यते इति नोक्तदोष इति तदाशयः। स्पष्टञ्चैतत्प्रदीपे[2]।

सिद्धान्तकौमुद्यान्तु "अप्लुतभाविनि" इति व्याख्यानं नाश्रितम्। सूत्रे प्लुतपदस्य प्लुतपरत्वमेवाश्रितं न तु प्लुतभाविपरत्वमिति। अत एव दीक्षितेन -

"अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति।" इत्येव व्याख्यातम्। तन्मतानुसारेण च अप्लुतादप्लुते इति निषेधसमार्थ्यादेव प्लुतस्य नासिद्धत्वम्।[3] अप्लुतादिति निषेध-सामर्थ्यादेव प्लुतस्य नासिद्धत्वमित्येष सिद्धान्तकौमुद्यामुक्तः नासिद्धत्वम्। अप्लुतादिति निषेधसामर्थ्यादेव प्लुतस्य नासिद्धत्वमित्येष सिद्धान्तकौमुद्यामुक्तः परिहारः कैयटेनापि दर्शितः।

एतेन अप्लुतादित्याद्युक्तावपि "सुवच ३ अत्रागच्छ" इत्यादौ प्लुतात्परः प्लुते परे वा रुः, तत्र प्लुतस्याऽसिद्धत्वात् आपतिताया उत्वापत्तेः परिहारद्वयं दर्शितम्। प्लुतशब्दस्य प्लुतभाविपरत्वाश्रयणमिति एकः परिहारः। अप्लुतादिति निषेधसामर्थ्यात् प्लुतस्य नासिद्धत्वमिति द्वितीयः परिहारः तत्राद्ये प्लुतशब्दस्य प्लुतभाविनि लक्षणेति रूपमालाकारादिभिः समादृतः। द्वितीये परिह्मरप्रकारे निषेधसामर्थ्यात् पूर्वत्रासिद्धमिति शास्त्रबाधः कल्पनीय इति सिद्धान्तकौमुदीकारादिभिः स्वीकृतः। तत्र सामर्थ्यात् पूर्वत्रासिद्धमितिशास्त्रप्राप्तप्लुतासिद्धत्व-बाधकल्पनापेक्षया प्लुतशब्दस्य प्लुतभाविनि लक्षणाश्रयणस्यैव ज्यायस्त्वेन रूपमालाकृता स्वीकृत आद्य एव परिहारप्रकारः न्याय्य इति।

### अमि पूर्वः ६-६-१०७, रू० मा० पृ० - ४६

रूपमालायामस्य सूत्रस्य "अकस्तस्याचो सह स्यादि"त्यर्थः प्रतिपादितः। काशिकायामत्र "अकः सर्वेण दीर्घः" (६-१-१०) इत्यतो ऽक इत्यनुवर्त्य अमि परतोऽकः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवतीति सूत्रार्थो विहितः। रूपावतारेऽप्येष एवार्थ उपलभ्यते[4]। परमनेन काशिकादिग्रन्थोक्तार्थेन शुक्ल + अम्, वृक्ष + अम्, राम + अम् इत्यादिषु प्रयोगेषु अमो मकरसहितस्य पूर्वरूपैकादेशे च कृते अभीष्टसिद्धिर्न जायते। अत एव रूपमालाकारोऽत्र "इकोयणचि" (६-१-७७) इत्यतोऽचीत्यस्यानुवर्तनमङ्गीकरोति। दीक्षितमहाभागेनापि रूपमालैवानुसृता। यथोक्तं सिद्धान्तकौमुद्याम् - "अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यादिति।"[5]

---

१. म० भा० सू० ६-१-११३
२. द्र० - मा० भा० प्रदीप; सू० सं० ६-१-११३
३. द्र० सि० कौ० (स्वादिसन्धिप्रकरणम्) सू० १६३, १६५
४. "अकः अमि परतः पूर्वपरयोः पूर्वरूपमेकादेशो भवति। रूपावतारः भाग - १, पृ० - ३१
५. सि० कौ० (अजन्तपुल्लिङ्गप्रकरणम्) सू० - १९४

यद्यप्यत्र काशिकाकृद्व्याख्यानेपि "तस्मादित्युत्तरस्य" (१-१-६७) "आदेः परस्य" (१-१-५४) इतिसूत्रद्वयसहकरेण 'एकः पूर्वपरयोः, इत्यस्य चाधिकारेण इष्टसिद्धिर्जायते, तथापि अचीत्यनुवर्तमाने प्रक्रियालाघवमेव वरम् ।

## गोतोणित् (७-१-९०) रू० मा०, पृ०-७०

"ओदन्तात् सुर्णित्स्यादि"ति रूपामालायां व्याख्यानम् । सूत्रेऽस्मिन् तपरकरणस्य व्यर्थतया गकारस्याविवक्षितत्वं स्वीकर्तव्यम् । अत एवात्र तपरकरणमोकारान्तानां शब्दानामुपलक्षणार्थम्, तेन द्यौत्यादि सिद्धम् । इममेवाभिप्रायमुपदर्शयन्नाह रूपामालाकरः -

**"गोशब्दे तपरत्वोक्तेरोदन्तस्य च सङ्ग्रहः ।**
**ह्रस्वादेशान्तसंत्यागः सिद्धा द्यौश्चित्रगुस्ततः ॥"**

काशिकायान्तु अन्यमतसङ्ग्रहाय "केचिदोतो णिदिति पठन्ति । द्योशब्दादपि यत्सर्वनामस्थानं विद्यते तदर्थम् । द्योः, द्यावौ, द्यावः । गोत इत्येव तपरकरणनिर्देशादोकारान्तोपलक्षणं द्रष्टव्यमि" त्युक्तम्[1] । काशिकोक्तं मतमिदं वार्तिककारसम्मतं वर्तते । यतो हि वार्तिककृता कात्यायनेन "अतो णिद् वक्तव्यम्" इति वार्तिकमुक्तम् । गकारस्याविवक्षितत्वमेव वार्तिककर्तुः तात्पर्यम् ।

प्रक्रियाकौमुद्यामपि काशिकावत् "गोशब्दात्परं सर्वनामस्थानं णित्कार्यकृत् स्यादि"त्यर्थः स्वीकृतः ।[2] तत्रापि गकारस्याऽविवक्षितत्वं नाङ्गीकृतमाचार्येण । एवं हि भट्टोजिदीक्षितेन ऽसिद्धान्तकौमुद्याम् "गोशब्दात्परंसर्वनामस्थानं णिद्वत्स्यात्" । तथा च भाष्यसम्मतम् "ओतो णिदिति वाच्यम् । विहितविशेषणं च । तेन सुद्योः, सुद्यावौ । सुद्यामित्यादि" इत्युक्तम् ।[3]

## "एकोचो बशो भष् झषन्तस्य स्ध्वोः" (८-२-३७) रू० मा०, पृ० ७५

रूपमालाकृता अस्य सूत्रस्य "एकाचो धातोर्झषन्तस्य बशः स्थाने भष् स्यात्सकारे ध्वे च परे पदान्ते चे" त्यर्थः कृतः । काशिकायामपि "धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलिसकारे ध्वशब्दे च परतः पदान्ते चे"ति सूत्रार्थो दृश्यते । प्रक्रियाकौमुद्यामपि काशिकासदृशमेव व्याख्यानमुपलभ्यते[4]।

परं रूपावतारे सिद्धान्तकौमुद्यां च रूपमालासदृश एव सूत्रार्थ उपलभ्यते ।[5] तत्र नानुवर्तते "झलि" इति पदम् । यथा रूपावतारे "धातोरवयवो य एकाच् झषन्तस्तदवयवस्य

---

१ काशिका सू० ७-१-९०

२ प्र० कौ० भाग - १ पूना १९२५ पृ० १७४

३ सि० कौ० ( अजन्तपुल्लिङ्गप्रकरणम् ) सू० - २८४

४ "एकाचो धातोर्झषन्तस्य बशः स्थाने भष् स्यात सकारे ध्वेशब्दे च परे । प्रातिपदिकसंज्ञकस्य तु झलि पदान्ते चे" ति ।

प्र० कौ० भाग - १, पृ० २०८

५ रूपावतारः भाग - १ पृ० ८४

बशः स्थाने भष् स्यात्सकारे ध्वे च परतः पदान्ते चे "त्यर्थः प्रतिपादितः[१] । तथैव सिद्धान्तकौमुद्यां - "धातोरवयवो च एकाज् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात् सकारे ध्वशब्दे पदान्ते च । एकाचो धातो इति सामानाधिकरण्ये त्विह न स्याद् गर्दभमाचष्टे गर्दभयति ततः क्विप् णिलोपः गर्धप् । झलीति निवृत्तम् सध्वोर्ग्रहणसामर्थ्यात् । तेनेह न दुग्धम्, दोग्धा । व्यपदेशिवद्भावेन धात्ववयवत्वात् भष्भावः, जश्त्वचर्त्वे धुक् धुगिति ।" इति व्याख्यानं दृश्यते ।[२]

यद्यपि रूपमालायां "झलीति, स्ध्वोर्गहणसामर्थ्यादि"ति व्याख्यानं नैव दृश्यते, तथापि झलीत्यस्यानुवृत्तिर्विमलसरस्वतीनामनभिमता । न्यासकारोऽत्र झलीत्यनुवृत्तस्य पदस्य द्विधा समाधानं प्रस्तौतिप्रथमं "झलि परतः" इत्यनेन झलीत्यनुवर्तते तस्य झकारो विशेषणम् । किमर्थं पुनर्झलीत्यस्यानुवृत्तिः, यतस्तस्य सहकारेण पदान्तस्यानुवृत्तिर्भविष्यति । अन्यथा झीलत्यस्य निवर्तमाने तत्सम्बद्धं पदान्तग्रहणमपि निवर्तेत ततश्च पदान्ते न सिद्ध्येत् । अपरं च यदि कोऽप्यत्र स्वरितत्वात् पदान्तस्यानुवृत्तिं स्वीक्रियेत तदात्र झलीत्यस्या नुवृत्तिर्मन्दधियां सुखप्रतिपत्तये बोध्या । पदमञ्जरीकारः हरदतोऽत्र प्रथमं पक्षमवलम्क्ते । वस्तुतस्तु न्यासकारमतेनापि नास्त्यत्र झलीति पदस्यावश्यकता । यतो हि स्वसमाधानादग्रे न्यासकारेण पुनर्लिखितम् "अत्र झलीत्येतन्नापेक्षते, असम्भवात् । न हि कश्चित् झल्ध्वशब्दोऽस्ति, तस्य प्रत्याहारेष्वसन्निवेशात्" इति । अत्र झलीत्यस्यानुवृत्तिं प्रक्रियाकौमुदीस्थं व्याख्यानं खण्डयन् दीक्षितमहोदयः प्रौढमनोरमायां लिखिति - "यत्तु प्राचोक्तं प्रातिपदकस्य तु झलि परतः पदान्ते चेति, तत्प्रामादिकेमेव । अधोक्, अधोग्, अजर्धा इत्याद्यसिध्यापत्तेः । प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च, तत्र झलो निमित्तत्वानुपयोगाच्च । धुगभ्यां धुक्षु इत्यादौ पदान्त इत्येव सिद्धेः । यदपि तत्पौत्रेण व्याख्यातम् - झलि परे प्रातिपदिकसंज्ञस्यैवेत्यादि, तदपि निर्मूलं निष्फलं चेत्युपेक्ष्यम् ।"[३]

इत्थं पूर्वोक्तव्याख्यानेनावगम्यते यत् सिद्धान्तकौमुदीकारः स्वरितत्वात्पदान्तस्येति अनुवृत्तिमङ्गीकरोति न तु झलीत्यस्य । स च रूपावतारस्य रूपमालायाश्च प्रभावो वक्तुं शक्यते ।

**अल्लोपोऽनः (६-४-१३४) रू० मा०, पृ० - ७५**

रूपामालाकृता "अन्नन्तस्य भस्याङ्गस्यानोऽकारस्य लोपः स्यादि"त्यर्थः स्वीकृतः । काशिकायान्तु "अन् इत्येवमन्तस्य भस्य अकारलोपो भवति, राज्ञः पश्य" इतिसूत्रार्थः । रूपावतारेऽपि काशिकावद् व्याख्यानं वर्तते[४] । परन्त्वनेन सूत्रार्थेन "अनस्तक्षन् आ" इत्यत्र प्रथमो योऽनोऽकारस्तस्यापि लोपः स्यात् । यदि प्रक्रियाकौमुदीकराभिमतं "अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति"[५] व्याख्यानमङ्गीक्रियेत तर्हि तक्ष्णा इत्यादौ तकाराकारस्यापि लोपः स्यात् । तथा च यदि रूपामालाकारस्य अन्नन्तस्य भस्याङ्गस्यानोऽकारस्येत्त्यर्थो

---

१. रूपावतारः भाग - १ पृ० ८४

२. सि० कौ० ( हलन्तपुल्लिङ्गप्रकरणम् ) सू०- ३२६

३. प्रौ० म० पृ० ५७४

४. "अन इत्येवमन्तस्य भसंज्ञकस्याङ्गस्य अनः अकारस्य लोपो भवति ।" रूपावतारः भागः १, पृ० ७७

५. प्र० कौ० भाग : १ पूना, १९२५, पृ० - १४९

ग्रह्यते तदा "अनस्तक्ष्णा" इत्यादावतिव्याप्तिः। अत एव भट्टोजिदीक्षितमहाभागेनास्य सूत्रस्य निर्दुष्टं व्याख्यानं सिद्धान्तकौमद्यां प्रस्तुतम्। "अङ्गावयवो सर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यादिति"[१] तेन "अनस्तक्ष्णा इत्यादौ नातिव्याप्तिः, आद्यस्य अनः यजादिस्वादि परत्वाभावात्। अत्र सूत्रे भस्येत्यधिकृतम्। भसंज्ञया च यजादिस्वादिप्रत्यय आक्षिप्यते। स च अङ्गञ्च इति द्वयमपि अनो विशेषणम् इति तेनैव प्रपञ्चितं मनोरमायाम्[२]।

वस्तुतस्तु कार्यकालपक्षाश्रयणेनेदं व्याख्यानम्। यथा हि कार्यकालपक्षे भस्येत्यधिकारात् "यचि भम् (१-४-१८) इत्यनेन "अल्लोपोऽनः" इत्यस्य च एकवाक्यता। तत्र च यचि इत्यस्य अन इत्यनेनान्वयः, तेन यजादिस्वादिपरो योऽन् इत्यर्थः इति शब्दरत्ने स्पष्टम्। "ष्यङः सम्प्रसारणमि"ति सूत्रे भाष्यकारोऽप्याह - "एवं तर्हि कार्यकालं संज्ञापरिभाषम्। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमिति। भस्येति तत्रोपस्थितमिदं भवति "यचि भम्" इति तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः। इतः पूर्वं अन्नन्तस्य भस्याङ्गस्य इत्यादीनि व्याख्यान्तराणि "तक्ष्णा, अनस्तक्ष्णा" इत्यादौ दोषोद्भावनेन भाष्यकृता दूषितानि।

शब्दरत्नकारस्तु "अन्नन्तस्य भस्याङ्गस्याकारस्य लोप इत्यर्थेऽपि "तक्ष्णा" इत्यादौ अनन्त्यविकारेऽन्तसदेशस्य" इति परिभाषया तकाराकारादेर्वारणं सम्भवति। यथा च वार्तिकम् "अन्कारान्तस्याल्लोपे प्रयोजनम्" तक्ष्णातक्ष्णे इति न इत्यत्रापि प्राप्नोति, अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति, न दोषो भवति" इति तद्भाष्यञ्च[३] इत्याह। एवञ्च शब्दरत्नकारेण "अन्नन्तस्य भस्याङ्गस्याकारस्ये"ति प्रक्रियाकौमुदीकारोक्तं व्याख्यानं गौरवग्रस्तमेव। अत एव काशिकाकृता "अन् इत्येवमन्तस्य भस्य अकारलोपो भवति" इत्येव व्याख्यातम्। उक्तपरिभाषयैव तक्षणेत्यादौ तकाराकारस्य लोपवारणमिति तदभिप्राय इति।

## "विभाषा ङिश्योः" ६-४-१३९ रू० मा०, पृ० -७६

सूत्रमिदं रूपामालायाम् "अन्नन्तस्य भस्याङ्गस्यानोऽकारस्य लोपो वा स्यात् ङिश्योः" इत्येवं रीत्या व्याख्यातम्। काशिकावृत्तावपि ङौ परतः शीशब्देन च अनो विभाषा अकारलोपो भवति। यथा - राज्ञि, राजनि इत्यादिषु सूत्रेषु इति व्याख्यानम्। प्रक्रियाकौमुद्यां तु "अन्नन्तस्य भस्याङ्गस्याकारलोपो वा स्यात् ङिश्योः परतः।" इति व्याख्यानं दृश्यते।[४] अत्र "अङ्गस्य (६-४-१) इत्यस्य आषष्ठाध्यायस्य चतुर्थपादपरिसमाप्तेरधिकारः। "यचि भम्" इतिसंज्ञया सर्वनामस्थानसंज्ञाया अभावः। अतोऽत्र काशिकायां अङ्गस्य भस्याऽसर्वनामस्थानस्य चानुवृत्तेः सुस्पष्टतया नास्त्युल्लेखः।

---

१ सि० कौ० अजन्तपु० प्रकरणम्) सू० - २३४

२ द्र० प्रौ० म०, (अजन्तपुल्लिङ्ग प्रकरणम्) पृ० ४६३

३ म० भा० सू० ६-१-१३

४ प्र० का० भाग: १, पृ० - १५

अत एव सिद्धान्तकौमुदीकृता "अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यादिति व्याख्यानं स्वीकृतम् ।[१]

## नमुने ८-२-३ रू० मा०, पृ० - १०२

रूपमालाकृता सूत्रमिदम् "ने-नादेशे कर्तव्ये मुभावोऽसिद्धो न स्यात् । ने परे सुपिचेत्यपि मुभावस्यासिद्धत्वं नेष्यते । अमुना ।" इत्येवं रीत्या व्याख्यातम् । अयम्भावः - ने इति न परसप्तमी, नाभावं प्रति मुत्वस्याऽसिद्धत्वात् । अपि तु विषयसप्तमी एव, तेन नाभावे-कर्तव्ये इत्यर्थलाभः । अत्र "अमुना" इत्यत्र नाभावोत्तरं "सुपि चे"ति दीर्घः प्राप्नोति, स तु मुभावस्य सिद्धत्वान्त्न भवतीति । रूपावतारकृता तु दीर्घोऽयं सन्निपात परिभाषया वारितः[२] ।

सिद्धान्तकौमुदीकृता तु "नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात्" इति व्याख्यातम्[३] । अयमाशयः - ने इत्यावर्तते विषयसप्तमी सत्सिप्तमी च तथा च नाभावे कर्तव्येकृते च इति लभ्यते । एवं :सुपि चे"ति दीर्घवारणार्थं नाभावे कृते इति व्याचक्षाणेन भट्टोजिदीक्षितेन सन्निपातपरिभाषया दीर्घपरिहारः प्रौढ्मनोरमायां दर्शितः ।[४] काशिकायामपि "मुभावो नाभावे कर्तव्ये नासिद्धो भवति" इत्येवं व्याख्याय "अमुने" त्यत्रसन्निपात परिभाषा दीर्घो वारितः । तत्र द्वे व्याख्ये उपस्थापिते । ने इत्यस्यावृत्या नाभावे कर्तव्ये न परे च इत्येकाव्याख्या । इयमेव व्याख्या प्रक्रियाकौमुदीकारसिद्धान्तकौमुदीकाराभ्यां दर्शिता । ने इत्यस्यावृत्तिं विनैव परसप्तम्यन्तमित्याश्रयणेन ने परे यत्कार्यं प्राप्नाति तत्प्रति मुत्वं नासिद्ध-मित्यपरा व्याख्या ।[५] न परे यत्कार्यं प्राप्नोति तत्प्रति मुभावस्याऽसिद्धत्वाभावः सूत्रेण बोध्यते । नादेशे कर्तव्य असिद्धत्वाभावस्तु अर्थाल्लभ्यते । नहि नाभावं प्रति मुभावस्याऽसिद्धत्वनिषेधं विना नाभावः शक्यः । भावे ने परे असिद्धत्वाभावविधानं न संघटते इति नान्तरीयकः नाभावे कर्तव्ये मुभावस्य असिद्धत्वाभावः । यथा - "अतोरोरप्लुतादप्लुते" (६-१-११३) इत्यत्र रोरु-त्वविधानसामर्थ्यात् उत्वं प्रति रुत्वस्यासिद्धत्वं न भवति । एवं ने परे असिद्धत्वाभावविधानात् नादेशं प्रत्यसिद्धत्वं न भवतीत्याशयः ! एवं काशिकाकृद्भ्यां सूत्रमिदं त्रेधा व्याख्यातम । तत्र विषयसप्तमीमात्राश्रयणेन नाभावे कर्तव्ये मुभावो नासिद्ध इत्याद्यं व्याख्यानमेत्र ज्याय इति प्रतीयते ।

भाष्ये तु नाभावे कर्तव्ये कृते चेति द्वितीयं ने परे इति तृतीयञ्चेति द्वे एव व्याख्ये दर्शितें । विषयसप्तमीमात्राश्रयणेन नाभावे कर्तव्ये इति व्याख्यानं तत्र सन्निपातपरिभाषया दीर्घवारणं चेत्युभयमपि न विवेचितमिति ।

---

१ सि० कौ० ( अजन्तपुल्लिङ्गप्रकरणम् ) सू० - २३६

२ "कृते तु नाभावे मुभावस्य असिद्धत्वात्" सुपि च "(६-३-१०२ ) इति दीर्घत्वं प्राप्नोति । इति चेत् "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ( परि० ) इति न भवति । रूपावतारः ( पूर्वार्द्धः ) पृ० - ११२

३ सि० कौ०, सू० - ४३९

४ प्रौ० म०, पृ० - ५३८

५ द्र० - काशिका, सू० ( ८-२-३ )

**ष्णान्ता षट् (१-१-२४) रू० मा० पृ० ११७**

रूपमालायां षकारान्ता नकारान्ता संख्या षट्संज्ञा स्यादि"ति व्याख्यानमुपलभ्यते। तत्काशिकावृत्तिमनुसरति। यथा काशिकाकृद्भ्यां - "षकारान्ता नकारान्ता च या संख्या सा षट्संज्ञा भवति" इत्यर्थः स्वीकृतः। परं प्रक्रिया कौमुदीकृता[१] उपदेशकाले इत्यस्यार्थे समावेशो विहितः। भट्टोजिदीक्षितमहोदयेन तु सिद्धान्तकौमुद्यां रूपमालासदृशः "षान्ता नान्ता च संख्या षट्संज्ञा स्यादित्येवार्थः कृतः[२], "उपदेशकाले" इत्यस्य सूत्रतोऽलाभात्।

न च येन विधीत्यनेनाधिकृतं संख्यापदं विशेष्यीकृत्य तदन्तविधिनैव मूलोक्तार्थलाभेऽन्तग्रहणसामर्थ्यात्तथा लाभ इति वाच्यम्, अन्तग्रहणसत्वेन स्त्रीलिङ्गनिर्देशस्य स्फुटतया संख्येत्यस्यानुवृत्तिसूचनात् समासद्वारा संज्ञिपरत्वसूचनाच्च। अन्यथाऽन्तग्रहणस्योपदेशार्थकत्वे सप्तम्यन्तत्वेन विशेषणतया पूर्वनिपातापत्तिः। उद्देशश्च प्रातिपदिकानां नोपदेश इतिरीत्या षान्तनकारान्तपदानामुपदेशासम्भवाच्च। एतत्सर्वं प्रौढमनोरमायां विस्तरेण प्रपञ्चितमिति।[३]

**अष्टन आ विभक्तौ (७-४-८४) रू० मा० पृ० ११८**

सूत्रमिदम् "अष्टनो विभक्तौ परतः विकल्पेनात्वं भवती" त्येवं रीत्या रूपमालाकृता व्याख्यातम्। तत्र हलि इत्यस्य सम्बन्धो न दर्शितः। तत्काशिकायाः प्रभाव इति प्रतीयते। यथा काशिकायाम् "अष्टनो विभक्तौ परत आकारादेशो भवति" इति व्याख्यानं दृश्यते। रूपावतारे[४] प्रक्रियाकौमुद्यां चापि एवमेवार्थोऽङ्गीकृतः।

परन्तु सिद्धान्तकौमुदीकृता "रायो हलि" ७-२-८५ इत्यतः हलीत्यस्यापकर्षणं कृत्वा "अष्टन आत्वं स्यात् हलादौ विभक्तौ" इति व्याख्यातम्।[५] तेन जश्शसोरनुबन्धलोपे सति अजादौ विभक्तौ परे सूत्रमिदं न प्रवर्तते। अत एव अष्टानामित्यत्र नुटः पश्चादेव सन्निपातपरिभाषाया अनित्यत्वादात्वम्, न तु ततः प्राग्हलादिविभक्तेरभावात्। हलीत्यस्यापकर्षाभावे "अष्टन् आम्" इति स्थितौ नुटं बाधित्वा नित्यत्वादात्वेऽनान्तत्वेन षट्संज्ञाया अप्राप्तेर्नुट् न स्यात्।

न च यथोद्देशपक्षेऽन्तरङ्गत्वात् प्रागेव विहिता षट्संज्ञा "एकदेश विकृतमनन्यवत्" इतिन्यायेन कृतात्वेऽपि सुगमेति वाच्यम्, अल्विधौ उक्तन्या याऽयोगादिति प्रौढमनोरमायां स्पष्टमिति।[६]

---

१ प्र० कौ० भाग: १, (पूना, १९२५) पृ० २३५

२ सि० कौ० सू० - ३६९, पुल्लिङ्गप्रकरणम्

३ द्र० - प्रौ० म०, पृ० - ६१३

४ "अष्टन्शब्दस्य आकारादेशो भवति विभक्तौ परतः। रूपावतारः (पूर्वार्द्ध) पृ० ९६

५ सि० कौ०, (हलन्तपुल्लिङ्गप्रकरणम्) सू० ३७१

६ प्रौ० म०, पृ० - ६१७

## औत् (७-३-११८) रू० मा० पृ० - १२१

"इदुद्भ्यां परस्य ङेस्यादि"त्यर्थः रूपमालाकृता प्रतिपादितः। प्रक्रियाकौमुद्यान्तु श्रीमता रामचन्द्राचार्येण "घिनदीसंज्ञावर्जिताभ्यामिदुद्भ्यां ङेरौत् स्यादि"ति व्याख्यातम्। तदेव प्रसादकारेण समर्थितम्। परमेतादृशस्योकारस्याऽप्रसिद्धत्वाद् व्याख्यानमिदमसमीचीनमेवेति प्रतीयते। अत एव सिद्धान्तकौमुदीकृता - "इदुद्भ्यां परस्य ङेरौत् स्यादि"त्यर्थः कृतः।[1] तत्र हि उकारानुवृत्तिरुत्तरार्थेऽप्युक्तम्। दीक्षितमहोदयानां व्याख्यानमिदं रूपमाला मनुसरतीति प्रतीयते। एवं च मनोरमायां घिनदीसंज्ञावर्जितयोरिदुतोरप्रसिद्ध्या प्रक्रियाकौमुदीकारोक्तार्थस्य खण्डनमपि कृतमिति[2]।

## नृच (६-४-६) रू० मा० पृ० १२२

नामि वा दीर्घः स्यादिति रूपमालाकारः। काशिकायान्तु नृ इत्येतस्य नामि परे उभयथा भवति।" इति व्याख्यानं दृश्यते। अनेन ज्ञायते यदस्य सूत्रस्यार्थकरणे विदुषां मतभेदः। परं तत्रैव "केचिदत्र छन्दसीति नानुवर्तयन्ति, तेन भाषायामपि विकल्पो भवति" इत्यपि व्याख्यानं वर्तते। येषां मतेन 'छन्दस्युभयथा' (६-४-५) इतिसूत्रात् 'उभयथा' इत्यस्यैवानुवृत्तिर्वर्तते। तेषां मतेन लोकेऽपि विकल्पो भवति। एवदेवाभिप्रत्य रूपमाला-रूपावतार-प्रक्रियाकामुद्यादिपु ग्रन्थकाराः छन्दसीति पदं नानुवर्तयन्ति। अमुमेवार्थं दीक्षितमहाभागः प्रौढमनोरमायां द्रढयति। यथा - "इह छन्दस्युभयथा" इतिसूत्रात् "उभयथा" इत्यनुवर्तते। "छन्दसि" इति निवृत्तम्। तेन "चिन्ताजर्जरचेतसां बत नृणाम्, नृणामेकोगम्यस्त्वमसि पयसामर्णव इव" इत्यादिप्रयोगाः सङ्गच्छन्ते। केचित्तु "छन्दसि" इत्यनुवर्तयन्ति, तदयुक्तम्, पूर्वसूत्रेणैव (६-४-५) सिद्धेः - न च इत्यस्य वैयर्थ्यापत्तेः[3]

## पञ्चम्यास्तसिल् (५-३-७) रू० मा० पृ० १३६

"तदन्तेभ्यः किमादिभ्यः तसिल् प्रत्ययः स्यादिति सूत्रार्थः रूपमालायां प्रतिपादितः। सर्वतः, ततः अमुतः, बहुतः" इत्याद्युदाहरणानि। अत्रापि काशिकायाः प्रभावः परिलक्ष्यते। तत्र हि "पञ्चम्यन्तेभ्यः किंसर्वनाम बहुभ्यस्तसिल् प्रत्ययो भवती"ति व्याख्यातम्। परं दीक्षित महाभागैः सिद्धान्तकौमुद्यां "पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यादि"ति सूत्रार्थः कृतः[4] अत्र "समर्थानाम्०" (४-१-८२) इत्यतो वा इत्यनुवर्तत इति भावः।

काशिकायामपि "समर्थनां प्रथमाद्वा" इत्यत्र निगदितम् "स्वार्थिकेषु ह्यस्योपयोगो नास्ति, विकल्पोऽपि तत्रानवस्थितः। केचिन्नित्यमेव भवन्ति।" इति। तत्रानवस्थितः = अनियत इति न्यासकारेणोक्तम्[5]। अतो यद्यपि काशिकायां वा इत्यस्य स्पष्टरूपेणोल्लेखो नास्ति। तथापि "अनवस्थितः" इति पदेन प्रयोगानुरोधेन "वा" इत्यस्यानुवृत्तिः सूचिता। तेन रूपामालोक्तं व्याख्यानं न्यूनमेवेति विभावनीयम्।

---

१ सि० कौ० (अजन्तपुल्लिङ्गप्रकरणम्) सू० - २५६

२ द्र० - प्रौ० म०, पृ०५००

३ द्र० - प्रौ० म०, पृ० ५२९

४ सि० कौ० सू० - १९५३

५ न्यासः - भाग: १, पृ० ८७५

रूपमालायां "नासिकोदरौष्ठजङ्घादन्तकर्णश्रृङ्गाच्च" इतिसूत्रप्रस्तावे वार्तिकमिदं पठितम् । तेन दीर्घपुच्छी, दीर्घपुच्छा इत्यादि सिध्यतः । काशिकायान्तु "स्वाङ्गाच्चोपसर्जनाद-संयोगोपधात्" इतिसूत्रे "अङ्गगात्र कण्ठेभ्य इति वक्तव्यमि"ति वार्तिकं वर्तते[1] । तथैव रूपा-वतारेऽपि वार्तिकमिदं दृश्यते[2] । परं सिद्धान्तकौमुद्यां "नासिको दरौष्ठ० "(४-१-५५) इति सूत्रे वृत्तिग्रन्थस्य मूलं दर्शयन्नाह दीक्षितमहाभागः - "अत्र वृत्तिः - अङ्गागात्रकण्ठेभ्यो वक्तव्यम्" स्वङ्गी स्वङ्गेत्यादि । एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् । भाष्याद्यनुक्त-त्वादप्रमाणमिति प्रामाणिकाः ।" इति[3] वचनमिदं प्रयोगबाहुल्याद् वृत्तिकारेणोपन्यस्तमिति पदमञ्जरीकर्तुराशयः ।[4] भाषावृत्तिकृता तु "अङ्गगात्रनेत्रकण्ठेभ्योऽपि वेत्येके" इत्युक्त्वा मता-न्तरं दर्शितम्[5] । परं चान्द्रव्याकारणे "नासिकोदरौष्ठजङ्घादन्तकर्णश्रृङ्गगात्रकण्ठात्" इति सूत्रं वर्तते । तदेव काशिकादिग्रन्थोक्तवार्तिकस्योत्पत्तिस्थलं प्रतीयते । अत एव काशिकायां एवा-नुसरणं रूपमालाकृता कृतमिति वक्तुं शक्यत इति ।

**सख्यशिश्वीति भाषायाम् (४-१-६२)   रू० मा० भागः२, पृ १७**

सूत्रमिदम् "सखी । अशिश्वी । नास्ति शिशुरस्या इत्यर्थे निपात्यते । छन्दसि-सखा सप्तपदी भव । सख जहायेत्यादि" इत्येवं रीत्या रूपामालाकृता व्याख्यातम् । अस्याशयश्चे-त्थम् सखी, अशिश्वी इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते - वेदे तु सखा सप्तपदीभव, सखा जहायेत्यादिषु ङीष् न भवतीतति ।

व्याख्यानमिदं काशिकावृत्तिमनुसरति । तद्यथा "सखी, अशिश्वी शब्दौ ङीबन्तौ भाषायां निपात्येते ।सखीयं मे ब्राह्मणी । नास्याः शिशुरस्तीति अशिश्वी । भाषायामिति किम् ? सखा सप्तपदी भव । अशिशुमिव मामयं शिशुरभिमन्यते ।" इत्युक्तं काशिकायाम्[6]

तत्र न्यासकारः काशिकामतमङ्गीकरोति । परं पदमञ्जजरीकारःहरदत्त शङ्कते यद् "भाषायामित्युच्यते तत्रैतन्न सिध्यति - सखी सप्तपदीभव, आधेनवो धनुयन्तामशिश्वीः ।" इति शङ्कामुद्भाव्य पदमञ्जरीकारः तत्रैव  समादधति - "नैष दोषः, इतिकरणेऽत्र क्रियते । स भिन्नक्रमो भाषायामित्यस्यानन्तरं द्रष्टव्यः स च प्रकारे वर्तते । तेन छन्दस्यपि क्वचिद् भवति । भाषा ग्रहणन्तु नियमार्थम् । इति । इत्थं रूपामाला - रूपावतार प्रक्रियाकौमुद्यादिषु काशिका-भिमतमेव व्याख्यानं दृश्यते । परं न तत्र वैदिकप्रयोगसाधनाय कोऽपि यत्नो विहितः ।

---

१. काशिका, सू० (४-१-५४)
२. रूपावतारः (पूर्वार्द्धः) सू० (४-१-५४), पृ० - १४२
३. सि० कौ० (स्त्रीप्रत्ययप्रकरणम्) सू० - ५१२
४. " अङ्गगात्र इत्यादिभाष्येऽनुक्तमप्येतत् प्रयोगबाहुल्याद् वृत्तिकारेणोक्तम् ।"
   हरदत्त : - पदमञ्जरी, ४-१-५४
५. भाषावृत्तिः (४-१-३२) पृ० १९२
६. काशिका सू० (४-१-६२)

सिद्धान्तकौमुद्यान्तु पदमंजरीकारः हरदत्त एवानुसृतः परं तत्र हरदत्तस्य नामनिर्देशो ग्रन्थकृता न विहितः।[१]

सूत्रे इतिश्चार्थे। चेन छन्दस्यपि ङीष् इति पं० सभापतिशर्ममहोदयः लक्ष्मीव्याख्यायां नागेशमतं निर्दिशन्नाह "वस्तुतस्तु इतिशब्दश्चार्थे। भाषायाञ्चेति-चेन छन्दसि। एवञ्च भाषायामिति व्यर्थम्। न च दीर्घ जिह्वी च छन्दसि इत्यतश्छन्दसीत्यस्य निवृत्यर्थं तत्।" "दिकपूर्वपदात्" इत्यत्र सम्बन्धादर्शनेन तत्र स्वरितत्वाभावात्। परे तु दिक् पूर्वपदादित्यत्र "वाहः" इत्यत्र च छन्दसीत्यनुवर्तते। लोके तु "प्राङ्मुखी" इत्यत्र ङीषाऽन्तोदात्तत्वमेव, न तु ङीबादेशः। एवञ्च तन्निवृतयेऽत्र भाषाग्रहणमिति नागेशः[२]।

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा (२-३५-४६) रू० मा० पृ० - २२

सूत्रे परिमाणग्रहणविषये रूपमालाकृता "प्रस्थादिशब्दानां परिमेयार्थप्रधानत्वे परिमाणं तत्रातिरिक्तं प्रतीयत इति तत् पृथङ्निर्दिष्टम्। तच्च शब्दाद्धर्मिप्रतीतौ नियमेन प्रतीयमानस्य गौः पाचक इत्यादिजातिक्रियादेरपि धर्मस्योपलक्षणार्थम्।" इत्युक्तम्। काशिकायामपि "परिमाणग्रहणं किम् ? द्रोणः खारी, आढकमित्यत्रापि यथा स्यादि"ति व्याख्यानं दृश्यते[३]। अपि च प्रक्रियाकौमुदीकारेणाऽपि परिमाणग्रहणस्य द्रोणः खारी आढकमित्यादीन्युदाहरणानि दत्तानि। तत्र प्रकाशकारेणोक्तम् - "द्रोणादिशब्देन यदा परिमाणमात्रमन्तरनिरपेक्षमुच्यते तदा तु प्रातिपदिकार्थत्वादेव प्रथमासिद्धिः। यदा तु सोऽयमित्यभिसम्बन्धाद् ब्रीह्यादौ वर्तते तदोक्तप्रातिपदिकार्थत्वाभावात्। प्रथमासिद्ध्यर्थं परिमाणग्रहणम् इति।"[४]

एवं सति "सिंहो माणवकः" इत्यत्रापि प्रातिपदिकार्थत्वाभावात् प्रथमा न स्यात्। यदा पदान्तरसम्बन्धात् पूर्वप्राप्तमर्थमादाय प्रथमासिद्धिः तदा द्रोणः" इत्यत्रापि व्रीह्यादिपदान्तरसम्बन्धात् पूर्वं प्रथमायाः साधुत्वमस्त्येव एवञ्च परिमाणग्रहणमयुक्तम्।

अत्र दीक्षितमहोदयानामाशयस्त्वित्थम् - "अत्र परिमाणेऽर्थे प्रथमासिद्ध्यर्थं परिमाणग्रहणम्। तथा च प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वये तस्य व्रीहौ परिच्छेद्य-परिच्छेदकभावेनान्वय-सिद्ध्यर्थं परिमाणग्रहणमिति[५]।

## कर्मणा यमभिप्रैति स सम्प्रदानम् (१-४-३२) रू० मा०, पृ० ३४

रूपमालायामत्र "दीयमानेन संयोजयतीत्यर्थः। विप्राय गां ददाति। उपसर्गाभ्यामाभिमुख्यप्रकर्षयोरुक्तेश्चौरस्य रजकस्य च ददाति"इति व्याख्यानमुपलभ्यते। अन्वर्थसंज्ञाविज्ञानादातिकर्मणेति वृत्तिकाराणामभि प्रायः। एवञ्च रूपामाला-काररूपावतारकार-प्रक्रियाकौमुदीकारसिद्धान्ताकौमुदीकारैः चतुर्भिरपि प्रक्रियाग्र-

---

१ "इतिशब्दः प्रकारे भाषायामित्यस्यानन्तरं द्रष्टव्यः। तेन छन्दस्यपि क्वचित्।" सि०कौ० (स्त्रीप्रत्ययप्रकरणम्) सू० ५१८

२ सि० कौ० (लक्ष्मीटीका) भाग : २, पृ० ७४८

३ काशिका, सू० (२-३-४६)

४ प्रक्रियाप्रकाशः, सू० २-३-४६

५ सि० कौ० (कारकप्रकरणम्), सू० - ५३३

न्थकारैः सूत्रमिदमन्वर्थसंज्ञापरतया एव व्याख्यातम्। तथा हि रूपावतारेऽपि "अन्वर्थसंज्ञाविज्ञानात् ददातिकर्मणेति विज्ञायते करणभूतेन कर्मणा कर्ता यमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं भवति।" इत्युक्तम्।[१] प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्याञ्च "दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यादि"ति फलितार्थः प्रतिपादितः[२]। चतुर्ण्णामप्येतेषां प्रक्रियाग्रन्थकाराणां व्याख्या रूढः। तेन ग्राममजां नयति इत्यादौ ग्रामादेः कर्मसम्बन्धित्वेऽपि दानक्रियाकर्मसम्बन्धित्वाभावात् न सम्प्रदानम्। रजकस्य वस्त्रं ददातीत्यादौ ददातिप्रयोगेऽपि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनरूपस्य मुख्यस्य दान पदार्थस्याभावात् रजकादेः न सम्प्रदानत्वम्।

परं प्रक्रियासर्वस्वकृता "येन केनचित्कर्मणा कर्ता यमर्थमभ्येति स सम्प्रदानं स्यादि"ति व्याख्याय भाष्यमतमप्युद्धृतमृ। यथा -

**"शत्रवे प्रहरत्यस्त्रं ब्राह्मणाय ददाति गाम्।**
**दानस्य कर्मणैवेति केचिद् भाष्यमतं न तत्॥"**[३]

भाष्यकारस्तु अत्रान्वर्थसंज्ञां नेच्छति। तदनुसारेण सूत्रे कर्मपदेन क्रियामात्रस्य कर्मणोर्ग्रहणं न तु दानक्रियाया एव इत्याग्रहः। ततश्च यत्किञ्चित् क्रियाकर्मसम्बन्धित्वेन इष्यमाणं कर्मेति सूत्रार्थः" इत्याह। एतदाशयेनैव च "क्रियाग्रहणं कर्तव्यम्" इतिवार्तिकस्य "गत्यर्थकर्मणि०" (२-३-१२) इतिसूत्रस्य च भाष्यकृता प्रत्याख्यानं कृतम्। तेन ददातिविषयादन्यत्रापि सम्प्रदानसंज्ञा भवतीति उक्तभाष्यग्रन्थव्याख्यानपरे प्रदीपे स्पष्टम्[४]।

दीक्षितमहाभागेन तु सिद्धान्तकौमुद्यामुक्तस्य दानस्य कर्मणा इत्यादेः स्वीयव्याख्यानस्य वृत्तिकारानुसारित्वमुक्त्वा भाष्यानुसारेण "कर्मणा यमभिप्रैति" इतिसूत्रे क्रियमाणमात्रस्य ग्रहणं न तु दानक्रियाया एव, नापि इयमन्वर्थसंज्ञेति पक्षः प्रौढमनोरमायां व्यवस्थापितः[५]। नागेशेनापि भाष्यानुसारेणैव अन्वर्थसंज्ञानाश्रयणपक्षः एव समर्थितः।

इत्थं द्वेधास्य सूत्रस्य व्याख्यानमित्यवगम्यते। अन्वर्थसंज्ञाश्रयणे दानस्य कर्मणा इत्येकं वृत्तिकारसम्मतं व्याख्यानम्। यद्रूपमालाकारादिभिः प्रक्रियाग्रन्थकारैरुपन्यस्तम्! भाष्यसम्मते क्रियामात्रग्रहणपक्षे यत्किञ्चित्कर्मणा अभिप्रयमाणस्य सम्प्रदानसंज्ञा इति द्वितीयं व्याख्यानम्। अस्मिन्नेव च व्याख्याने मनोरमाकारशेखरकारादिभिः स्वीयः समादरो दर्शित इति।

---

१ रूपावतारः (पूर्वार्द्धः), पृ० १५२

२ सि० कौ०, सू० - ५६९

३ प्रक्रियासर्वस्वम् भाग : ४, पृ० १२७

४ "कश्चिदन्वर्थसंज्ञाविज्ञानाद् ददातिविषय एव सम्प्रदानसंज्ञेत्यभ्युपगम् दानञ्च स्वत्वनिवृत्ति : परस्वत्वापत्तिपर्यन्तेति प्रत्यज्ञ।यि तदुभयमप्युक्तम्। अन्यत्रापि भाष्यकारेण संज्ञाया अभ्युपगमात्।" - म० भा० प्रदीपः (१-४-३२)

५ प्रौ० म०, पृ० - ७२८

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् (२-३-३२) रू० मा० पृ०.४०**

सूत्रेणानेन द्वितीया-तृतीया-पञ्चमीनां तिसृणां विभक्तीनां विधानं प्रक्रियाग्रन्थकारैः स्वीकृतम्। परन्तु विभक्ति त्रयसाधनप्रकारे वैषम्यमवलोक्यते। तथाहि रूपमालाकृता पञ्चमीग्रहणमनुवर्त्य - "पक्षे पञ्चमी। पृथक् पटेन घटः। पटाद्वा। विनायोगे द्वितीयापीष्यते। विना वातं विना वर्षम्।" इति व्याख्यानं स्वीकृतम्। तत्काशिकामनुसरति। यथाहि तत्र "पञ्चमीग्रहणमनुवर्तते। पृथक् विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च। पृथग् देवदत्तेन, पृथग् देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्। पृथग्विना-नाभिरिति योगविभागो द्वितीयार्थः। विना वातं विना वर्षमि"त्यादि व्याख्यानं वर्तते। रूपाव-तारेऽपि एवंविधमेव व्याख्यानं दृश्यते।[१]।

प्रक्रियाकौमुदीकारेण तु "एभिर्योगे तृतीया वा स्यात् पक्षे पञ्चमी द्वितीये"इति व्याख्यातम्। अत्र तृतीया वा इत्युक्त्या अन्यतरस्यामितिपदस्य विकल्पार्थकत्वं सूचितम्। विकल्पात् तृतीयाभावपक्षे पञ्चमीद्वितीये स्वीकृते[२]। प्रक्रिया सर्वस्वेऽपि "अन्यतरस्यामिति समुच्चये एभिर्योगे तृतीया च द्वितीया च पञ्चमी" इत व्याख्यानं दृश्यते[३]।

सिद्धान्तकौमुदीकारेण तु अनाश्रित्यैव योगविभागमुक्तसूत्रेऽन्यतरस्यां ग्रहणस्य समुच्चयार्थकतामङ्गीकृत्य "अन्यरस्यामि" ति ग्रहणेनैव सन्निहितायाः द्वितीयायाः" मण्डूक-प्लुत्या अनुवर्तमानायाः पञ्चम्याश्च संग्रहः स्वीकृतः। तदनुसारेण अन्यतरस्यामितिपदं चपद-समानार्थकम्, न तु विकल्पार्थकम्। ततश्च अन्यतरस्यां ग्रहणेन द्वितीयापञ्चम्यौ अत्रानुवर्तेते। तत्र यद्यपि द्वितीयेव सन्निहिता। तथापि व्याख्यानात् मण्डूकप्लुत्या अनुवर्तमानायाः पञ्चम्याश्च संग्रहः स्वीकृताः। तथापि व्याख्यानात् मण्डूकप्लुत्या पञ्चमी अप्यनुवर्तते। तदुक्तं मनोरमायाम् - "समुच्चयार्थमिति"। निपातानामनेकार्थत्वात् इति भावः। तत्र मण्डूक-प्लुत्या पञ्चमी, द्वितीया तु सन्निहतैव"[४]।

एवञ्च रूपमालाद्युक्तयोगविभागाश्रयणेन विभवक्तित्रय-साधनापेक्षया सिद्धान्त-कौमुद्युक्तरीत्या अन्यरस्यामिति ग्रहणस्य समुच्चयार्थकत्वा श्रयणेनविभक्तित्रयसाधनं लघीय इति प्रतीयते।

श्रीमद्दयानन्दमहाभागैरत्र "विना योगे द्वितीया" इति व्याख्यानं सर्वथाऽसमीचीन-मित्यङ्गीकृतम्। तेषां मतेन यद्यनेन सूत्रेण द्वितीयायाः विधानं स्यात्तर्हि महाभाष्यकारः पञ्चम्या विधानमिव द्वितीयाया अपि विधानमकरिष्यत्। यस्माद् भाष्यकृता द्वितीयापदस्यानुवृत्तिर्ना-श्रिता, तस्मात् द्वितीयानुवृत्तिपरं व्याख्यानं भाष्यानुक्तत्वादुपेक्ष्यम्। "ततोऽन्यत्रापि दृश्यते" इत्यत्रैव द्वितीयायाः साधुत्वग्रहणात्। अतस्तेषां मतेन जयादित्यादीनां व्याख्यानमसङ्गतमेवा-स्तीति[५]।

---

१ रूपावतारः ( पूर्वार्द्ध ), पृ० - १५८

२ प्र० कौ० ( कारकप्रकरणम् ), पृ० ५३५

३ प्रक्रियासर्वस्वम्, भाग : ४, पृ० - १२७

४ प्रौ० म० ( कारकप्रकरणम् ), पृ० - ७५२

५ द्र० - अष्टाध्यायीभाष्यम्, भाग - १ सू० - २-३-३२

## आधारोऽधिकरणम् (१-४-४५) रू० मा० पृ० ४१

रूपमालायामत्र "कृर्तुः कर्मणो वा आधार इह विवक्षितः। कटे शेते। स्थाल्यां पचति। विषयेऽपीष्यते। तर्के चतुरः।" इति व्याख्यानं वर्तते। व्याख्यानमिदं काशिकावृत्तिकारमनुसरति[1]। एतेन प्रतीयते यद् द्विविध एवाधारः रूपमालाकारेणाङ्गीकृतः। परं रूपावतारे आधारस्य चातुर्विध्यं सव्याख्यं सोदाहरणञ्च दर्शितम्। तत्र हि "स आधारः औपश्लेषिक-वैषयिक-व्यापक-प्रत्यासत्तिभेदात् चतुर्विधः। प्रत्यासत्तिः सामीप्यम्-गङ्गायां घोषः।" इत्यादि-व्याख्यानमुपलभ्यते[2]। प्रक्रियाकौमुद्यामपि "औपश्लैषिकः, सामीपिको विषयो व्याप्य इत्याधारश्चतुर्धा" इतिग्रन्थेन आधारस्य चतुर्विधत्वमेवोक्तम्[3]। प्रक्रियसर्वस्वे तु नारायणभट्टमहोदयेन षड्विध आधारः स्वीकृतः। यथा हि -

**"आधार किल षोढा स्यात्तत्रौपश्लेषिकस्तथा।**
**सामीप्यं विषयो व्याप्यो निमित्तं त्वौपचारिकः॥"[4]**

तत्रैवेत्थं विवेचनमपि दृश्यते -

| | | |
|---|---|---|
| १- औपश्लेषिकः | - | कटे आस्ते, पिठरे पचति। |
| २- सामीप्यम् | - | सरिति आस्ते। |
| ३- विषयः | - | अरिषु दारुणः, वने मृगः। |
| ४- व्याप्यः | - | त्रिभुवने कृष्णः। |
| ५- निमित्तम् | - | वाचि हृष्यति |
| ६- औपचारिकः | - | चित्ते वर्तते। |

सिद्धान्तकौमुदीकृता तु सामीपिकाधारस्यौपश्लेषिकाधारे एवान्तर्भावं मत्वा आधारस्य त्रिविधत्वमेवोक्तम्। तथाहि - "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा।"[5] एतच्च "संहितायाम्" इतिसूत्रे भाष्ये स्पष्टम्। तथाहि - "अधिकरणं नाम त्रिप्रकारकम् - व्यापकमौपश्लेषिकं वैषयिकमिति।[6]

अत्र औपश्लेषिक इत्यस्य द्वेधा व्याख्यानं भवितुमर्हति। तथाहि सर्वावयवव्याप्त्या सम्बन्धः मुख्यः श्लेषः। श्लेषस्य समीपमुपश्लेषम्-किञ्चिद्देशावच्छेदेन सम्बन्ध इत्यर्थः। तन्मूलकः आधारः औपश्लेषिकः। एतेन संयोगमूलकः आधारः औपश्लेषिक इति। उप समीपे श्लेषः उपश्लेषः सामीप्यमिति यावत्। तन्मूलकः आधारोऽपि औपश्लेषिकः। अनेन सामी-

---

१ "कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणसंज्ञं भवति।"काशिका (१-४-४५)

२ रूपावतारः (पूर्वार्द्धः), पृ० - १६२

३ प्र० कौ० भाग - १, पृ० ४५५

४ प्रक्रियासर्वस्वम् भाग ४, पृ० - १३४

५ सि० कौ० (कारकप्रकरणः), सू० - ६३२, ६३३

६ म० भा०, सू० ६-१-७२

पिकाधारस्य औपश्लेषिक इत्यनेन सङ्ग्रहः। स्पष्टञ्चैतत् व्याख्यानद्वयम् "संहितायाम्" इति-सूत्रे भाष्यप्रदीपोद्योते[१]। एवञ्च सामीपिकाधारोऽपि औपश्लेषिकाधार एव अन्तर्भवितुं शक्नोति। अत एव भाष्यकृताऽपि आधारस्य त्रिविधत्वमेवोक्तम्। सामीपिकाधारस्तु पृथक् नोक्तः। एतदेवाभिप्रेत्य सिद्धान्तकौमुद्यां दीक्षितेनाधारस्य त्रिविधत्वमेवोक्तम्।

**भूवादयो धातवः (१-३-१) रू० मा० भागः, पृ० ४९**

सूत्रमिदं रूपमालाकृता "भूवादयः शब्दाः क्रियावाचिनो धातुसंज्ञाः भवन्ति।" इत्येवं रीत्या व्याख्यातम्। सुस्पष्टये ग्रन्थकृताऽत्र श्लोकवार्तिकमुपस्थाप्य एवंविधमपि व्याख्यानं दर्शितम्। यथाहि - "भ्वादय इति सन्धौ युक्ते "भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते।" इति वृद्धः। अमृतात्मा प्रसिद्धो सावागमे तेन सिञ्चति। धातुसामान्यभूतानां बीज भूतान्महामुनिः। "वा गतिगन्धनयोरिति वा द्वितीयोऽयं निर्दिष्टः प्रथमस्त्ववव्ययभ्रंसव्या-वृत्यै।" इति। अत्रोद्धृते श्लोकवार्तिके सूत्रव्याख्याविषयकाः विभिन्नाः पक्षाः सङ्क्षेपतो दर्शिताः। तथाहि-अस्यार्थः भ्वादय इति वक्तव्ये भूवादय इत्युक्तौ वाशब्दागमः निपात्यते स मङ्गलार्थः। कथमस्य मङ्गलार्थत्वमिति प्रदीपोद्द्योतयोः विस्तरेण प्रपञ्चितम्।

रूपावतारेऽपि "भू इत्येवमादयश्शब्दाः क्रियावाचिनो गणपरिपठितत्वाद्धातुसंज्ञा भवन्ति।" इति व्याख्याय भाष्योक्तं श्लोकवार्तिकमुपन्यस्तम्[२]।

तथैव प्रक्रिया कौमुदीकृताऽपि व्याख्यातम्। सिद्धान्तकौमुदीकृता तु व्यवस्थाप्र-कारवाचिनो एकशेषं भूश्च वाश्चेति द्वन्द्वम्। भूवौ आदिर्येषान्ते भूवादयः "इति बहु-व्रीहिञ्चाश्रित्य भूप्रभृतयो वासदृशाः धातवः इति व्याख्यातम्[३] तदनुसारेण व्यवस्थावाचिनः आदिशब्दस्य भू इत्यनेन, प्रकारवाचिनश्च आदिशब्दस्य वा इत्यनेनान्वयः। प्रकारः सादृश्-यम्। तच्च प्रकृत्ते व्याख्यानात् क्रियावाचित्वेन ततश्च क्रियावाचिनो भ्वादिगणपठिता इत्यर्थः। सर्वञ्चैतत् प्रौढमनोरमायां स्पष्टम्। भाष्यकृताऽपि "भ्वादय इति च वादय इति च" इति व्याख्यातम्। तेन पक्षद्वयं दर्शितम् - व्यवस्थावाचिन आदिशब्दस्य भू इत्यनेनान्वयः प्रकारवाचिन आदिशब्दस्य वा इत्यनेनान्वयः। तेन भूप्रभृतयो वा प्रकारा इत्यर्थः। वा प्रकार इत्यनेन च क्रियावचनत्वं लभ्यते इत्येकः पक्षः। प्रकारवाचिनः आदिशब्दस्य भू इत्येनन च भाववचनत्वस्य च लाभ इति द्वितीयः पक्षः। अत्र यद्यपि पक्षद्वयेणापि इष्टं सिध्यति तथापि द्वितीयपक्षे वा धातोः प्राग्वर्तिनां धातुत्वसिद्धयर्थममदादिगणस्यादौ एव "वा गतिगन्धन-योरि"ति धातुः पठनीयः।"आदिप्रभृतिभ्यः शपः "(२-४-७२) इत्यत्र" वा प्रभृतिभ्यः" इति च पठनीयम् इति प्रदीपे स्पष्टम्। एवञ्चात्र पक्षे धातुपाठभङ्गः सूत्रभङ्गश्च कर्तव्यं भवति। अतः भूप्रभृतयः वा प्रकारा इति आद्यपक्ष एव ज्यायान्। अयमेव पक्षः सिद्धान्तकौमुदीकृता मनोर-मायां स्वीकृतेति।

---

१ म० भा० प्रदीपाद्द्योतः ६-१-७२

२ रूपावतारः (उत्तरार्द्धः) पृ० - २

३ सि० कौ० (संज्ञाप्रकरणम्), सू० - १८

**झोऽन्तः (७-१-३) रू० मा०, पृ० ५२**

रूपमालायाम् - "प्रत्ययस्य झस्यान्तादेशः स्यादि"ति सूत्रार्थः प्रतिपादितः। काशिकायाम्-प्रत्ययग्रहणमनुवर्तते, आदिग्रहणं निवृत्तम् प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति। कुर्वन्ति" इत्यर्थप्रतिपादनम्। तथैव सिद्धान्तकौमुद्यामपि।[१]।

परं "प्रत्ययादेर्झस्यान्तादेशः" इति प्रक्रियाकौमुदीकृता उक्तम्। तत्र प्रत्ययादेरित्यर्थस्वीकारे "शयान्तै" इत्यादौ "लेटोऽडाटौ" इत्याडागमे प्रत्ययादित्वाभावाद् झस्यान्तादेशो न स्यात्। तस्मात् प्रक्रियाकौमुदीस्थं व्याख्यानमयुक्तमेवेति प्रतीयते।

**अस्तिसिचोऽपृक्ते (७-३-९६) रू० मा० पृ० ८४**

"सार्वे इट् स्यादि" ति रूपमालाकृता व्याख्यातम्। काशिकायाम् "अस्तेरङ्गात् सिजान्तच्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमो भवति" इति व्याख्यानं विद्यते। तथैव रूपावतारे व्याकरणमिताक्षरायां प्रक्रियाकौमुद्याञ्च स्वीकृतम्। परं दीक्षितमहाभागेन सिद्धान्तकौमुद्यां भिन्न एवार्थः प्रतिपादितः। तेषामयमभिप्रायः - यदि प्राचां व्याख्यानं स्वीक्रियेत तर्हि - अस्तेर्लुङि.भूभावे "अभूत्" इतिन सिद्ध्येत्। तत्र स्थानिवत्वेन सिचः सत्वात् ततः परस्य अपृक्तस्य हल ईडागमस्य दुर्वारत्वात्। तथैव "अगात्" इत्यत्रापि सिचो लुक्यपि स्थानिवत्वेन सिचः परत्वात् ईडागमः स्यात्। तस्मात् सिद्धान्तकौमुद्याम् - विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यादि"ति सूत्रार्थः प्रतिपादितः[२]। तेन अभूदित्यत्रोक्तसूत्रेण ईडागमो न भवति, विद्यमानात् सिचः परस्य हल ईड्विधानेन प्रकृतेः सिचो "गातिस्था०" (२-४-७७) इत्यनेन लुकि सति सिचोऽविद्यमानत्वात्। प्रत्ययलक्षणन्तु नात्र प्रवर्तते - न लुमताङ्गस्य" इत्यनेन तन्निषेधात्।

सिद्धान्तकौमुदीतः पूर्ववर्तिषु प्रक्रियाग्रन्थेषु "अपृक्तस्य सार्वधातुकस्ये" ति निर्देशः। यद्यपि सिद्धान्तकौमुदीकारस्यामयर्थः लक्ष्यसिद्ध्युपकारी तथापि पाणिनि सूत्राक्षरानुगुणो नास्तीति विशेषः।

**"दधस्तथोश्च" (८-२-३८) रू० मा०, पृ० - ८९**

सूत्रमिदं "सध्वोश्च झषन्तस्य दधातेर्बशो भष् स्यात्। धत्तः, धत्ते।" इत्येवं रीत्या रूपमालाकृता व्याख्यातम्। तत्काशिकाकारमनुसरति। तथाहि काशिकायाम् - "दध इति दधातिः,कृतद्विवचनो निर्दिश्यते। तस्य झलन्तस्य बशः स्थाने भष् आदेशो भवति तकारथकारयोः परतः,चकारात्। स्ध्वोश्च परतः" इति व्याख्यानं वर्तते[३]।

---

१. सि० कौ० ( भ्वादिप्रकरणम् ), सू० - २१६९
२. सि० कौ० ( भ्वादिप्रकरणम् ), सू० - २२२५
३. काशिका सू० - ( ८-२-३८ )

प्रक्रियाकौमुदीकारस्त्वेवं सूत्रं व्याचष्टे - "द्विरुक्तस्य झषन्तस्य धातोर्बशो भष् स्यात् तथयोः स्ध्वोश्च परतः। वचनसामर्थ्यादाल्लोपस्य न स्थानिवत्ता। धत्तः।" इति[१]।

सिद्धान्तकौमुद्यामपि तथैव व्याख्यानमुपलभ्यते[२]। प्रक्रियाग्रन्थानां व्याख्यानमिदं रूपमालासम्मतं वर्तते। यतो हि पूर्वसूत्रे एकाचो बशो भष्० (८-२-३७) इत्यत्र झषन्तस्यैव बशो विधानादन्यत्रापि तदेव युक्तम्। अपि च न्यासकारादयः काशिकाकृद्व्याख्यानं द्रढीकर्तुं "झलि" इति पदस्यानुवृत्तिं वाञ्छन्ति,[३] सा असमीचीनमेवेति चिन्तनीयं विद्वद्भिः।

## लोपो यि (६-४-११८) रू० मा० पृ० ९३

सूत्रमिदं - "यादौ क्ङिति सार्वे जहातेरातः लोपः स्यात्। जह्यात्।" इत्येवंरीत्या रूपमालाकृता व्याख्यातम्। तत्रापि काशिकायाः प्रभावोऽवलोक्यते। यथा काशिकायाम् - "लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः जह्यात्' इति सूत्रार्थः। एवं रूपावतारेऽपि प्रक्रियाकौमुद्यां सिद्धान्तकौमुद्यां व्याकरणमिताक्षरायां चात्र क्ङिति" इत्यस्यानुवृत्तिर्नैव दर्शिता। सुस्पष्टये चात्र प्रक्रियाकौमुदीपाठः प्रस्तूयते - "जहातेरातो लोपः स्यात्सार्वधातुके ये पर" इति[४]। न्यासपदमञ्जरी - तत्वबोधिन्यादिषु टीकासु "क्ङिति" इति पदस्यानुवृत्तेर्व्यावृत्तिपर-प्रयोजनस्याभावादनुवृत्तिरेवावश्यकी।

## एर्लिङि (६-४-६९) रू० मा० पृ० - १२६

"घुमास्थादीनां यादौ क्ङित्येत्वं स्यादि"ति रूपमालायां सूत्रार्थः प्रतिपादितः। तत्काशिकायाः प्रभाव इति प्रतीयते। यथा हि तत्र घुमास्थागापाजहातिसामङ्गानां लिङि परत एकादेशो भवति। देयात् - क्ङितीत्येव - दासीष्ट।" इति व्याख्यानम्। प्रक्रियाकौमुद्यान्तुं "घुसंज्ञानां मास्थागैपिबतिजहातिस्यतीनां च क्ङित्यार्धधातुके लिङि आत ए स्यात्। गेयात्।" इत्यर्थः स्वीकृतः। सिद्धान्तकौमुद्यां च - "घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि" इत्यर्थः कृतः[५]।

प्रक्रियाकौमुद्यादिषु "आर्धधातुके" (६-४-४३) इत्यधिकारबलाद् "आर्धधातुके" इति गृह्यते। यद्यपि आर्धधातुकलिङः ङित्वाभावेन तदनुवृत्तेरावश्यकता नास्ति, तथापि "एकयोगनिर्दिष्टानामि"ति न्यायबलात् केवलमकितोरतुवृत्तेरसम्भवात् "ङित्" इत्यस्याप्यनुवृत्तिः फलाभावेऽप्यङ्गीकृता। सिद्धान्तकौमुद्यान्तु लक्ष्यसिद्ध्युपकारि केवलं "किति" इत्यस्यैवानुवर्तनं स्वीकृतमिति।

---

१ प्र० कौ० भाग - ३ (वाराणसी १९८०) पृ० २०२

२ "द्विरुक्तस्य झषन्तस्य धाञ्धातोर्बशो भष् स्यात्तथयोः एरयोः स्ध्वोश्च परतः।" सि० कौ० सू० २२२५

३ द्र० - का० वि० प० (न्यासः) भाग - २ पृ० ९९१

४ प्र० कौ० भाग - ३ (वाराणसी १९८०) पृ० २०० सू० - २३७४

५ सि० कौ० (भ्वादिप्रकरणम्), सू० - २३७४

## श्लिष आलिङ्गने (३-१-४६) रू० मा०, पृ० - १४४

रूपमालायां सूत्रमिदं योगविभागमकृत्वैव व्याख्यातम् । तत्रहि - "श्लिष आलिङ्गने च्लेः क्सः स्यात् । अशलिक्षत् । संश्लेषमात्रे तु पुषादि-त्वादङ् ।" इति व्याख्यानं वर्तते । तत्काशिकामनुसरति । यथा - "श्लिषेर्धातोरालिङ्गनक्रियावचनात् परस्य च्लेः क्स आदेशो भवति । आलिङ्गन मुपगूहनम्, परिष्वङ्गः । अत्र नियमार्थमेतत् । अश्लिक्षत् कन्यां देवदत्तः ।" इति व्याख्यातम् काशिकायाम् । क्षीरतरङ्गिण्यामप्येवंविधं व्याख्यानम् ।[1] प्रक्रियाकौमुद्यामपि रूपमालावदेव सूत्रार्थ उपलभ्यते[2] । परं सिद्धान्तकौमुद्यां -योगविभागद्वयमाश्रित्य सूत्रार्थो विहितः । तत्र प्रथमः रूपमालाभिमत एव नियमः । द्वितीयश्च - श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्र[3] । एतेन अनालिङ्गने "शल इगुपधादनिटः क्सः (३-१-४५) इत्यस्यापि व्यांवृत्तिर्भवि-ष्यति ।

## सन्यङोः (६-१-९) रू० मा०, भाग - ३, पृ० - ०२

तदन्तयोरनभ्यासयोः द्वित्वं स्यादि"त्यर्थः रूपमालाकृता प्रतिपादितः । तत्र सन्यङो-रति षष्ठ्यन्तमिति ग्रन्थकर्तुरभिप्रायः । काशिकायाः प्रभावोऽयमित्यपगम्यते । यथा "धातोर-नभ्यासस्येति वर्तते । सन्यङोरिति च षष्ठ्यन्तमेतत् । सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः । पिपक्षति, पिपतिषति" इति काशिकाकृद व्याख्यानम्[4] । सिद्धान्तकौमुदीकारेणापि सन्यङोरिति षष्ठयन्ततया व्याख्या-तम्[5] । परं प्रक्रियाकौमुदीकृता - सन्यङोरिति सप्तम्यन्तमाश्रित्य "अनभ्यासस्य धात्ववयव-स्येकाचो द्वे स्तः सनि यङिच परे" इत्यर्थः स्वीकृतः[6] । तत्रैतत् स्वीकारे "प्रतीषिषति" इत्यत्र द्वित्वं न स्यात्, सन्परत्वाभावात् । तत्र सन एव द्वित्वविधानम् । अत एव षष्ठ्यन्तव्याख्यानमे-वोचितमिति ।

## केलिमरः कृत्युपसंख्यानम् (वा) रू० मा० भाग -३, पृ - ६२

"कर्मकर्तरि केलिमरः कृत्युपसंख्यानम् । स्वयं भिद्यन्ते भिदेलिमानि काष्ठानि । पचेलिमाः भाषाः ।" इति रूपामालाकृद् व्याख्यानं काशिकावृत्तिमनुसरति । यथा काशिकायां - "कर्मकर्तरि चायमिष्यते" इतिवाक्येन केलिमर्प्रत्ययस्य कर्मकर्तरि विधानं कृतम् । न्यास-कारेणापि तदेव समर्थितम्[7] । कातन्त्रव्याकरणस्य दुर्गसिंहवृत्तावपि काशिकावदुल्लेखो वर्तते । रूपावतारेऽपि" केलिमरः कृत्युपसंख्यानम् । कर्मकर्तरि चायमिष्यते । पच्यन्ते स्वयमेव

---

१ "श्लिष प्राण्याश्लेष एव च्लेः क्सः । अश्लिक्षत् कन्याम्, नेह समाश्लिषज्जतु काष्ठम् ।" क्षीरतरङ्गिणी ४-७७ पृ० २२३

२ प्र० कौ० भाग - ३ ( वाराणसी १९८० ) पृ० २०७ सू० ३५५

३ सि० कौ० ( दिवादिप्रकरणम् ) सू० - २५१४

४ काशिका सू० ( ६-१-९ )

५ सि० कौ० ( भ्वादिप्रकरणम् ), सू० - २३९५

६ प्र० कौ० भाग - ३, पृ० ११३, सू० २०९

७ द्र० - न्यासः भागः १, पृ० ५८७

पचेलिमाः माषाः" इति तथैव व्याख्यानम्[१]। प्रक्रियासर्वस्वकृता तु रूपमालावद्व्याख्यानं विधाय "एष कर्मण्येवेति भाष्ये, पचेलिमस्त्वया तण्डुलुः" इति भाष्यकारस्य मतमप्युद्धतम्[२]।

परं महाभाष्ये "पचेलिमाः माषाः पक्तव्याः। भिदेलिमाः सरलाः, भेतव्याः" इति शुद्धेः कर्मणि केलिमर्प्रत्ययस्य प्रयोगः तत्र स्वयमेव भिद्यन्ते, स्वयमेव पच्यन्ते" इति कर्मकर्त्रर्थपरं व्याख्यानं न कृतम्। तस्मात् रूपमालादीनां व्याख्यानं भाष्यविरूद्धत्वादयुक्तमेव। अत एव भाष्यमतमनुसृत्य दीक्षितेन सिद्धान्तकौमुद्याम् - "पचेलिमाः माषाः, पक्तव्याः, भिदेलिमाः सरलाः भेत्तव्याः। कर्मणि प्रत्ययः। वृत्तिकारस्तु "कर्मकर्तरि चायमिष्यते" इत्याह, तद्भाष्यविरुद्धमित्युक्तम्[३]।

## 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (३-३-१०) रू० मा०, पृ० - ६५

सूत्रमिदम् "उपपदभूतायां स्यात्। यष्टुं व्रजति। याजको व्रजति" इत्येवं रीत्या रूपमालाकृता व्याख्यातम्। परं महाभाष्ये काशिकायां च "क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले तुमुन्ण्वुलौ प्रत्ययौ भवतः।" इतिसूत्रार्थः। तत्रैव "क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ति" इतिपरिभाषाऽपि विद्यते।

प्रक्रियाकौमुदीकृता तु वृत्तिभागे एवास्याः परिभाषाया अन्तर्भावः कृतः। यथा "क्रियायां क्रियार्थायामुपदे धातोर्भविषयति तुमुन्ण्वुलौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दशको याति। पुनर्ण्वुलोक्तेर्ज्ञायते नात्र वासरूपन्यायेन तृजादय" इति[४]। तथैव सिद्धान्तकौमुद्यामपि व्याख्यानमुपलभ्यते[५]। एतेनावगम्यते यत् रूपमालाकारस्य व्याख्यानं महाभाष्यदिग्रन्थविरुद्धमेवेति[६]।

## ब्रह्मभ्रूणवृत्रेषु क्विप् (३-२-८७) रू० मा० भागः ३ पृ० - १०३

"हन्तेर्भूते क्विप् स्यात्। चतुर्धा नियमायेदं सूत्रम् ब्रह्मादिष्वेव हन्तेः। ब्रह्मादिषु च हन्तेरेव। सोपपदप्रत्ययेषु क्विबेव। ब्रह्मादिषु हन्ते भूते एव। ततो 'रिपुहा, ब्रहमद्विट् ब्रहमघाती'त्याद्यसाधु। तथा हन्तेर्भूत एव काले क्विप्। ततो ब्रह्माणं हनिष्यतीत्यादौ क्विप् च इति "अन्येभ्योऽपि चे भूते मन्यन्ते। ततः कालसामान्यविवक्षायां रिपुहादि।" इति रूपमालाकृता व्याख्यातम्। व्याख्यानमिदं काशिकाकारमनुसरति। यथा काशिकायाम् "चतुर्विधश्चात्रनियम इष्यते।" इत्यादिना तदेव स्वीकृतम्[७]। प्रक्रियाकौमुद्यामपि काशिकोक्तं सूत्र व्याख्यानमङ्गीकृतम्[८]। परं रूपावतारे प्रक्रियासर्वस्वे चैतादृशं व्याख्यानं नोपलभ्यते।

---

१. रूपावतारः (उत्तरार्द्धः) पृ० - २४८

२. "कर्मकर्तरि केलिमर उपसंख्यानम्" स्वयं भिद्यन्त इत्याद्यर्थे -

भिदेलिमानि काष्ठानि शालयोऽमी पचेलिमाः।

छिदलिमा जीर्णरज्जुस्तृणजालं दहेलिमम्॥" प्रक्रियासर्वस्वम, भाग - १ पृ० १०१

३. सि० कौ० (कदन्ते कृत्यप्रक्रिया) सू० - २८३४

४. प्र० कौ० भाग - ३ (वाराणसी, १९८०) पृ० ५६२

५. द्र० - सि० कौ० सू० - ३१७५

६. काशिका, सू० ३-२-८७

७. काशिका, सू० ३-२-८७

८. द्र० प्र० कौ० भाग - ३ (वाराणसी १९८०) पृ० ५१६

महाभाष्ये तु - उभयतो नियमोऽयम्। ब्रहमादिष्वेव हन्तेर्भूते क्विब्भविष्यति। क्विबेव हन्तेर्भूते ब्रह्मादिषु।" इत्येवं व्याख्यानम्। अनेन महाभाष्यप्रमाणेन काशिकोक्तं रूपमालोक्तं च "हन्तेरेव, भूत एव" इत्यधिकं नियमद्वयमुपेक्ष्यम्। सिद्धान्तकौमुद्याञ्चात्र भाष्यकाशिकयोः मतयोः पृथक्: पृथगुपन्यासः कृतः[1]। एवं च नागोजिभट्टमहाभागेन प्रत्याख्यानसङ्ग्रहे - "अन्येभ्योऽपि दृश्यते" इति सिद्धे ब्रह्मादिष्वेव हन्तेः क्विप्, ब्रह्मादिषु हन्तेः क्विबेवेत्युभयतो नियमोऽयम्। एवं "बहुलं छन्दसि" इत्युत्तरं सूत्रमर्थवद्भवती" त्युक्तम्[2]

**"सुकर्मपापमन्त्रपुण्येषु कृञः (३-२-९७) रू० मा० भागः ३, पृ० १०६**

स्वादिषूपपदेषु कृञः क्विप्प्रत्ययो भवतीति सूत्रार्थः। अत्र रूपमालायां - त्रिविधोऽत्र नियम इष्यते। शास्त्रकृदित्याद्यपि।" इति व्याख्यानम्।

नियमस्याशयश्चेत्थम् - "कृञ एव, भूते क्विबेव भवती"ति। "स्वादिषूपपदेषु" इति नास्ति। तेन शास्त्रकृत्, भाष्यकृत् इत्यादि सिध्यन्ति। काशिकायामपि - "त्रिविधश्चात्र नियम इष्यते। धातुनियमं वर्जयित्वा कालोपपदप्रत्ययनियमः। धातोरनियतत्वादन्यस्मिन्नप्युपपदे भवति शास्त्रकृत्, भाष्यकृत्" इति व्याख्यानं दृश्यते। अत्र रूपावतारे प्रक्रियासर्वस्वे च किमपि नोक्तम्। परं प्रक्रियाप्रकाशे काशिकैव प्रमाणीकृता। यथा "स च बहुलग्रहणानुवृत्तेर्धातुनियमं वर्जयित्वा कालोपपदप्रत्ययविषयस्त्रिविध एवाश्रीयते।"[3]

सिद्धान्तकौमुद्यान्तु काशिकानामनिर्देशपूर्वकं व्याख्यानं वर्तते[4]। परं महाभाष्येऽस्य सूत्रस्य व्याख्यानं नोपलभ्यते। अतः रूपमालायां काशिकायाः सुस्पष्टतया प्रभावोऽवगम्यते।

**विदिभिदिछिदेः कुरच् (३-२-१६२) रू० मा० भागः ३ पृ० - ११३**

"विदिभिदिछिदिभ्यः कर्मकर्तरीष्यते" इति रूपमालाकृता व्याख्यातम्। तद्व्याख्यानं काशिकामनुसरतीति प्रतीयते। यथाकाशिकायाम् - "भिदिच्छिद्योः कर्मकर्तरि प्रयोगः इत्युक्तम्। सिद्धान्तकौमुद्यां प्रक्रियासर्वस्वे चेदं सूत्रं नैव व्याख्यातम्। केवलमुदाहरणमात्रं दर्शितम्। महाभाष्येऽप्यस्य व्याख्यानं नोपलभ्यते। परं प्रक्रियाकौमुदीकृता काशिकामाश्रित्य "भदिच्छिदोः कर्मकर्तरि" इति पठितम्[5]।

अत्रायं विशेषः - काशिकायां प्रक्रियाकौमुद्यां च कर्मकर्तरि भिदिच्छिदो कुरच् स्यादिति व्याख्यानं दृश्यते। परं रूपमालायां तत्रैव वेत्तेरपि ग्रहणम्।

---

१. द्र० सि० का० सू० ५ २९९८

२. " सारस्वतीसुषमा (द्वितीयवर्षाङ्कः, १९४३ प्रत्याख्यानसङ्ग्रहः), पृ० - १९

३. प्र० कौ० (प्रकाशव्याख्या) भाग : ३, पृ० - ५५४

४. "सौकर्मादिषु च, कञः क्विप् स्यात्। त्रिविधोऽत्र नियम इति काशिका" सि० कौ० (कृदन्तप्रकरणम्) सू० - २९९९

५. प्र० कौ० भाग - ३ (वाराणसी, १९८०) पृ० ५५४

• तत्वबोधिनीकारमतेन "गुरूमत्सरच्छिदुरयाऽदुरयाचितमङ्गना" (शि० ब० ६/८) "करीन्द्रदर्पच्छिदुरं मृगेन्द्रम्" इत्यादिषु शुद्धे कर्तरि एव छिद्धातोः कुरच्प्रत्ययस्य सत्वात् काशिकोक्तं रूपमालोक्तं च "कर्मकर्तरि प्रयोगः" इत व्याख्यानं चिन्त्यमेवे[1]ति। भाषावृत्तौ त्वस्य सूत्रस्य टिप्पणी भागे पं० क्षितीशचन्द्रचटर्जीमहोदयानां मतन्त्वित्थम् - "वस्तुतस्तु कर्तरि कृत् कर्तृयुक्तः प्रत्ययः यथासम्भवं कर्म कर्तयपि भवति, तस्यापि कर्तृत्वात्। तेन - "मुग्धकान्ता स्तनसङ्गभङ्गुरैः" (शिशु०) १-४७) "संलक्ष्यते न च्छिदुरोऽपि हारः" (रघु० १६/२६) इत्यादयः प्रयोगा कर्मण्यपि सङ्गच्छन्ते[2]।

## स्वपितृषोर्नजिङ् (३-२-१७२) रू० मा० भाग :३, पृ० - ११६

अस्य सूत्रस्य व्याख्याने रूपमालाकृता 'धृषेश्चेति वार्तिकं पठितम्। महाभाष्येऽस्य पाठोऽनुपलब्धः। परं काशिकावृत्तौ "धृषेश्चेति वक्तव्यम्" धृष्णक् इति व्याख्यानं दृश्यते। सिद्धान्तकौमुदीकारोऽपीदं वचनं काशिकावाक्यत्वेन स्वीकरोति[3]। चान्द्रव्याकरणे तु "धृष्णक्" इति प्रयोगोऽनुपलब्धः। परं कातन्त्रव्याकरणे "तृषिधृषिस्वपां नजिङ्"इतिसूत्रेणोक्तप्रयोगस्य सिद्धिर्भवति[4]। एतेन प्रमाणेन "धृष्टे धृष्णक् वियातश्च" वचनं[5] रूपमालाकृद्व्याख्यानं च संगच्छते।

## मध्यान्मः (४-३-८) रू० मा० भाग : ४ पृ० ०७

अस्य सूत्रस्य व्याख्याने रूपमालाकृता "आदेश्चे"ति वार्तिकमुक्त्वा "आदिमः" इत्यस्य साधुत्वं प्रदर्शितम्। व्याख्यानमिदं काशिकानुसारि वर्तते। यथा हि "आदेश्चेति वक्तव्यमि"ति काशिकाकृद्भ्यां वचनम्। परं महाभाष्ये ४-३-२३ सूत्रे "अग्रादिपश्चाड्डिमच्" इतिवार्तिकेन "आदिमः" इति रूपं निष्पद्यते। सिद्धान्तकौमुदीकारोऽपि महाभाष्यमनुसरति। शब्दकौस्तुभेऽप्युक्तम् - "मध्यमम्। अत्र वृत्तिकारः। आदेश्च। अबोधसोर्लोपश्चेति पठित्वा आदिमः, अवमः, अधमइत्याद्युदाजहार। तत्रादिम इति रूपम् अग्रादिपश्चाड्डिमजिति वार्तिकेन सिद्धम्[6] चान्द्रव्याकरणे "मध्यादिभ्यां मः" इतिसूत्रेण मप्रत्यये सति "अदिमः" इति सिद्धयति[7]। अतः काशिकारूपमालायोर्व्याख्याने चान्द्रव्याकरणस्य प्रभाव इति वक्तुं शक्यते।

## सर्वत्राण् तलोपश्च (४-३-२२) रू० मा० भाग : ४, पृ० - ०९

एतत्सूत्रव्याख्याने रूपमालाकृता हैमन्ते भवमित्यर्थे लोके वेदे च हेमनम्, हैमन्तमिति प्रयोगद्वयस्य पाठः स्वीकृतः। तथा च "ठञमपीत्येके" इत्युक्त्वा मतान्तरमप्यङ्गीकृतम्।

---

१. सि० कौ० (तत्वबोधिनीटीका) सू० ३१४२
२. द्र० भाषावृत्तिः, सू० - ३-२-१६२
३. सि० कौ० (कृदन्तप्रकरणम्), सू० - ३१५२
४. कातन्त्रव्याकरण, ४-४-५४
५. अ० को० (विशेष्यनिघ्नवर्गः) ३/३५
६. शब्दकौस्तुभः (४-३-८)
७. चान्द्रव्याकरणम् सू० ३-२-८२

व्याख्यानमिदं काशिकावृत्तिमनुसरति। तत्र "हैमन्तिकमि"ति प्रयोगो भाषायामपि स्वीकृतः।[१] । रूपावतारे प्रक्रियाकौमुद्यां च एवमेव व्याख्यानमुपलभ्यते। परन्तु सिद्धान्तकौमुद्यां केवलं "हेमनम्, हेमन्तम्" इति प्रयोगद्वयस्यैव पाठः स्वीकृतः[२] । अर्थात् हेमन्ते भवमिति विग्रहे "सर्वत्राण् तलोपश्चे"त्यणि तलोपे आदिवृद्धौ विभक्त्यादिकार्ये हैमनमिति। अत्र यस्येति च" इत्यल्लोपस्य स्थानिवद्भावात् "अन्" इति प्रकृतिभावात् टिलोपो न। चकारात् पक्षे "सन्धिवेला०" ४-३-१६ इत्यनेन ऋत्वर्थेऽणः प्रवृत्तेः। तस्मिन्पक्षे हेमन्तमितिप्रयोगः, न तु हैमन्तिकमिति। "हेमन्ताच्च" इति ठञः छान्दसत्वात् "हैमन्तकमि"ति प्रयोगो वेद एव स्वीक्रियते, न तु भाषायाम्। इदमेवाभिप्रेत्य व्याकरणमिताक्षरा-यामुक्तम् "भाषायामपि ठञ्, तेन हैमन्तिकमित्यपीति काशिका। तद् भगवदनभिमतम्। भगवता हि हेमनशब्दस्य हेमन्तपर्यायस्य प्रकृत्यन्तरत्वादुभाभ्यां ऋत्वणि हैमनं हैमन्तमिति भाषायामिष्टरूपद्वयसिद्धेः, सूत्रमेतत् प्रत्याख्यातम्।"[३]

**परिषदो ण्यः (४-४-१०१)  रू० मा० भागः ४, पृ० - ३६**

रूपमालाकृताऽत्र "परिषदोऽपीष्यते" इत्युक्तम्। एवं प्रयोगद्वयस्य साधुत्वाय काशिकायाम् "णप्रत्ययोऽप्यत्रेष्यते" इत्युक्त्वा स तदर्थं योगविभागः क्रियते-परिषदः णो भवति। पारिषदि साधु पारिषदः। ततः ण्यः पारिषद्य इत्येवं "इति व्याख्यातम्। महाभाष्येऽत्र कापि योगविभागविषयिका कल्पना नैव दृश्यते। सिद्धान्तकौमुद्यान्तु योगविभागोऽङ्गीकृतः[४] ।

भाषावृत्तिकारः काशिकोक्तं वचनं "णोऽपीष्यत इति जयादित्यः" इत्युक्त्वा जयादित्यप्रणीतमेव मनुते। परं चान्द्रव्याकरणे "परिषदो ण्यश्च" इति ण्यप्रत्यये पारिषद्यः, णप्रत्यये च "पारिषदः" इतिरूपद्वयं निष्पद्यते[५] । एतदेव काशिकाकृतोः रूपमालाकारस्य च योगविभागस्य मूलमिति।

**दण्डादिभ्यो यः (५-१-६६)  रू० मा० भागः ४, पृ० - ४७**

रूपमालायामनेन सूत्रेण यप्रत्ययो विधीयते। काशिकायां, रूपावतारे, व्याकरणमिताक्षरायाञ्चापि यप्रत्ययः स्वीकृतः। परं सिद्धान्तकौमुद्यामनेन सूत्रेण यत्प्रत्ययस्यैव विधानमङ्गीकृतम्[६] । तेन दण्डमर्हतीति दण्ड्यः, अर्ध्यः, वध्य इत्यादिप्रयोगाः सिध्यन्ति। पदमञ्जरीप्रणेतुः हरदत्तस्यापि यत्प्रत्ययविधानमेवाभिमतमिति। सुस्पष्टये तद्व्याख्यानं प्रस्तू-

---

१. द्र० - काशिका, सू० ४-३-२२
२. सि० कौ० ( शैषिकप्रकरणम् ), सू० -१-१३-९०
३. व्याकरणमिताक्षरा, ४-३-२२
४. सि० कौ०, सू० - १५९४
५. चान्द्रव्याकरणम् - ३/४/१०३
६. सि० कौ० ( आर्हीयप्रकरणम् ), सू० - १७३१

यते - "इह "दण्डादिभ्यः इत्येतावत्सूत्रम्, अनन्तरश्च यत्प्रययो विधीयते। तथा च वध्यशब्द-व्युत्पादनाय क्यप्विधावुक्तम्। "हनो वध च तद्धितो वा" इति। यदि चात्र यद्विधीयते तत एव तदुत्पद्यते तद्धितो वेति। कथम् ? क्यप्याद्युदातत्वम्, यत्यपि तद्धिते "यतोऽनावः" इत्याद्युदात्तत्वमेव। यदि त्वत्र यो विधीयेत ततः स्वरे विशेषादनुपपन्नमेतत्स्यात्। उत्तरसूत्रे (५-१-६७) चास्य यस्यैवानुवृत्तिः स्यात्, न यतः। अथापि स्वरितत्वात् यत एवानुवृत्तिरुच्यते। एवमपि वृत्तिकारस्यैतद् वक्तुमापद्येत "यदनुवर्तते नानन्तरो य इति। ये त्विभवधमेधशब्दानां यदन्तानामद्युदात्तानां छन्दसि प्रयोगा| - इभ्यान्न राजा वनान्यन्ति तस्यादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति, अपां मेध्यं यज्ञियम् इत्याद्याः, ते दण्डादिभ्यो यविधानेऽप्युपपद्यन्ते। कथम् ? "दण्डादिभ्यो य" इत्यस्यावकाशो भाषायाम्। "छन्दसि यत्" इत्यस्य तु दण्डादिभ्योऽन्योऽवकाशः, दण्डादिभ्यश्छन्दस्युभय प्रसङ्गे परत्वात् यद् भविष्यति। तस्मादेते प्रयोगाः "दण्डादिभ्यो यद् विधीयते" इत्यत्रार्थे प्रमाणत्वेन नोपन्यसनीयाः।" इति[१]।

एतेन प्रमाणेन "अचो यत्" इतिसूत्रे भाष्ये "दण्डादिभ्यो यत्" इति दर्शनाच्च लोकवेदोभयत्रोपयोगित्वाच्च यत्प्रत्यय एव स्वीकर्तव्यः।

## सख्युर्यः (५-१-१२६) रू० मा० भागः ४, पृ० - ५७

रूपमालायाम् - "सख्युर्यः" इत्यत्र "दूतवणिग्भ्यां चेति (वा) दूत्यम्। वाणिज्यम्।" इति व्याख्यानम्। काशिकायां "दूतवणिग्भ्यां चेति वक्तव्यम्" इति वचनं संदृश्यते। परं महाभाष्येऽस्य विवरणस्याऽभावः। भाषावृत्तौ चेदं "दूतवणिग्भ्यां चे"ति जयादित्यः" इति जयादित्यवचनत्वेनोररीकृतम्[२]। दीक्षितमहाभागस्तु सिद्धान्तकौमुद्यामिदं काशिकावचनमिति स्वीकरोति। यथा "दूतवणिग्भ्यां च" दूतस्य भावः कर्म वा दूत्यम् वाणिज्यमिति काशिका"। चान्द्रव्याकरणे "सखिदूतवणिग्भ्यो यः" इतिसूत्रं वर्तते[३]। अतस्तस्यैव रूपमालायां काशिकायाञ्च प्रभाव इति वक्तुं शक्यते।

## अवारपारात्यन्तानुकामं गामी (५-२-११) रू० मा० भाग : ४, पृ० - ६२

रूपमालायाम् - अत्यन्तीनः, अनुकामीनः। आद्यात्समस्ताद् व्यस्ताद् विपरीताच्चे-ष्यते "इति विवेचनं वर्तते। काशिकायामपि" विगृहीताच्च, विपरीतादपीष्यते, अवारीणः, परावारीणः" इत्यादिकं व्याख्यानम्।

महाभाष्ये तु काशिकानुगतं व्याख्यानं नास्ति तत्र "परोवरीणः, परंपरीणः" इतिरूपद्वयमुपलभ्यते[४]। सिद्धान्तकौमुद्यान्तु रूपमालावदेव व्याख्यानम्[५]। परं चान्द्रव्याकरणे "पारा-

---

१. पदमञ्जरीः (५-१-६६)
२. भाषावृत्तिः, ५-१-१२६
३. चान्द्रव्याकरणम्, सू० - ४-१-१४२
४. म० भा०, सू० ५-१-१०
५. सि० कौ०, सू० - १८२

वारावारपारात्यन्तानुकामं गामी" इतिसूत्रं विद्यते।[१]। अतश्चान्द्रव्याकरणस्यैवात्र प्रभावोऽवगम्यत इति।

**ऊषसुषिमुष्कमधो रः (५-२-१०७) रू० मा०, पृ० - ७६**

अस्य सूत्रस्य वृत्तौ रूपमालाकृता 'मुखकुञ्जनगपांशुपाण्डुभ्यश्चेति (वा०) कुञ्जरो हस्ती। कच्छ्वा ह्रस्वश्चेति (वा०) कच्छुरः" इति व्याख्यातम्। परं काशिकायाम् - "रप्रकरणे-खमुखकुञ्जेभ्य उपसंख्यानम्, नगपांशुपाण्डुभ्यश्चेति वक्तव्यम्, कच्छ्वा ह्रस्वत्वं च "इति वार्तिकत्रयं विद्यते"[२]।

काशिकोक्तवार्तिकत्रयस्य स्थाने रूपमालायां संक्षिप्य एकमेव वार्तिकं प्रणीतं ग्रन्थकृता। महाभाष्ये तु "नागाच्चेति वक्तव्यम्"। नगरमि"त्येव पाठः। व्याकरणमिताक्षरायां "रप्रकरणे खादिभ्य उपसंख्यानम्" इत्युक्त्वा नगरादिप्रयोगाणां साधुत्वं दर्शितम्[३]। भट्टोजि-दीक्षितमहाभागस्तु वृत्तिकारमनुकरोति[४]। चान्द्रव्याकरणे "ऊषादिभ्यो रः" इत्यनेन "नगरः, पांसुरः,पाण्डुरः" इत्यादिरूपाणि संसाधितानि। तत्रैव "कच्छ्वा ह्रस्तत्वं च" इति व्याख्यानम्[५]।

अत एव काशिकावृतौ नगाच्चेति भाष्योक्तवार्तिके रूपमालायां चोक्तवार्तिके पांशुपाण्डुशब्दाभ्यामपि सन्निवेशः कृत इति प्रतीयते।

**तस्मान्नुडचि (६-३-७४) रू० मा० भागः ४ पृ० - १२४**

लुप्तनकारादित्यर्थः। अनश्वः। अनादेशो न विहितो ङमुट् प्रसङ्गात्। अभा-वोक्तौ तु प्रसज्य प्रतिषेधार्थत्वम्। तत्र क्वचिदेवेष्यते। यथा अकृत्वा, आनाम्य अकर्तुम्, अमक्षिकमित्यादौ त्वव्ययीभाव एव "इति रूपमालायां व्याख्यानं दृश्यते। काशिकायामेतत्सू-त्रव्याख्यावसरे - "तस्मादिति किम् ? नञ् एव हि स्यात्। पूर्वान्ते हि "ङमोह्रस्वादचि ङमुण् नित्यम्" इति प्राप्नोती" त्युक्तम्[६]।

प्रक्रियाकौमुद्यां नञ्समासस्योदाहरणत्रयं दर्शितम् यथा - अश्वादन्योऽनश्वः,धर्म-विरुद्धोऽधर्मः, पापाभावोऽपापमिति। परं सिद्धान्तकौमुद्याम् "अनश्वः" इत्येवोदाहरणं प्रद-त्तम्। ततश्च अर्थाभावेऽव्ययीभावेन सहायं विकल्प्यते। "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति "अद्रुतायामसंहितम्" (वा० ११६७) इति च भाष्यवार्तिकप्रयोगात्। तेन अनुपलब्धिः, अविवादः,अविघ्नमित्यादि सिद्धम्।" इति प्रतिपादितम्[७]।

---

१ द्र० - चान्द्रव्याकरणम्, सू० ४-१-१४२

२ काशिका, सू० ५-२-१०७

३ व्याकरणमिताक्षरा, ५-२-१०७

४ सि० कौ०, सू० - १९१४

५ चान्द्रव्याकरणम, सू० ४-२-१११

६ काशिका सू० ६-३-७४

७ सि० कौ०( तत्पुरुषसमासः करणम्) सू० ७५८

अयम्भावः - यद्यप्युत्तरपदार्थप्राधान्यं विवक्षितं तदा तत्पुरुषः, यदि च पूर्वपदार्थप्राधान्यं तदाऽव्ययीभावः। एवं चाब्राह्मण इत्यादौ नञ्समासस्थले आरोपितत्वं नञ् द्योत्यं वाच्यं वा। तत्रोत्तरपदार्थे ब्राह्मणेऽन्वयादारोपितत्वविशिष्टब्राह्मण इत्यर्थः। एवं नञ्समासे सर्वत्रायमेवार्थः। अत एव प्राचीना -

**"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः, षट् प्रकीर्तिताः॥"**[१]

## त्यदादीनि सर्वैर्नित्यम् (१-२-७२) रू० मा० भागः ४, पृ० - १७६

सूत्रमिदं रूपमालाकृता "त्यदादिभिरन्यैश्चेत्यर्थः। स च चैत्रश्च तौ। त्यदादीनां मिथो द्वन्द्वे यद्गणो परि पठितं तदिति स च यश्च यौ। स च त्वं च युवाम्। त्वं च अहं च आवाम्। स च त्वं च कश्च के।" इत्येवं रीत्या व्याख्यातम्। व्याख्यानमिदं वृत्तिकारमनुसरति यथा काशिकायाम् - "स च यश्चेति विग्रहे "त्यदीदीनां मिथो यद्यत्परं तच्छिष्यते" इति वार्तिकेन "यौ" इति प्रयोगो व्युत्पाद्यते।

परं महाभाष्ये "पूर्वस्य खल्वपि दृश्यते" इति व्याख्यानम्[२]। तेन स च यश्च तौ, यौ, यश्च कश्च यौ कौ, इत्यादीनामपि सिद्धिर्भवति। रूपावतारे प्रक्रियाकौमुद्यां च रूपमालावदुल्लेखः। सिद्धान्तकौमुद्यां महाभाष्यमनुसृत्य पूर्वपरशेषावुभावपि संगृहीतौ[३]।

## उगितश्च ६-३-४५ रू० मा० भागः ४, पृ० - १९४

"उगितश्च परस्याः नद्याः घादिषु वा ह्रस्वः स्यात्। श्रेयसितरा, श्रेयसीतरा वा। प्रकर्षयोगात्प्राक् स्त्रीत्वस्याविवक्षितत्वाच्छ्रेयस्तरा महत्तरा" इति रूपमालाकृता व्याख्यातम्। काशिकायाः प्रभावोऽयमिति वक्तुं शक्यते। यथा चोक्तं काशिकायाम्" पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः। प्रकर्षप्रयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वाद् वा सिद्धमि"ति"। रूपमालागतं काशिकागतं च व्याख्यानमिदं चान्द्रव्याकरणसम्मतम्[४]। परं रूपावतारे "श्रेयस्तरा" इत्यादिप्रयोगाः नोपलभ्यन्ते। अतः रूपावतारोक्तं वचनं चिन्त्यमेवेति प्रतीयते[५]।

सिद्धान्तकौमुदीकारस्तु - "श्रेयसीतरा" इत्यादिदीर्घान्तङीब्विशिष्टानि रूपाणि निर्मूलानीति प्रतिपादयति। यथोक्तं सिद्धान्तकौमुद्याम् - "ह्रस्वाभावपक्षे तु "तासिलादिषु॰" इति पुंवत्। विद्वत्तरा। वृत्यादिषु विदुषीतरा इत्यप्युदाहृतम्, तन्निर्मूलम्। न हि स्वयमप्रवर्तमानोऽपि ह्रस्वः पुंवत्त्वं बाधितुं शक्नोती"ति।"[६]

---

१ द्र० - परमलघुमञ्जूषा, पृ० - १३१ (अत्र भर्तृहरिप्रणीतेयं कारिका इत्युक्तम्)

२ म० भा० १-२-७२

३ "पूर्वशेषोऽपि दृश्यते" इति भाष्यम्। सि० कौ० सू० - ९३८

४ द्र० चान्द्र व्याकरणम्, सू० - ५-२-४४

५ द्र० रूपावतारः (पूर्वार्द्धः) पृ० - २०८

६ सि० कौ०, सूत्र - ९८७

# प्रक्रियाग्रन्थपरम्परायां रूपमालायाः प्रणेतुः स्थानम् व्याकरणशास्त्रे तस्यावदानञ्च।

परिवर्तनशीलेऽस्मिन् संसारेऽध्ययनाध्यापनक्रमेऽपि परिवर्तनं नास्वाभाविकम्। पुरा पठनपाठनादिक्रमो मौखिक आसीत्। यतो हि तदा ग्रन्थादीनामभाव आसीत्। गुरुमुखदेवाकर्ण्य शिष्याः विविधविषयेषु पारङ्गता भवन्ति स्म। गच्छति काले भूर्जपत्रादिषु लेखनपरम्परा प्रवर्तिता। ईशवीयाब्दस्य प्रथमशतकात् पूर्वं व्याकरणाध्ययनानन्तरं वेदाध्ययनस्य परम्परासीत् सा पतञ्जलिसमयात्पूर्वमेव परिवृत्तिं गता। यथोक्तं महाभाष्ये -

"पुरा कल्प एतदासीत्। संस्कारोत्तरकालं ब्राहमणाः व्याकरणं स्माधीयते। तेभ्यस्तत्र स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते। तदद्यत्वे न तथा। वेदमधीत्य त्वरिता वक्तारो भवन्ति। वेदान्नो वैदिका शब्दाः सिद्धा लोकाच्च लौकिकाः। अनर्थकं व्याकरणमिति।"[१]

विक्रमाब्दस्यैकादशशतकपर्यन्तं पाणिनीयव्याकारणशास्त्रस्याध्ययनाध्यापनञ्चाष्टाध्यायीक्रमेणैवाभूत्। चीनदेशयात्रिणा इत्सिंगमहोदयेनापि स्वकीय भारतयात्रावर्णनप्रसङ्गेन इदमेवोल्लिखितम् यत् तदानीं भारते अष्टाध्यायीति ग्रन्थाध्ययनानन्तरमेवान्ये विषयाः पाठ्या भवन्ति स्म। परमुत्तरवर्तिकाल इयं परम्परा परिवर्तिता।

अष्टाध्यायीक्रमेण काशिकादिवृत्तिग्रन्थाध्ययनेन व्याकरणशास्त्रस्य ज्ञानाय महान् प्रयासः कर्तव्यो भवति। वार्तिकादिसहितां सम्पूर्णामष्टाध्यायीमधीत्यैव कोऽपि शुक्लः, शुक्लेन, शुक्लाय, शुक्लस्य, शुक्लयोरित्यादीनां प्रयोगाणां निष्पादने क्षमो भवति। यतो ह्यत्र रूपाणां साधने "अर्थवदधातुरप्रत्ययः - प्रातिपदिकम्,(१-२-४५) "स्वौजसमौट्०" (४-१-२) "ससजुषो रुः(८-२-६६)खरवसानयोर्विसर्जनीयः(८-३-१५),"टाङसिङसामिनात्स्याः" (७-१-१२) ङेर्यः (७-१-१३) इत्योद्यनेकाध्यायस्थसूत्राणामेकत्रैवोपस्थितिरेपक्ष्यते। अष्टाध्याय्यां च सूत्राणामाधिक्यं वर्तते। तत्रापि सूत्रेषु भगवता पाणिनिना स्वल्पाक्षरैरेव गूढतमानां भावानां सन्निवेशो विहितः। अतः सरलरीत्या व्याकरणज्ञानमिच्छतामध्येतृणां अष्टाध्यायीपद्धत्या व्याकरणशास्त्राध्ययनं बहुकष्टकरं भवति स्म। अतः परम्परागताष्टाध्यायीक्रमस्थकाठिन्यनिवारणाय सौकर्येण व्याकरणशास्त्रज्ञानाय च बैद्धधर्मावलम्बिना भिक्षुणा धर्मकीर्तिना प्रक्रियाक्रमस्यारम्भो विहितः। तेन सर्वतः प्रथमं विक्रमाब्दस्य द्वादशशताब्द्यां रूपावतारनामकः

१ मा० भा० भाग - १ ( पस्पशांह्निक ) आचार्य मधुसूदनमिश्र, पृ० २६

प्रक्रियाग्रन्थो विरचितः। यद्यप्यपाणिनीयव्याकरणेषु कातन्त्रव्याकरणस्य प्रक्रियाक्रमे प्रथमं स्थानम् तथापि पाणिनीयव्याकरणपरम्परायां बौद्धः धर्मकीतिरेव प्रक्रिया-क्रमप्रवर्तक आसीत्।

धर्मकीर्तिरयं सौगतमतानुयायीति ग्रन्थादौ रचितेन सर्वज्ञप्रणामात्मकमङ्गलश्लोकेन परिज्ञायते[1]। परम् आर्पटाख्यविद्वद्भिरचितलिखितग्रन्थसमुच्च्यसूचिकायां कृष्णदीक्षितस्यैव रूपावतार- प्रणेतृत्त्वेनोल्लेखो विद्यते[2]। धर्मकीतिरेव रूपावतारस्य प्रणेतेति नानाविधप्रमाणैः निश्चितप्रायम्। नेपालराजग्रन्थालयस्य लिखितग्रन्थेषु रूपावतारोऽन्यतम इति महामहोपाध्यायहरप्रसादशास्त्रिप्रकाशितायां तद्ग्रन्थसूच्यां दृश्यते। अपि च तत्र मुद्रितैतद् ग्रन्थारम्भे लिखिते श्लोके धर्मकीर्तेरस्य कर्तृत्वेनोल्लेखो वर्तते। यथा -

**अभिगतषडभिज्ञप्रक्रियोऽपि स्वयं यः प्रथमसमयसज्जद्वासनावासितात्मा।**
**अकलयदतिहृद्यंशब्दविद्यानुमोदम् स जयति नवकीर्तिः सन्मनोधर्मकीर्तिः**[3] ॥

कस्तावदेष धर्मकीर्तिः कदा काम्बा भुवमलङ्चकारेति विचारो मया प्रक्रियाग्रन्थानामविर्भावप्रसङ्गे वैशद्येन प्रस्तुतः। इदानीं प्रक्रियाक्रमे रूपावतारविषये किञ्चिदुच्यते - सम्पूर्णोऽयं ग्रन्थः द्विधा विभक्तः पूर्वार्द्धः, उत्तरार्द्धश्च। तत्र पूर्वार्द्धे प्रत्येकं प्रकरणमवतार इति नाम्नाभिहितम्। यथा संज्ञावतारः, सन्ध्यवतारः, विभक्त्यवातरः, अव्ययावतारः स्त्रीप्रत्यायावतारः कारकावतारः, समासावतारः तद्धितावतारश्च। उत्तरार्द्धे तु केवलं धातुप्रत्ययपञ्चिकामात्रम्। अत्र काशिकावृत्तिमनुसृत्य सूत्राणां व्याख्यानं विद्यते। प्रतिप्रकरणं प्रारम्भे ग्रन्थकारः कञ्चनप्रश्नमुपस्थाप्यान्ते प्रश्नस्य समाधानाय प्रकरणमारभते। अनेनैव हेतुनास्य ग्रन्थस्य नाम रूपावतार इति सार्थक्यं भजते।

इत्थं रूपप्रधानपद्धत्या पाठ्यमानस्य व्याकरणस्याविष्कर्ता धर्मकीतिरेवेति वर्तमाने नव्यव्याकरणजगति तस्य प्रक्रियापरम्परायाः प्रवर्तकरूपेण महत्वपूर्ण स्थानम्। यदि बौद्धेन धर्मकीर्तिना रूपावतारो न लिख्येत तर्हि रूपप्रधाना प्रक्रियेति परम्परा नैव प्रचलेत्। इदानीं सर्वत्रैव भारते संस्कृतविद्यालयेषु विश्वविद्यालयेषु च रूपावतारमूला प्रक्रिया पद्धतिरङ्गीकृता वर्तते।

अस्यामेव परम्परायां रूपावतारानन्तरं श्रीमत्परमहंस-परिव्राजकाचार्यविमलसरस्वतीभिः रूपमालानामकोऽपरो प्रक्रियाग्रन्थो विरचितः। यद्यप्युत्तरवर्तिप्रक्रियाग्रन्थेषु रचनापद्धतिरस्माद् भिन्नैव वर्तते, तथापि प्रक्रियाक्रमेऽग्रगामित्वादुपयोगित्वाच्चास्याः रूपमालायाः महत्वपूर्णं स्थानम्। अत्र प्रकरणानां मालाशब्देनोल्लेखो दृश्यतेऽवान्तरप्रकरणानां च भागशब्देन। ग्रन्थस्यास्य प्रकरणक्रमस्य विषय प्रतिपादनस्य च विषये प्रबन्धेऽस्मिन् बहुत्र चर्चितम्। ग्रन्थसंक्षेपहेतुनाऽत्राचार्यचरणैः सर्वाणि पाणिनीयसूत्राणि न व्याख्यातानि, अपितु लौकिकव्यवहारोपयोगिप्रयोगसाधनाय केवलं २०४६ पाणिनिसूत्राणि कतिपयवार्तिकैः सह व्याख्यातानि।

---

१ रूपावतारः भाग १, पृ० -१

२ द्र० रूपावतारः भूमिका, पृ० - १

३ रूपावतारः भाग १, भूमिका, पृ० - २

विमलसरस्वतीमहाभागः शिवभक्तः परमहंसः सन्यासी आसीदिति रूपमालान्ते लिखितया पुष्पिकया ज्ञायते ।[१] । ग्रन्थलेखनादिकं तेषां शिवभक्तौ विघ्नमेवासीत् परम् शिवस्यैवकृपया भगवतः प्रीत्यै रूपमालेयं तैर्विरचतेति स्वयमेवोक्तं ग्रन्थान्ते[२] । तथा च "न बहुव्रीहौ" १/२/२९ इतिसूत्रे तैः 'अप्रधानेऽपि नेष्यते' इत्युक्त्वा शिवमहिम्नः स्तोत्रस्याधो लिखिता पंक्तिरुद्धृता "नमः सर्वस्मैते तदिदमतिसर्वाय च नमः"[३]

विमलसरस्वतीभिरन्योऽपि कश्चिद् ग्रन्थो विरचित इति विषये कुत्रापि किमपि प्रमाणं नोपलभ्यते । अत एव केवलं रूपमालानामकः पाणिनीयप्रक्रियाक्रमग्रन्थ एवैतेषां रचना । ग्रन्थोऽयं प्रक्रियापरम्परायाः विकासेऽत्यन्तं सहायकोऽभूत् । यतो हि परवर्तिभिः वैयाकरणैः बहुत्र स्थलेषु रूपमालातः साहाय्यं गृहीतम् । मध्यकौमुद्यां लघुसिद्धान्तकौमुद्यां च यत्र तत्र रूपमालामनुसृत्य व्याख्यानं दृश्यते । किं बहुना प्रक्रियाक्रमस्य सिद्धान्तकौमुदीति चरमे ग्रन्थेऽप्यस्याः प्रभावोः द्रष्टुं शक्यते । यथा हलन्त्यमितिसम्पूर्णासूत्रावृत्तेः सिद्धान्तः पूर्वं विमलसरस्वतीभिरेव स्वीकृतः, तत एव भट्टोजिदीक्षितमहोदयैरप्यङ्गीकृत इति ।

रूपमालेयं बालकानां व्याकरणशास्त्रे प्रवेशाय तेषां लौकिकसंस्कृतशब्दानां परिज्ञानाय श्रीमद्भिः विमलसरस्वतीभिः विरचितेति नूनमियं बालानामुपकारिणी सती शाब्दीं व्युत्पत्तिं प्रदर्शयति ।

रूपमालायां प्रायेण काशिकावृत्तिमनुसृत्यैव सूत्रादीनां व्याख्यानं ग्रन्थकारेण कृतम् । परन्तु यत्र तत्र महाभाष्याशयोऽपि वर्णितः, प्रमाणत्वेन च महाभाष्यस्योद्धरणान्यप्युद्धृतानि । यथा - तिङन्तमालायां "भूवादयो धातवः" इति सूत्रे "भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।" इत्युक्तम्[४] । अनेकत्र स्थलेषु चान्द्राद्यपाणिनीयव्याकरणान्यनुसृत्यापि रूपसिद्धिः दर्शिता ।

एवं पूर्वाक्तविवेचनेनेदं ज्ञायते यद् व्यवहारोपयोगिनां लौकिकानां शब्दानां साधुत्वमत्र रूपमालाकृद्भिः दर्शितम् । यथावसरं कतिपयवैदिकशब्दानामपि साधुत्वं प्रतिपादितम् । अत एव ग्रन्थकारोऽयं प्रक्रियापरम्परायाः विकासे महत्वपूर्णं स्थानं भजते । धर्मकीर्तेरनन्तरं विमलसरस्वतीभिरेव पाणिनीयव्याकरणे प्रक्रियाक्रमस्य मार्गः प्रशस्तः कृतः । ततः रामचन्द्राचार्येण प्रक्रियाकौमुदी विरचिता । इत्थं रूपमालादिभ्यः प्ररेणां प्राप्योत्तरवर्तिभिः भट्टोजिदीक्षितादिभिः विद्वद्भिः सिद्धान्तकौमुद्यादिमहनीयप्रक्रियाग्रन्थाः विरचिताः । यैरद्यत्वे संस्कृतव्याकरणशास्त्राध्ययनस्याध्ययनाध्यापनप्रणाली पूर्णतः परिवर्तिता । अत एवाद्य सर्वत्रैव प्रायेण नव्यव्याकरणमेवाधीयते ।

---

१ रू० मा० भाग ४ पृ० २८

"इति श्रीमत्परमहंसपरिव्राजकाचार्य विमलसरस्वती विरचिता रूपमाला समाप्ता" इति ।

२ रू० मा० भाग ४ पृ० २०८

३ रू० मा० भाग - १, पृ० - ११४ द्र० - शिवमहिम्नः स्तोत्रम् ।

४ रू० मा०, ( तिङन्तमाला ) पृ० - ४९

परम्परायामस्यां विमलसरस्वतीनामनन्तरं श्रीमतां रामचन्द्राचार्यमहोदयानां नाम दृष्टिपथमायाति। अनेन शाब्दी प्रक्रियां सुखेन परिज्ञानाय जिज्ञासूनां छात्राणां कृते व्याकरणार्णवतरणिरूपः प्रक्रियाकौमुदीति ग्रन्थो विरचितः। तथा चोक्तं विठ्ठलेन प्रसादटीकायाम् -

"यथा कौमुदी सुखरूपा सती सकलानर्थानभिव्यनक्त्येवमियं सुखं जनयन्ती स्वल्पैरेवशब्दैः सकलान् शब्दानाञ्जस्येन प्रकाशयति अन्ये हि ग्रन्था महान्तोऽतिगहनाश्च तैः सहसा शब्दा न प्रकाश्यन्त इत्यवान्तरप्रयोजनमस्याः"[1] ॥ इति।

ग्रन्थेऽस्मिन् आचार्यणां ग्रन्थसंक्षेप एव प्रधानं लक्ष्यम्। अतः प्रक्रियाकौमुद्यामादितोऽन्तपर्यन्तं १५२६ सूत्राणि परित्यज्य २४७० सूत्राण्येव ग्रन्थकारेण व्याख्यातानि। अत्रापि सूत्रपाठस्वरूपे व्याख्याने च काशिकावृत्तेः रूपावतारादीनां प्रभावोऽवलोक्यत एव। अयमेव ग्रन्थः सिद्धान्तकौमुद्या उपजीव्य इति न तिरोहितं विपश्चिताम्।

इत्थं रूपावतार - रूपमाला-प्रक्रियाकौमुद्यादिविषयान् सम्यगालोच्यभट्टोजिदीक्षितमहाभागैः "वैयाकरणसिद्धान्त कौमुदी" इति प्रक्रियापरम्परायाः सर्वोत्कृष्टः चरमो ग्रन्थः प्रणीतः। ग्रन्थोऽस्मिन् काशिकावृत्यादिग्रन्थेषु दर्शितं सूत्रस्वरूपं व्याख्यानादिकं शुद्धमशुद्धं वेत्यादिसर्वं विमृश्य प्रायः सर्वत्रैव महाभाष्यप्रमाणमङ्गीकृत्य विषयप्रतिपादनं विहितं वर्तते.॥ प्रक्रियाकौमुदीवदत्रापि पूर्वोत्तरार्धरूपेण विभाजनं दृश्यते। परं सिद्धान्तकौमुद्यां कानिचित्प्रकरणानि पूर्व प्रक्रियाग्रन्थाद्यपेक्षया परिवर्त्य व्यवस्थापितानि अपरं चात्र रूपावतारादिप्रक्रियाग्रन्थेष्वनन्तर्भूतानाम् उणादि-फिट्सूत्र-लिङ्गानुशासन-गणपाठादीनामन्तर्भावः कृतः।

उत्तरवर्तिभिः दीक्षितादिभिः वैयाकरणैः प्रक्रियाग्रन्थनिर्माणे रूपमालात अपेक्षितं साहाय्यं गृहीतमित्यत्र नास्ति कश्चिदपि संशीतिलेशः। प्रक्रियाक्रमस्य बीजनिर्वापणे धर्मकीर्तेरनन्तरं रूपमालाप्रणेतुरपरं स्थानम्। एकयैव रूपमालाख्य-रचनया तेन बहूपकृतमिदं नव्यव्याकरणजगदिति।

---

१ द्र० प्र० कौ० प्रसादटीका भाग १, पृ० ११

## परिशिष्टम् (क)

# केचन समीक्षणीयाः विषयाः

### र प्रत्याहारः -

रूपमालाकृता "लण्"[१] इतिसूत्रस्थस्याकारस्य "उपदेशेऽजनुनासिक इत्[२]" इत्यनेन इत्संज्ञां स्वीकृत्य तेन सह "हयवरट्" इति सूत्रस्थं रकारमादाय "र" प्रत्याहारः स्वीकृतः। तदुक्तं रूपमालायाम् - "हकारादिष्वकार उच्चारणार्थः। लणमध्ये त्वित्संज्ञकः। "उरणरपरः" इत्यत्र रप्रत्याहारग्रहणाय[३]"। इति। अनेन च रप्रत्याहारेण रलयोर्ग्रहणम्। रूपावतारकृताऽपि लण्सूत्रस्थाकारस्य इत्संज्ञा स्वीकृता। तत्फलभूतः रप्रत्याहारश्चाभ्युपगतः। तदुक्तं रूपावतारे - "अत्रलकारे वर्तमानस्य अकारस्य "हयवरट्" इत्यनेन रेफेण सह "र" इति प्रत्याहारग्रहणं भवति।"[४] प्रक्रियाकौमुदीकारेणाऽपि"लण्मध्ये त्वित्संज्ञकः"इत्युक्त्वा रप्रत्याहारः स्वीकृतः।[५] सिद्धान्तकौमुदीकृ ताऽपि रूपमालावदेव स्फुटमेव रप्रत्याहारोऽभ्युपगतः। यथोक्तं सिद्धान्तकौमुद्याम् - "लण्सूत्रस्थाऽवर्णेन रेफो रलयोः संज्ञा।"[६] प्रक्रियासर्वस्वकृताऽपि "लणित्यस्मिन्नकारोऽनुनासिक इति प्रतिज्ञातः। "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञकस्य तस्याकारस्य हयवरडित्यत्र रेफमात्रेण सहोक्तौ र इति प्रत्याहारः। स च रेफलकारयोर्ग्राहकः।" इत्येवं रूपेण रप्रत्याहारः स्वीकृतः[७]।

एवञ्च रप्रत्याहारविषये समेषामपि प्रक्रियाग्रन्थकाराणां मतैक्यम्। कैयटोऽपि "लपरत्वं वक्ष्यामि" इति भाष्यमनुसृत्य रप्रत्यहारं सम्मन्यते। "उरण् रपरः" इतिसूत्रे रशब्दस्य ल तात्पर्यं व्याख्यास्यामि इति उक्तभाष्यार्थ इति यावत्। रशब्दस्य लतात्पर्यकत्वेन व्याख्यानञ्च रप्रत्याहाररूपमेवेति कैयटेन स्फुटीकृतम्। इत्थञ्च कैयटमतानुसारेण लपरत्वं वक्ष्यामि इति भाष्यं रप्रत्याहाराश्रयणेनैव प्रवृत्तम्।

परन्तु नागेशभट्टः रप्रत्याहारं नाद्रियते। तन्मते "हयवरट्" इत्यादौ हकारादिष्वेव लण्सूत्रेऽप्यकारः उच्चारणार्थक एव न त्वित्संज्ञकः। यदि च लण्सूत्रस्थाकारस्य इत्संज्ञकत्वे

---

१. माहेश्वरसूत्र - ६
२. पा०सू० - १-३-२
३. रु०मा० भागः १, पृ० - ५
४. रूपावतारः (पूर्वार्द्धः), पृ०सं० - ३
५. प्र० कौ० भागः १, पृ० - १३
६. सि० कौ०(संज्ञाप्रकरणम्) सू० सं०- ३
७. प्रक्रियासर्वस्वम् (संज्ञाखण्डः) भागः१, पृ० - ८

तत्फलंभूते रप्रत्याहारे भगवतः पाणिनेः सम्मतिस्स्यात् तदा "अतो लान्तस्य" (७-२-२) इतिसूत्रे सूत्रकारः पृथक् लकारं नोच्चारयेत्, रप्रत्याहारेणैव लकारस्यापि ग्रहणात्। "उरण् रपरः" इति सूत्रविषयकस्य, "तुल्यास्यप्रयत्नं सवर्णम्" इतिसूत्रस्थस्य "लपरत्वं वक्ष्यामी" ति भाष्यस्य तु रपरत्वमिव अपूर्वलपरत्वं विधास्यामीत्येवार्थः। रपरः इत्यस्य स्थाने रलपरः इति पृथगेव अपूर्वलग्रह्णं कर्तव्यमिति यावत्। विस्तरेणैतत् लघुशब्देन्दुशेखरे स्पष्टम्[१]।

अत्र विचार्यमाणे "उरण् रपरः" इत्यत्र लकारग्रहणापेक्षया रप्रत्याहारस्वीकार एव समीचीनः प्रतिभाति। "अतोलान्तस्य" इतिसूत्रे लकारोच्चारणन्तु रप्रत्याहारस्य अनित्यताज्ञापनेन चरितार्थमित्यवगन्तव्यम्। अत एव "रषाभ्यां नो णः समानपदे[२]" "रदाभ्यां निष्ठातो०[३]", इत्यादौ रपदेन न लकारस्य ग्रहणम्। अर्थात् नात्र र इति प्रत्याहारग्रहणमपितु वर्णग्रहणमेव।

**मणीवादौ सन्धिरिष्यते -**

"ईदूदेद् द्विवचनं प्रगृह्यम्[४], इतिसूत्रं व्याख्याय रूपमालाकृता" "मणीवादौ सन्धिरिष्यते" दम्पतीव इति वचनमुपन्यस्तम्। रूपावतारे तु "रोदसीव इत्यादौ स्वरसन्धिसिद्ध्यर्थं ईदादीनां प्रगृहयत्वे मणीवादीनां प्रतिषेधः" इति निषेधवचनमुपन्यस्तम्[५]। तथाहि - "मणीव" इत्यत्र मणी इति द्विवचनान्तं तस्य "इव" इत्यनेन सन्धौ मणीव इति प्रयोगः। अत्र ईदूदेद्द्विवचनं प्रगृह्यम् इत्यनेन प्रगृह्यत्वात् प्रकृति भावः प्राप्नोति, सन्धिश्च न प्राप्नोति। इष्यते तु सन्धिः अतः वचनेनानेन प्रगृह्यसंज्ञा निषिध्यते। काशिकायामपि "ईदीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः "मणीवोष्ट्स्य लम्बेते प्रियौ वत्सतरौ मम। दम्पतीव, जम्पतीव रोदसीत्व।" इति व्याख्यानं दृश्यते[६]। तत्र न्यासकृता उक्तम्" वक्तव्य इति व्याख्येयं इत्यर्थः। तत्रेदं व्याख्यानं वक्ष्यमाणशाकल्यग्रहणमिहोपतिष्ठते सिंहावलोकनन्यायेन। सा च व्यवस्थितविभाषा। तेन मणीवादीनां प्रतिषेधो भविष्यति। मणीवेत्यादयः शब्दाः द्विवचनान्ताः। तत्राऽसतिप्रगृहयत्वे "अकः सवर्णे दीर्घः इत्येकादेशो भवत्येव।"[७]

प्रक्रियाकौमुदीकारेणापि "मणीवादेर्न" इति वृत्तिकाराभिमतो निषेध उक्तः[८]। परन्त्वस्य निषेधस्य भाष्यादावनुपलम्भात् अप्रामणिकोऽयं निषेध इति कैयटः। कैयटमतानुसारेण "मणीवोष्ट्स्य लम्बेते, इति प्रयोगस्य साधुत्वाय इवार्थे वाशब्द एव मणीवा उष्ट्स्य इति छेदः। "मणीवादेर्न" इत्यत्र प्रकाशकृताऽपि नेदं त्रिमुनिमतम्, तथापि प्रयोगदर्शनादुक्तम्।" इत्युक्तम्[९]

---

१. द्र लघुशब्देन्दुशेखरः (संज्ञा प्रकरणम्)
२. पा० सू० ८-२-४२
३. पा० सू० ८-४-१
४. पा० सू० -१-१-१
५. रूपावतरः (पूर्वार्द्धः)
६. काशिका सू०-१-१-१
७. का० वि० पं० (न्यासः) भागः१, पृ० - ६२
८. प्र० कौ० भागः २, पृ० -१२४
९. प्र० कौ० (प्रकाश टीका) भागः २ पृ० - १२७

एवं रूपमालाकार-रूपावतारकार-वृत्तिकारादीनां वचनं मुनित्रयानुक्तत्वाद-प्रमाणम्। अत एव सिद्धांन्तकौमुदीकृता "मणीवोष्ट्रस्य लम्बेते, इत्यादिप्रयोगाणां साधुत्वोप-पादने कैयटोक्तः मार्ग एवानुसृतः। यथोक्तं सिद्धान्तकौमुद्याम्" मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम "इत्यत्र त्विवार्थे वशब्दो वाशब्दो वा बोध्यः"[१]। रूपमालावत् सन्धेरङ्गीकरणं रूपावतारकारादिवत् निषेधवचनन्तु सिद्धान्तकौमुदीकृता नोपन्यस्तम्, मुनित्रयानुक्तत्वात्। अपितु इवार्थकस्य "व"शब्दस्य "वा" शब्दस्य वा आश्रयणेन मणीवादेः साधुत्वं सिद्धान्तकौ-मुदीकृता दर्शितमिति अवगन्तव्यम्।

## "अदसो मात्" इत्यस्यार्थविचारः

रूपमालाकृता "आदसो मात्"[२] इतिसूत्रस्य "अद्विवचनमपीदूदेत्प्रगृह्यसंज्ञं स्यादि"त्यर्थः कृतः। परमदसः मकारात्पर एकारो नैव प्राप्यते। ग्रन्थकारस्येदं व्याख्यानं वृत्तिकारमनुसरति। यथोक्तं काशिकायाम् - "अदसः सम्बन्धी यो मकारस्तस्मात्पर ईदूदेतः प्रगृह्यसंज्ञा भवन्ति।" इति। परं तत्रैकारस्य नास्त्युदाहरणमित्यपि अग्रे समुल्लिखितं वर्तते। इदमेवाभिप्रेत्य सिद्धान्तकौमुदीकृता निष्कर्षतः सूत्रार्थो विहितः। तुदक्तं सिद्धान्तकौमुद्याम् "अस्मात्परावीदूतौ प्रगृह्यौ न स्तः" इति[३]।

अयमाशयः - "अदसो मादि " त्यत्र "ईदूदेद्द्विवचनं प्रगृह्यम् (१-१-११) इत्यतः "ईदूत" इति "प्रगृहयम्" इति चानुवर्तेते। एदिति तु नानुवर्तते अदशब्दावयवमकाराव्यहितो-त्तरस्य एकारस्यानुपलब्धेः। "अदसो मादव्यवहितं यदेदन्तं तत्प्रगृह्यम्" इत्यर्थे "अमुकेऽत्र" इत्यत्र मकारात्परस्य "उके" इत्येदन्तस्य सम्भेवन प्रगृह्यत्वार्थं तु न मादग्रहणेन ईदाद्यन्तं विशेष्यते। किं तर्हि ईदादयो विशेष्यन्ते। मात्परे ये ईदादय इति भाष्यविरोधात्।

## कस्स्थायी -

रूपमालाकृता "कुप्वोक पौच" इतिसूत्रस्य व्याख्याने "कुपुसम्बन्धिनि खरि जिह्वा-मूलीपयोपध्मानीयौ स्याताम्। कपावुच्चारणार्थौ। पक्षे विसर्ग एव। कः कामीत्यादि" इत्यु-क्तम्। अत्र चाद् विसर्ग एवेति काशिकायाः चाद् विसर्गश्चेत्यस्योक्तानुवाद एव[४]। अत्रैव "कस्कामी, कस्खलः कस्स्थायी, वल्यास्फलम्" इत्युदाहरणेषु सकारमुल्लिखितम् तदसङ्गतमे-व। यतो ह्यत्र चकाराद् विसर्ग एव भवति, न तु सकारः। सिद्धान्तकौमुद्यामपि "चाद्विसर्गः" इत्येवोक्तम्[५]। अपि चोक्तेषु उदाहरणेषु "कस्स्थायी" इत्यत्र तूदाहरणत्वमेव न सम्भवति। यतोऽत्र जिह्वामूलीयोपध्यमानीययोः प्राप्तिरेव नास्ति। ग्रन्थकारस्यात्र प्रमादः परिलक्ष्यते। यद्यत्र "कः पायी" इति पाठोऽङ्गीकुर्याम, तदोपध्मानीयविधायकोक्तसूत्रस्योदाहरणत्वं निर्बाधमिति।

---

१. सि० कौ० (प्रकृतिभावप्रकरणम्) सू० - १००
२. पा० सू०सं० - १-१-१२
३. सि० कौ० सू० - १०१
४. काशिका सू० - (८-३-३७)
५. सि० कौ० सू० - १४२

## शुक्लानाम् -

शुक्लशब्दादामि "ह्रस्वनद्यापो नुट्"[१], इत्यनेन नुडागमेऽनुबन्धलोपे "शुक्ल नाम्" इत्यत्र रूपमालाकृता "सुपि चे"ति[२] दीर्घो विहितः। तदिदं दीर्घकरणं सङ्गतं नास्ति। यथा शुचीनामित्यत्र रूपमालाकृता "नामि" (६-४-३) इत्यनेन दीर्घः कृतः, तथैवात्रापि "नामी" त्यनेनैव दीर्घो भविष्यति। एतत्सर्वं विचार्य दीक्षितमहाभागेन रामाणामितिप्रयोगसाधुत्ववसरे सिद्धान्तकौमुद्यामुक्तम् "सुपि चे"ति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते, सन्निपातपरिभाषा-विरोधात्। "नामी" इत्यनेन त्वारम्भसमार्थ्यात्परिभाषा बाध्यते।"[३]

अयमाशयः - यद्यत्र नामीति दीर्घो न स्यात्तदा "नामि" इति सूत्रारम्भः पाणिनेर्व्यर्थ एव स्यात्। तस्मान्निरवकाशत्वान्नामीति दीर्घः सन्निपातपरिभाषां बाधित्वा प्रवर्तत इति भावः। "सुपि च" इति दीर्घस्तु यत्र सन्निपातपरिभाषाः नावसरः रामाभ्यामित्यादौ चरितार्थ इति न सन्निपातपरिभाषां बाधितुं शक्तः बाधप्रयोजकनिरवकाशत्वहतोरभावादित्यादि तत्वबोधिन्यां विस्तरेण प्रपञ्चितमिति[४]।

## ब्रह्महत्या

रूपमालायां "क्षुम्नादिषु च" (८-४-३९) इतिसूत्रोदाहरणेषु "ब्रह्महत्या" इत्युदाहरणस्य प्रयोजनं चिन्त्यमेवास्ति। यतो हि - "ब्रह्मघ्नः,इत्यत्र णत्वाभावप्रदर्शनाय रूपमालाकृता "क्षुभ्नादिषु च" इत्यस्य पाठो विहितः। अत्रेदमप्युल्लिखितं यत् "लुप्ताकारस्य हन्तेस्तत्र पाठाण्णत्वाभावः इति। परं पाणिनिमुनिप्रणीते क्षुभ्नादिगणपाठे हन्तेः पाठोऽपि नास्ति, तत्र क्षुभ्नादेराकृतिगणत्वात् "ब्रह्मघ्नः" इत्यादिषु णत्वाभावो सेत्स्यति। परन्तु "ब्रह्महत्या" इत्युदाहरणमत्र किमर्थमिति विचार्यमाणे ग्रन्थकारस्य प्रमाद एव प्रतीयते। अथवा "ब्रह्महत्या" इतिप्रयोगप्रदर्शनस्यायमाशयः यत् हन्धातोः नकारस्य स्थाने णकारेणैव तकारोऽपि भवति। अस्य प्रयोगस्य साधुत्वार्थं भगवता पाणिनिना"हनस्तच (३-१-१०८) इति पृथगेव सूत्रं प्रणीतमिति।

## एनपा द्वितीया -

रूपमालायाम् - एनपा द्वितीया " (२-३-३१) इतिसूत्रम्- "दक्षिणोत्तराधरेभ्यः सप्तमीप्रथमान्तेभ्य एनप्प्रत्ययोऽव्ययसंज्ञस्तेन योगे द्वितीया स्यात्" इत्येवं रीत्या व्याख्याय "षष्ठ्यपीष्यते" इत्युक्तं ग्रन्थकृता। "दक्षिणेन ग्रामं ग्रामस्य वा" इत्याद्युदाहरणं दर्शितम्। परन्तु द्वितीयायां बाधितायां सत्यां एनबन्तेन योगे षष्ठी कथं भवती त्यत्रोपायः न दर्शितः। रूपावतारेऽपि रूपमालावदेव "षष्ठ्यपीष्यते" इतिवचनमुपलभ्यते[५]। प्रक्रियाकौमुदीकृताऽपि -

---

१. पा० सू० - ७-१-५४

२. पा०सू० ७-३-१०२

३. सि० कौ० (अजन्तपुल्लिंगप्रकरणम्), सू० - २०९

४. द्र० सि० कौ० (तत्वबोधिनी), सू० २०९ पृ० १७५-१७७

५. रूपावतार (पूर्वार्द्ध) कारकवतारः, पृ० - १५८

"एनबन्तेन योगे षष्ठी स्वीकृता। यथोक्तं प्रक्रियाकौमुद्याम् "एनपायोगे द्वितीया स्यात् षष्ठी च।" इति[१]। परन्तु तेनाऽपि षष्ठी कथमिति न स्पष्टीकृतम्।

परं सिद्धान्तकौमदीकृता "एनबन्तेन योगे षष्ठीद्वितीये" इति स्वीकृत्य षष्ठया" साधुत्वाय स्फुटमुपायो दर्शितः। यथोक्तं सिद्धान्तकौमुद्याम् - "एनबन्तेन योगे द्वितीया स्यात्, एनपेति योगविभागात् षष्ठ्यपि।"[२] अस्यायशयश्चेत्थम् - उक्तसूत्रे एनपा इति योगो विभज्यते। तत्र च "षष्ठ्यतसर्थप्रत्ययेन (२-३-३०) इत्यतः षष्ठी अनुवर्तते। ततश्च एनबन्तेन योगे षष्ठी भवतीति तदर्थः ततो द्वितीयेतियोगः, तत्र एनपा इति सम्बध्यते। एनबन्तेन योगे द्वितीया भवतीति तदर्थः। इत्थमेनबन्तेन योगे षष्ठीद्वितीये उभेऽपि सिद्धयतः। यद्यपि रूपमालाकार-रूपावतारकार-प्रक्रियाकौमुदीकारैः षष्ठ्या साधनाय योगविभागरूपोपायो न दर्शितः। तथापि तैरपि योगविभागेनैव षष्ठी साधनीया। प्रकारान्तरेण षष्ठीसाधनस्याशक्यत्वात्। नहि "एनपा द्वितीये" त्येकयोगे षष्ठी विधातुं शक्यते।

## यङ्लुगन्तस्य छान्दसत्वम् -

यङ्लुगन्तप्रक्रिया वैदिकी लौकिकी वेति विषये केषाञ्चिदाचार्याणां मतानि रूपमालाकृता दर्शितानि। यथा चोक्तं रूपमालायाम् - "यङ्लुगन्तं छान्दसमित्येके। नैवमित्यपरे। भाषामात्रविषयेऽपि चान्द्रे प्रोक्तत्वादिति[३] काशिकाकृद्भ्यां जयादित्यवामनाभ्यां छन्दसि भाषायाञ्च यङ्लुग्भवतीति स्वीकृतम्। तत्र हि "यङोऽचि च" (२-४-७४) इतिसूत्रव्याख्यावसरे "चकारेण बहुलं छन्दसी" त्यतः बहुलग्रहणमनुकृष्यते, न तु छन्दसीति, तेन छन्दसि भाषायां च यङोलुग् भवती" त्युक्तम्[४]।

प्रक्रियाप्रकाशकृताऽपि उभयत्रैव यङ्लुक् भवतीति स्वीकृतम्। यथा चोक्तं प्रक्रियाप्रकाशे "महाभाष्यकारस्येदमभिमतं छान्दसो यङ्लुक्। तथा शिष्टप्रयोगानुसारात् भाषायामपि यङ्लुगस्तीत्याचार्याणामभिप्रायः"[५]। सिद्धान्तकौमुद्यामपि बोभवीतीति प्रयोगसाधनावसरे "भूसुवो०" इति गुणनिषेधो यङ्लुकिभाषायां न - 'बोभूतुतेतिक्ते' इति छन्दसि निपातनात्। अत एव यङ्लुग् भाषायामपि सिद्धः।" इत्युक्तम्[६]। एतत्सर्वं बालमनोरमायां तत्वबोधिन्यां च सुस्पष्टमिति। एतेन ज्ञायते यल्लोके वेदे चोभयत्र यङ्लुगन्तस्य प्रयोगो भवतीति।

---

१. प्र० कौ० (कारकप्रकरणम्), पृ० - ६४

२. सि० कौ० ( कारकप्रकरणम्), सू० - ६१०

३. रू० मा० भाग : ३, पृ० ३२४

४. काशिका सू० २-४-७४

५. प्र० कौ० ( प्रकाशव्याख्या ) भाग :३ पृ० ३२४

६. सि० कौ० ( यङ्लुकप्रकरणम् ) सू० - २६५१

# परिशिष्टम् - (ख)

## सूत्राणां पाठान्तरसङ्ग्रहः

महर्षेः पाणिनेरष्टाध्याय्यां कतिसूत्राणि सन्तीत्यस्मिन् विषये भारतीयानां पाश्चात्यानाञ्च विपश्चितां मतवैभिन्यं वर्तते। एतन्मया पूर्वमेवाभिहितं यत् काशिका-विवरणपञ्जिकायामुद्धृतं श्लोकमाधृत्याष्टाध्याय्याः "अथ शब्दानुशासनम् इति चतुर्दशप्रत्याहारसूत्रैश्च सह सर्वा सूत्रसंख्या ३९९६ वर्तते[१]। परं स्वरसिद्धान्तचन्द्रिकाकारमतेनेयं सूत्रसंख्या ३९९५ भवति[२]। डा॰ गोल्डस्टूकरमहोदयेन अष्टाध्याय्यां त्रीणि चत्वारि वा सूत्राणि पाणिन्युत्तरवर्तिकाले प्रक्षिप्तानीति स्वीकृतम्[३]। डा॰ बेल्वरकरमहोदयेन स्वकीये "सिस्टम्स् ऑफ संस्कृत ग्रामर" इत्याख्ये ग्रन्थे लिखितम् यत् पञ्चसूत्राण्यष्टाध्याय्यां प्रक्षिप्तानि सन्ति[४]। परं डॉ॰ कीलहार्नमहोदयेन महाभाष्य-काशिकावृत्तिस्थसूत्रपाठस्य साम्यप्रदर्शनकालेऽष्टाध्याय्याः ५८ सूत्रेषु पाठभेदोऽपि दर्शितः[५]। तेन स्वकीये शोधपत्रे ५/१/६६, ५/३/१०३, ६/३/९२, ६/३/१०५, ७/१/४३ सूत्राणि महाभाष्येऽनुपलब्धत्वात् चर्चार्थं नाङ्गीकृतानि। यतो हि महाभाष्ये यानि पाणिनीयसूत्राणि प्राप्तानि, तेषामेव काशिकावृत्या सह पाठभेदः प्रधान्येन कृतः।

डॉ॰ रामशंकरभट्टाचार्येण[६] यत्सूत्राणां पाठभेदसङ्कलनं कृतं तस्य सर्वा सूत्रसंख्या १८५ वर्तते। यद्यपि डॉ॰ भट्टाचार्येणेदं सङ्कलनं बहुभिः प्रमाणैः प्रस्तुतं तथापि तत्र कानिचिदवश्यान्तर्भाव्याणां सूत्राणां सङ्कलनं नास्ति।

हिन्दीटीकोपेतायाः काशिकायाः प्रस्तावनायां श्रीनारायणमिश्रमहाभागेन भाष्यकाशिकासिद्धान्तकौमुदीप्रमाणेन अष्टाध्याय्यः ५२ सूत्राणां पाठभेदः सङ्कलितः[७]।

यद्यपि प्रदीपे कैयटेन पदमञ्जर्यां हरदत्तमिश्रेण, सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन, उद्द्योते लघुशब्देन्दुशेखरे च नागोजिभट्टेन, तत्वबोधिन्यां ज्ञानेन्द्रसरस्वतीमहाभागेन, बाल-

---

१. द्र॰ न्यासः (सं॰ श्रीशचन्द्रचक्रवर्ती) भाग १ - प्रस्तावना पृ॰४ -

त्रीणिसूत्रसहस्राणि तथा नवशतानि च।

षण्णवतिञ्च सूत्राणां पाणिनिः कृतवान् स्वयम्॥

२. स्व॰ सि॰च॰श्लोक १५ -

चतुः सहस्री सूत्राणां पञ्चसूत्रविवर्जिता।

अष्टाध्यायी पाणिनीया सूत्रैर्महेश्वरैः सह॥

३. Goldstucker -panini' p. 121

४. S.K.BELVALKAR - "systems of Sanskrit Grammar" p.19

५. F.KEELHORN - ( Notes on the Mahabhasya ) p. 184

६. द्र॰ पा॰ व्या॰ अनु॰ परिच्छेद : २३, पृ॰ ३६६-३९६

७. का॰ व॰ (हिन्दीटीका) संपा॰श्रीनारायण मिश्रः भाग - १ प्रस्तावना, पृ॰ ४४-५८

मनोरमायां च वासुदेव दीक्षितेन महाभाष्यस्य प्रामाण्यमङ्गीकृत्य सूत्रेषु केषाञ्चित्पदानां प्रक्षिप्तत्वं प्रतिपादितम्। तथापि प्रायेण रूपमालायां विमलसरस्वतिना रूपावतारे धर्मकीर्तिना, प्रक्रियाकौमुद्यां च रामचन्द्राचार्येण काशिकावृत्तिमनुसृत्य सूत्रस्वरूपमङ्गीकृतम्। अत एवात्र रूपमालायाः सूत्रपाठे महाभाष्यकाशिकावृत्तिसिद्धान्तकौमुद्यादिग्रन्थप्रदर्शित सूत्रपाठे कियान्भेदः कियन्ति वार्तिकानि वार्तिकांशानि च तत्र प्रक्षिप्तानि सन्तीत्येतत्सर्वमधस्ताद् यथाक्रमं प्रस्तूयते -

| | | | |
|---|---|---|---|
| १- | (रू० मा०) इन्द्रे च नित्यम् | - | ६-१-१२४ |
| | म० भा० सू० | - | इन्द्रे च ६-१-१२४ |
| | सि० कौ० सू० | - | इन्द्रे च/८९ |
| | पदमञ्जरी | - | इन्द्रे च। |
| | तत्वबोधिनी | - | इन्द्रे च आरम्भसामर्थ्यान्नित्यमिदम्॥ |
| २- | (रू० मा०) प्लुतप्रगृह्या अचि नित्यम् | | ६/१/१२५ |
| | काशि० सू० | - | प्लुतप्रगृह्या अचि। ६/१/१२५ |
| | सि० कौ० | - | प्लुप्तप्रगृह्या अचि नित्यम्/९०। |
| | पदमञ्जरी | - | प्लुप्तप्रगृह्या अचि नित्यम्॥ |
| ३- | (रू० मा०) अद्डुतरादिभ्यः पञ्चभ्यः | | ७/१/१२५ |
| | का० वृ० | - | अद्डुतरादिभ्यः पञ्चभ्यः |
| | म० भा० सू० | - | अद्डुतरादिभ्यः पञ्चभ्यः |
| | सि० कौ० सू० | - | अद्डुतरादिभ्यः पञ्चभ्यः॥ ३१५॥ |
| | न्यासः | - | द्विडकारोऽयं निर्देशः डतरसम्बन्धी द्वितीयस्त्वादेशसम्बन्धी। |
| ४- | (रू० मा०) | - | टिड्ढाणञ्द्वयसज्दध्नञ्मात्रच्तयप्ठक्ठञ् कञ्क्वरप्ख्यूनाम्॥१४/१/१५ का० वृ० सू० - डिड्ढाणञ्द्वयसज्दध्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप् ख्युनाम्। ४/१/१५॥ |
| | वा० | - | नञ्स्नञीकक् ख्युंस्तरुणतलुनानामुपसंख्यानम्। |
| | प्र० कौ० | - | टिड्ढाणञ——क्वरख्युनाम् |
| | म० भा० सू० | - | टिडढाणञ्द्वयसज्दध्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। |
| | सि० कौ० सू० | - | टिड्ढाणञ्————कञ्क्वरपः॥ ४७०॥ |
| | पदमञ्जरी | - | भाष्ये तु "कञ्क्वरपः" इत्येतावत्सूत्रम्, ख्युनः पाठोऽनार्ष इति तस्याप्युपसंख्यानमेव कृतम्। |
| ५- | (रू० मा०) इषुगमियमां छः ७/३/७७ | | |
| | का० वृ० सू० | - | इषुगमियमां छः ७/३/७७ |

| | | |
|---|---|---|
| वृत्तौ | - | य इषिमुदितं नाधीयते तेऽचीत्यनुवर्तयन्ति । |
| म० भा० सू० | - | इषुगमियमां छः ॥ २४०० ॥ |
| कैयटः | - | इषुगमीति पाठोऽनार्षः । |
| ६- (रू० मा०) | - | लक्षारोचनाशकलकर्दमाट्ठक् ४/२/२ |
| का० वृ० सू० | - | लक्षारोचनाशकलकर्दमाट्ठक् ४/२/२ |
| म० भा० सू० | - | लक्षारोचनाट्ठक् ४/२/२ |
| वा० | - | ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् । |
| सि० कौ० सू० | - | लक्षारोचनाट्ठक् ॥१२०३ ॥ |
| वा० | - | शकलकर्दमाभ्यामुपसंख्यानम् |
| पदमञ्जरी | - | शकलकर्दमयोर्वार्तिके दर्शनात् सूत्रे प्रक्षेपः । |

७- (रू० मा०) सास्मिन् पौर्णमासीति ४/२/२१

का० सू० -

सास्मिन् पौर्णमासीति संज्ञायाम् ४/२/२१

| | | |
|---|---|---|
| म० भा० सू० | - | सास्मिन् पौर्णमासीति । ४/२/२१ |
| म० भा० सू० | - | सास्मिन्ग्रहणे पौर्णमासीत्यत्र संज्ञाग्रहणम् । |
| सि० कौ० सू० | - | सास्मिन् पौर्णमासीति ॥ १२२३ ॥ |
| " " " | - | इतिशब्दात्संज्ञायामिति लभ्यते । |
| कैयटः | - | संज्ञाग्रहणं सूत्रेऽनार्षमितिवार्तिकमारब्धम् । |

८- (रू० मा०) ग्रामजनबन्धुसहायेभ्यस्तल् ४/२/४३

| | | |
|---|---|---|
| वा० | - | गजाच्चेति |
| का० वृ० सू० | - | ग्रामजनबन्धुसहायेभ्यस्तल् ४/२/४३ |
| " " वा० | - | गजाच्चेति वक्तव्यम् । |
| म० भा० सू० | - | ग्रामजनबन्धुभ्यस्तल् ४/२/४३ |
| " " वा० | - | गजसहायाभ्यां चेति वक्तव्यम् |
| सि० कौ० सू० | - | ग्रामजनबन्धुभ्यस्तल् ॥ १२५१ ॥ |
| " " वा० | - | गजसहायाभ्यां चेति वक्तव्यम् । |
| तत्वबोधिनी | - | वार्तिककृता तु वार्तिकस्थसहायशब्दोऽपि सूत्रे प्रक्षिप्तः । |

९- (रू० मा०) दण्डादिभ्यो यः ५/१/६६

| | | |
|---|---|---|
| का० वृ० सू० | - | दण्डादिभ्यो यः ५/१/६६ |
| म० भा० | | (सूत्रमिदं नास्ति) |
| सि० कौ० सू० | - | दण्डादिभ्यो यत् ॥ १/७३१ ॥ |

| | | |
|---|---|---|
| पदमञ्जरी | - | इह "दण्डादिभ्यः"इत्येतावदेव सूत्रम्। अनन्तरश्च यत्प्रत्ययो विधीयते। |

१०- (रू० मा०) प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ५/२/१०१

| | | |
|---|---|---|
| म० भा० सू० | - | प्रज्ञाश्रद्धार्चाभ्यो णः ५/२/१०१ |
| वा० " " | - | वृत्तेश्च |
| का० सू० | - | प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ५/२/१०१ |
| सि० का० सू० | - | प्रज्ञाश्रद्धार्चाभ्योणः ॥ १९०८ ॥ |
| " " वा० | - | वृत्तेश्च |
| पदमञ्जरी | - | सूत्रे वृत्तिशब्दो वार्तिके दर्शनात् प्रक्षिप्तः। |

# परिशिष्टम् - (ग)

## रूपमाला अजन्तादिमालासु व्याख्याताः शब्दाः

**अथाजन्तमाला**

| | | |
|---|---|---|
| १- अकारान्ता | - | शुक्ल-गौर-सुरापशब्दाः। |
| २- आकारान्तौ | - | शुक्ला, सोमपा। |
| ३- इकारान्तः | - | शुचि। |
| ४- ईकारान्ताः | - | शैवी-गौरी-सुरापी-सुश्री-सेनानी-सुधी प्रधीप्रभृतयः |
| ५- उकारान्तौ | - | मृदु चित्रगुशब्दौ। |
| ६- ऊकारान्तः | - | खलपूः। |
| ७- ऋकारान्तौ | - | होतृ - दातृशब्दौ। |
| ८- ओकारान्तः | - | सुद्यो। |
| ९- ऐकारान्तौ | - | रैः, सुरैः। |
| १०- औकारान्तः | - | सुनौः। |

**हलन्तमाला**

| | | |
|---|---|---|
| १- हकारान्ताः | - | मधुलिह् - गोदुह्-मित्रदुह् - भारवाह्प्रभृतयः। |
| २- वकारान्ताः | - | सुदिव्। |
| ३- नकारान्ताः | - | "बहुराजन्-सुपर्वन्-सुकर्मन्-पारदृश्वन् -ब्रह्महन्"इत्यादयः। |
| ४- छकारान्ताः | - | तत्वप्रच्छ्। |
| ५- यकारान्ताः | - | अग्निमथ्। |
| ६- चकारान्ताः | - | जलमुच्-सध्रयञ्च्-तिर्यञ्च्-प्रत्यञ्च् प्रभृतयः। |
| ७- तकारान्ताः | - | शुभकृत्-गोमत्-महत्-यात्-नुदत्-भवत् "दीव्यत्-कुर्वत्-जक्षत्-ददत्-जागृत्-दरिद्रत्-प्रभृतयः। |
| ८- शकारान्ताः | - | तत्वदृश्-तादृश् इत्यादयः। |
| ९- षकारान्तौ | - | द्विष्, सजुष्। |
| १०- सकारान्ताः | - | सुवचस्, लघीयस्, उपसेदिवस्, शुश्रवस्, विद्वस्। |

## सर्वनाममाला

| | | |
|---|---|---|
| १- अकारान्ताः | - | सर्व-नेम-उभय-पूर्व-त्व-कतर-कतम-इतर-अन्य-अन्यतर-वर्णा-श्रमेतरप्रभृतयः। |
| २- आकारान्तौ | - | सर्वा, द्वितीया। |
| ३- ईकारान्तः | - | उभयी। |
| ४- नकारान्ताः | - | तत्। |
| ५- दकारान्ताः | - | त्यद्, एतद, युष्मद्, अस्मद्। |
| ६- मकारान्तौ | - | किम्, इदम्। |
| ७- सकारान्तः | - | अदस्। |

## संख्यामाला

| | | |
|---|---|---|
| १- इकारान्ताः | - | त्रि-विंशति-नवति-कोटि-कतिप्रभृतयः। |
| २- रकारान्तः | - | चतुर्। |
| ३- नकारान्तौ | - | पञ्चन्, अष्टन्। |
| ४- षकारान्तः | - | षष्। |

## नियतलिङ्गमाला

### पुल्लिङ्गाः -

| | | |
|---|---|---|
| १- इकारान्तौ | - | सखिपतिशब्दौ। |
| २- उकारान्तः | - | क्रोष्टुः। |
| ३- ऊकारान्तः | - | वर्षाभूः। |
| ४- ॠकारान्तः | - | नृशब्दः। |
| ५- हकारान्तौ | - | अनडुह्, तुरासाह्। |
| ६- नकारान्ताः | - | अर्वन्, मघवन्, श्वन्, युवन्, पथिन्, ॠभुक्षिन्। |
| ७- सकारान्ताः | - | उशनस्, पुरुदशंस्, अनेहस, पुमस्। |

### स्त्रीलिङ्गाः

| | | |
|---|---|---|
| १- आकारान्तः | - | जरा। |
| २- इकारान्तौः | - | बुद्धिः। |
| ३- ईकारान्ताः | - | "श्री-धी-स्त्री-लक्ष्मी-अवी-तरी-तन्त्री-इत यादयः |
| ४- उकरान्त | - | धेनुः। |
| ५- ऊकारान्तौ | - | भ्रू, पुनर्भूः। |
| ६- ॠकारान्त | - | स्वसृ। |
| ७- हकारान्तः | - | उपानह्। |

| | | |
|---|---|---|
| ८- पकारान्तः | - | अप् । |
| ९- पकारान्तः | - | आशिप् । |

**नपुंसकलिङ्गाः**

| | | |
|---|---|---|
| १- इकारान्तौ | - | वारि, अस्थि । |
| २- उकारान्तः | - | मधु । |
| ३- नकारान्तः | - | अहन् । |
| ४- पकारान्तौ | - | हविप्, धनुप् । |

# प्रबन्धउदाहृतानां ग्रन्थानां सूची

## (क) संस्कृतमूलग्रन्थाः


१- अमरकोषः (अमरसिंह) प्रभाव्याख्यासमलङ्कृतः, वाराणसी (१९६३)

२- अष्टाध्यायीसूत्रपाठः (पाणिनिः) संपा - वाराणसी (१९७६)

३- अष्टाध्यायीभाष्यम् (दयानन्दसरस्वती) भागौ १,२ वैदिक पुस्तकालयः अजमेर (वैक्रमाशब्दः १०१८)

४- कातन्त्रम् (शर्ववर्मा) दुर्गसिंहप्रणीतटीकोपेतम्, संपा, जे० एगलिङ्गः कलकत्ता (१९७८)

५- काशिका (वामनजयादित्यौ) प्रकाशहिंन्दी व्याख्योपेता, वाराणसी (१९६९)

६- काशिकाविवरणपञ्जिका (न्यासः) जिनेन्द्रबुद्धिकृता भागाः १,२,३ दि वरेन्द्र रिसर्च सोसाइटी राजशाही बंगला १९१३,१९१९

७- काशिका - पदमञ्जरी (हरदत्तः) भागौ १,२ संस्कृत परिषद्, उस्मानिया विश्वविद्यालयः हैदराबाद (१९८१)

८- काव्यमीमांसा (राजशेखरः) सम्पा० डॉ० गङ्गासागरराम, विद्याभवन, वाराणसी।

९- क्षीरतरङ्गिणी (क्षीरस्वामी) संपा० - युधिष्ठिरमीमांसक, अमृतसर (२०१४ वि०)

१०- गोपथब्राह्मणम् - सम्पा० राजेन्द्रलालमित्रोहरचन्द्रविद्याभूषणश्च कलकत्ता (१९७२)

११- चान्द्रव्याकरणम् - (चन्द्रगोमी) भागौ १,२ सम्पा० - क्षितीशचन्द्रः डेक्कन कालेज पूना (१९५३-१९६३)

१२- दुर्घटवृत्तिः (शरणदेवः) सम्पा० - टी० गणपतिशास्त्री त्रिवेन्द्रम् (१९०९)

१३- निरुक्तम् (यास्कः) सम्पा० - डॉ० कपिलदेवशास्त्री, साहित्यभंडार मेरठ (१९७५)

१४- न्यायसिद्धान्तमुक्तावली (विश्वनाथः) सं० हरिरामशुक्लः, आफिस वाराणसी (१९५१)

१५- परमलघुमञ्जूषा (नागेशभट्टः) वाराणसी १९८१

१६- परिभाषेन्द्रशेखरः (नागेशभट्टः) सं० - श्रीनारायण मिश्र, वाराणसी (१९८१)

परिभाषेन्दुशेखरः (नागेशभट्टः) जया टीका संपा० - उमेशमिश्रः दि इलाहबाद लॉ जर्नल प्रेस, इलाहबाद - (१९१४)

१७- प्रक्रियाकौमुदी (रामचन्द्रः) प्रकाशव्याख्योपेता सं०-पं० मुरलीधरमिश्रः (१,२,३ भागाः) सं० सं० विश्वविद्यालयःवाराणसी (१९७७,१९८०)

प्रक्रियाकौमुदी-प्रसादटीकोपेता, सं० -के० पी० त्रिवेदी (पूना १९२५)

१८- प्रक्रियासर्वस्वम् (नारायणभट्टः) भागौ १,२, सं० साम्बशिवशास्त्री केरलविश्वविद्यालयः त्रिवेन्द्रम् (१९७३)

१९- प्रबोध चन्द्रोदयः (श्रीकृष्णमिश्रः), वाराणसी

२०- प्रौढमनोरमा - शब्दरत्नादिटीकोपेता - सम्पा० गोपालशास्त्री नेने चौखम्बा सं० सी० आफिस वाराणसी (१९३९)

२१- भाषावृत्तिः (पुरुषोत्तमदेवः) रत्नापब्लिकेशन्स वाराणसी (१९७१)

२२- मुग्धबोधव्याकरणम् (बोपदेवः) सम्पा० पं० जीवानन्दविद्यासागर-भटटाचार्य कलकत्ता (१००२)

२३- मध्यसिद्धान्तकौमुदी (वरदराजाचार्यः) वाराणसी

२४- रघुवंशम् - (कालिदासः) द्र० - कालिदासग्रन्थावली सं० -डा० रेवाप्रसादद्विवेदः वाराणसी

२५- रूपमाला (विमलसरस्वती) संपा० -मुरलीधरमिश्रः वाराणसी (१९७०)

२६- रूपमाला (विमलसरस्वती) १-४ भागाः हिन्दीव्याख्योपेता, व्याख्याकारः पं० केशवदेवपाण्डेय, वाराणसी

२७- रूपावतारः (धर्मकीर्ति) भाग-१ सम्पा० -एम० रङ्गाचार्यः, जी० ए० नाटेसन एण्ड कम्पनी मद्रास (१९६०)

२८- रूपावतारः (भाग-२) दि ब्रेंग्लोर प्रेस लेक व्यू मैसूर रोड बेंग्लोर (१९६०)

२९- लघुशब्देन्दुशेखरः (नागेशः) नित्यानन्दपर्वतीयकृतटिपणसहितः, वाराणसी (१९५४)

३०- लघुसिद्धान्तकौमुदी (वरदराजाचार्यः) गीताप्रेस गोरखपुर (२०४१)

३१- वाक्यपदीयम् (भर्तृहरिः) ब्रह्मकाण्डम्,सं० -रामगोविन्दशुक्लः वाराणसी (१९७५)

३२- वाल्मीकिरामायणम् (भागौ १,२) गीताप्रेस गोरखपुर (२०४० वि०)

३३- वैयाकरणभूषणसारः (कौण्डभट्टः) प्रभादर्पणव्याख्याद्वयोपेतः, वाराणसी (१९६९)

३४- वैयाकरणसिद्धान्तलघुमञ्जूषा (नागेशः) सभापतिशर्मोपाध्यायः, वाराणसी (१९७३)

३५- वैयाकरणसिद्धान्तकौमुदी (भट्टोजिदीक्षितः) बालमनोरमा-तत्वबोधिनीसंहिता (भागाः १-४) सं० -गिरिधरशर्माचतुर्वेदः परमेश्वरानन्द शर्माच, वाराणसी (१९६०)

३६- व्याकरणमहाभाष्यम् (पतञ्जलिः) प्रदीप-उद्द्योतसहितम् भागः १-५, हरियाणा-साहित्य-संस्थानम् गुरुकुल झज्जर (१९६२)

३७- व्याकरणमहाभाष्यम् (हिन्दीटीकापेतम्) आ० मधुसूदन मिश्रः वाराणसी (१९६७)

३८- व्याकरणमहाभाष्यम्,भागौ १,२ सम्पा० एफ० कीलहार्न प्राच्यविद्यासंशोधन मन्दिरम् पूना (१९६२,६५)

३९- व्याकरणमिताक्षरा (अन्नंभट्टः) सम्पा० -जगन्नाथस्वामी, वाराणसी (१९०६)

४०- शब्दाकौस्तुभः (भट्टोजिदीक्षितः) भागौ १,२ सं०-गोपालशास्त्री नेने वाराणसी (१९३३)

४१- शिक्षासङ्ग्रहः - ,वाराणसी (१९८९)

४२- शिशुपालबधम् (१-२) सर्गौ,माघप्रणीतम् सं० जनार्दशास्त्री वाराणसी (१९६८)

४३- श्रीमद्भगवद्गीता (मूलमात्रम्) गीताप्रेस गोरखपुर (२०४१ वि०)

४४- श्रीमद्भागवतम् (मूलमात्रम्) गीताप्रेस गोरखपुर (२०४१ वि०)

४५- सरस्वतीकाण्ठाभरणम् भोजदेव (सं० डा० कामेश्वरनाथ मिश्रः ,वाराणसी) १९७६

४६- सरस्वतीकण्ठाभरणम् (भोजदेवः) व्या० भागः सं०-वी०ए०रामस्वामी त्रिवेन्द्रम् (१९३८)

४७- स्वरसिद्धान्तचन्द्रिका - संपा० के० ए० एस० शास्त्री मद्रास (१९३६)

४८- हेमशब्दानुशासनम् (हेमसूरीविरचितम्)


## (ख) अर्वाचीनग्रन्थाः शोधपत्राणि च


४९- इत्सिंग की भारतयात्रा - दिल्ली

५०- तुलनात्मकभाषाविज्ञान - डॉ० मङ्गलदेव शास्त्री

५१- पाणिनीय व्याकरण का अनुशीलन - डॉ० रामशंकर भट्टाचार्य,वाराणसी ।

५२- पाणिनिकालीन भारतवर्ष-डा० वासुदेवशरण अग्रवाल „वाराणसी (२०१२ वि०)

५३- प्रक्रियाकौमुदीविमर्शः (डा० आद्याप्रसादमिश्रः) वाराणसी (१९६६)

५४- प्रक्रियासर्वस्वसमीक्षा - आशारामदासः,वाराणसी

५५- व्याकरण-वार्तिक,एकअध्ययन (डा० वेदपति मिश्रः) वाराणसी (१९७०)

५६- व्याकरणशास्त्र का इतिहास भाग १,२ (पं० युधिष्ठिरमीमांसक) अजमेर (सं० २००७, २०१९)

५७- व्याकरणशीस्त्रेतिहासः - डा० ब्रह्मानन्द त्रिपाठी वाराणसी (१९७८)

५८- वार्तिक का स्वरूप-डा० रामसुरेश त्रिपाठी अभिनवभारती वर्ष-२ (१९६१) अलीगढविश्वविद्यालय

५९- श्लोकवार्तिक तथा अन्यवार्तिक-डा० त्रिपाठी प्राच्य प्रज्ञा वर्ष-२ (अलीगढ मु० विश्व-विद्यालय) १९६८

६०- ह्वेन सांग (भाग-१) हिन्दी संस्करण

६१- BEBAR-"History of Sanskrit literature"

६२- ALI S.K."An Introduction to Siddhant Kaumudi" PAIOC (१०६९)

६३- BELVALKAR S.K. "Systems of Sanskrit Grammars" Poona १९१५

६४- BURNELL A.C."Andra School of Sanskrit Grammarsians"

६५- COLBROOKE - "Miscellaeneous Essays" VI-२

६६- CHATURVEDI S.P. ३/४ "Notes on a vartika and its misplaced occurrance in the Mahabhasya" Poona १९४१

६७- GOLDSTUCKER "Panini His place in Sanskrit Literature" London १९६१

६८- KANE P.V. "History of Sanskrit Poetics" Varansi (1981)

६९- KIETH A.B. "A History of Sanskrit Literature" Oxford. १९६१-

७०- KILHORN F. -"Katyayan and Patanjali" Varanasi (१९६३)- "Notes on the Mahabhasya"

७१- PATHAK K.B. "The Age of Panini and Sanskrit as a spoken language" ABORI (१९३०)

७२- RAGHAVAN V. "Srinagar Prakash- " Appaya Dixita II and III" Paioc (१९४०)

७३- SHASTRI K.A NEELKANTH "A Note on the Rupavatar" Madras- (१९२७)

७४- S.VENKITASUBRAMONIA IYER-Prakriya Sarvasva -a critical study (Kerala University Publication) Trivandrum-1972

७५- WINTERNITZ M. History of Indian literature" Varanasi (१९६३)

७६- सारस्वतीसुषमा - वाराणसेय- सम्पूर्णानन्द संस्कृतविश्विद्यालयस्य शोध-पत्रिका

७७- सूर्योदयः (पत्रिका) भारतधर्ममहामण्डल-वाराणसी ।